# दशपाद्युणादिवृत्ति-संग्रहः

## तत्र द्वितीये भागे

आद्ये अनिर्ज्ञातकर्तृके वृत्ती, अन्त्या विट्ठलविरचिता





सम्पादकः–
पं० चन्द्रदत्तः शर्मा

# दशपाद्युणादिवृत्ति-संग्रहः




## तत्र द्वितीये भागे

आद्ये अनिर्ज्ञातकर्तृके वृत्ती, अन्त्या विट्ठलविरचिता






सम्पादकः-

पं० चन्द्रदत्तः शर्मा




# प्रकाशकीयम्

पाणिनीयव्याकरणस्य खिलपाठेषु उणादिपाठोऽन्यतमः। तस्य च पञ्चपादीरूपो दशपादीरूपश्च द्वौ पाठावुपलभ्येते। पाणिनीयवैयाकरणेषु कैश्चित् पञ्चपादीपाठ आदृतो व्याख्यातश्च, अपरैर्दशपादीपाठः। अनयोः पाठयोः कतरः पाठः पाणिनीय इत्यत्रापि विसंवदन्ते पाणिनीयाः। केचन पञ्चपादीपाठं पाणिनीयं मन्यन्ते, अपरे दश-पादीपाठम्।

उभयोरप्युणादिपाठयोरनेकैः पाणिनीयवैयाकरणैर्वृत्तयो विरचिताः। तासु काश्चनोपलभ्यन्ते, काश्चन कालकवलीभूता नाममात्रविज्ञेया बभूवुः।

विविधानामुणादिसूत्राणां प्रवक्तॄणां व्याख्यातॄणां चेतिवृत्तं संक्षेपेण **'दशपाद्युणादि-वृत्ति-संग्रहस्य** प्रथमभागस्योपोद्घाते निर्दशितम्। विस्तरेण जिज्ञासुभिरस्मदीयस्य 'संस्कृत-व्याकरण-शास्त्र का इतिहास' इति नाम्नो ग्रन्थस्य द्वितीयभागे चतुर्विंशतितम अध्यायो अनुशीलनीयः।

दशपाद्युणादिपाठस्याहत्य चतस्र एव वृत्तयोऽस्माभिरधिगताः। तासां सर्वासां **'दशपाद्युणादिवृत्ति-संग्रह'**नाम्ना प्रकाशनं विधीयते। तत्र प्रथमे भागे **'माणिक्यदेव'**-विरचिता सर्वप्राचीना विस्तृता वृत्तिर्मुद्राप्य प्रकाशं नीता। सम्प्रति द्वितीयभागेऽव-शिष्टास्तिस्रो वृत्तयः प्रकाश्यन्ते। तत्राद्ययोर्वृत्त्योर्विरचयित्रोर्नाम्नी न विज्ञायेते। अन्त्या खलु **विट्ठलाचार्येण** प्रक्रियाकौमुद्या उणादिप्रकरणे निबद्धा वर्तते।

काशीस्थे-सरस्वतीभवने विद्यमानस्य प्रथमाया वृत्तेर्हस्तलेखस्य मया बहोः कालात् पूर्वं प्रतिलिपिः कृताऽभूत्। अयं हस्तलेख आदित आरभ्य नवमपादस्याष्टादशसूत्र-पर्यन्तं विद्यते। हस्तलेखोऽयं प्रायेणाशुद्धिबहुलो वर्तते।

द्वितीयाया वृत्तेर्हस्तलेखः 'पुणे'नगरस्थे भण्डारकरप्राच्यशोधप्रतिष्ठाने विद्यते (संख्या ५९/१८६६-६८)। अयं हस्तलेख आदित आरभ्य अष्टमपादस्य सप्तचत्वा-रिंशत्तमसूत्रपर्यन्तं वर्तते। अयं हस्तलेखो मध्ये मध्ये त्रुटितः, अत्यन्तं भ्रष्टपाठश्च वर्तते।

तृतीया वृत्तिस्तु प्रक्रियाकौमुद्या विट्ठलाचार्यविरचिते प्रसादाख्ये व्याख्याने विद्यत इत्युक्तं प्राक्। प्रक्रियाकौमुद्यां तु रामचन्द्राचार्येणोणादिप्रकरणे पञ्चपादीपाठ-मनुसृत्य द्वादश सूत्राण्येव निर्दिष्टानि। विट्ठलाचार्येण तानि सूत्राणि तत्रैव

विवृतानि । तदनन्तरं विट्ठलाचार्येण दशपादीपाठमनुसृत्योणादिसूत्राणि व्याख्यातानि । तत्र प्रक्रियाकौमुद्यां निर्दिष्टानि पूर्वं व्याख्यातानि सूत्राणि तत्र तत्र प्रकरणे पुनर्न व्याख्यातानि । अस्माभिस्तु पूर्वव्याख्यातानि स्वप्रकरणे परित्यक्तानि सूत्राण्यपि तत्र तत्र यथास्थानं निवेशितानि ।

आसां तिसृणामशुद्धिबहुलानां वृत्तीनां सम्पादनं पण्डितचन्द्रदत्तशर्मणा महताऽऽयासेन अन्यासामुणादिवृत्तीनां साहाय्येन विहितम् । तदर्थमहमेनम् आशीर्वादैः संयुनज्मि । आशासे चेत्थमेवायमन्येषामपि वैदिकवाङ्मयस्य दुर्लभानां ग्रन्थानां सम्पादने प्रकाशने च बद्धपरिकरो भविष्यति ।

युधिष्ठिरो मीमांसकः

# दशपादयुणादिसूत्राणां विषयनिदर्शनपत्रम्

| | वृत्तिः (१) | वृत्तिः (२) | वृत्तिः (३) |
|---|---|---|---|
| प्रथमः पादः | १-२४[1] | ८५-११०[1] | १७३-१९०[1] |
| इकारान्ताः | १-१२ | ८५-९७ | १७३-१८० |
| ईकारान्ताः | १२ | ९७-७८ | १८०-१८१ |
| उकारान्ताः | १२-२२ | ९८-१०८ | १८१-१८९ |
| ऊकारान्ताः | २३-२४ | १०८-११० | १८९-१९० |
| द्वितीयः पादः | २५-२७ | १११-११३ | १९१-१९२ |
| ऋकारान्ताः | २५-२६ | १११-११२ | १९१ |
| ऐकारान्ताः | २६ | ११२ | १९२ |
| ओकारान्ताः | २६ | ११३ | १९२ |
| औकारान्ताः | २६-२७ | ११३ | १९२ |
| तृतीयः पादः | २८-३६ | ११४-१२५ | १९३-१९९ |
| ककारान्ताः | २८-३४ | ११४-१२३ | १९३-१९७ |
| खकारान्ताः | ३४-३५ | १२३-१२४ | १९७-१९८ |
| गकारान्ताः | ३५-३६ | १२४-१२५ | १९८-१९९ |
| घकारान्ताः | ३६ | १२५ | १९९ |
| चतुर्थः पादः | ३७-३८ | १२६-१२७ | २०० |
| चकारान्ताः | ३७ | १२६ | २०० |
| छकारान्ताः | ३७ | १२६ | २०० |
| जकारान्ताः | ३७-३८ | १२७ | २०० |
| पञ्चमः पादः | ३९-४७ | १२८-१३९ | २०१-२०६ |
| टकारान्ताः | ३९ | १२८ | २०१ |
| ठकारान्ताः | ३९ | १२८-१२९ | २०१ |
| डकारान्ताः | ४०-४१ | १२९-१३० | २०१-२०२ |
| ढकारान्ताः | ४१ | १३१ | २०२ |
| णकारान्ता नसहिताः | ४१-४७ | १३१-१३९ | २०२-२०६ |

१. अत्र सर्वत्र पृष्ठसंख्या निर्दिष्टा ।

———



# दशपादी-उणादिवृत्ति-संग्रहः

## [अज्ञातनाम्नो वृत्तिकारस्य वृत्तिः (१)]

### प्रथमः पादः

**अशवतॄभ्योऽनिः ॥१॥**

एभ्योऽनिः प्रत्ययः स्यात् । अश्नुते अश्नाति वा वनस्पतीनां तेज इति **अशनिः**—वज्रः । कर्त्तरि । अवति भूतानि **अवनिः** । कर्त्ता कर्म वा । तरत्यनेनेति **तरणिः** । कर्त्तरि कर्मणि करणे वा ॥

**आङि शुषेः सनश्छन्दसि ॥२॥**

आङ्पूर्वाच्छुषेः सनन्तादनिः स्याच्छन्दसि । आशुशुक्षतीति **आशुशुक्षणिः**—अग्नि-र्वायुश्च । कर्त्ता ॥

**उणादयो बहुलम्** [अ० ३।३।१] इति वचनादाचिकीर्षतीति **आचिकीर्षणिः** । विग्रहानुसारेण कर्त्राद्यर्था द्रष्टव्याः सर्वत्र धातवश्च । आजिहीर्षतीति **आजिहीर्षणिः**—श्रेणी ॥

**कृषेरादेश्च चः ॥३॥**

कृषेरनिः स्यादादेश्चकारादेशः । कर्षति कृषतीति वा **चर्षणिः**—कृषः ॥

**अदेर्मुट् च ॥४॥**

अदेरनिर्मुडागमश्च । अत्तीति **अद्मनिः**—अग्निरश्वो वा ॥

**वृतेः ॥५॥**

वर्ततेऽनयेति **वर्तनिः**—मार्गः ॥

**क्षिपेः किच्च ॥६॥**

क्षिपेरनिः स च कित् । क्षिप्यत इति **क्षिपणिः**—अस्त्रम्, वडिशम्, दण्डश्च ॥

**हसिसहोरुरिन् ॥७॥**

आभ्यामुरिन् स्यात् । हसति हासयति वा **हासुरिः** । सहतेऽर्थमिति **सहुरिः** । पृथिवीक्रोधनौ ॥

**भुवः किच् ॥८॥**

अस्मात् किच्प्रत्ययः । भवन्त्यस्यां भूतानीति **भुविः**—लोकस्थितिः ॥

………… ॥९॥

…………अस्यते तदिति **अस्थि**—कीकसम् । सजति सज्यते वा **सक्थि**—शरीरांशः ॥

………… ॥१०॥

… …………प्लुष्यते वा **प्लुक्षिः**—अग्निजठरे । कर्त्ता कर्म च । शुष्यतेऽनेन ………रांशः ॥

**अशेर्नित् ॥११॥**

अशेः क्सिर्निच्च । अश्नात्यश्नुतेऽनेन रूपमिति **अक्षि**…………॥

**…………॥१२॥**

…………नयतीति **नेमिः** ॥

**अर्त्तेरू च ॥१३॥**

अर्त्तेर्मिः स्याद् ऊ आदेशश्च । ऋच्छति इयर्त्ति……रपरत्वम् । कर्त्ता कर्म च ॥

**अशे रश च ॥१४॥**

अशेर्मिः स्याद् रशादेशश्च । अश्नात्यश्नुते वा भुवमिति **रश्मिः** ॥

**भुवः क्मिन् ॥१५॥**

भवन्त्यस्यां भावा इति **भूमिः** ॥

**दल्मिः ॥१६॥**

दल्मिरिति निपात्यते क्मिन्प्रत्यये । दल विदारणे चौरादिकः, अस्यतेर्वा दलभावो निपात्यते । अस्यत्यनेन दलयति वा **दल्मिः**—आयुधम् ॥

## वीज्याज्वरिभ्यो निः ॥१७॥

एभ्यो निः स्यात् । वी गत्यादिषु । वीयत इति **वेणिः**—केशबन्धः । कर्म । बाहुलकाण्णत्वं च । जिनातीति **ज्यानिः**—हानिः । ज्वर । ज्वरति ज्वरणं वा **जूर्णिः**—रोगः । कर्त्ता भावश्च ॥

## सृवृषिभ्यां कित् ॥१८॥

आभ्यां निः स च कित् । सरति सिर्सत्ति वा **सृणिः**—अग्न्यनिलजलानि । वृषु सेचने । वर्षतीति **वृष्णिः**—यादवो मेघो वा ॥

## अङ्गेर्नलोपश्च ॥१९॥

अङ्गेर्निप्रत्ययो नलोपश्च । अगिर्गत्यर्थः । अङ्गतीति **अग्निः**—हुताशनः ॥

## वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् ॥२०॥

एभ्यो निप्रत्ययो निच्च । वहत्युह्यते वा **वह्निः**—अग्निः । श्रयन्त्येतामिति **श्रेणिः**—सङ्घातः । युवन्त्यस्यामिति **योनिः**—प्राण्यन्तरप्रकृतिरुत्पत्तिस्थानं वा । श्रूयतेऽसाविति **श्रोणिः**—जघनम् । ग्लायन्त्यनेनेति **ग्लानिः**—दीनता हर्षक्षयश्च । **म्लानि**रपि तथा । [ओ] हाक् [ओ] हाङ् । हीयते जहातीति वा **हानिः** । ञित्वरा संभ्रमे । त्वरते त्वरणं वा **तूर्णिः** ॥

## घृणिः पृश्निः पार्ष्णिर्भूर्णिः ॥२१॥

एते शब्दा निपात्यन्ते । अगुणलोपागमविकाराः । घृ क्षरणदीप्त्योः । अस्य गुणाभावः। जिघर्तीति **घृणिः**—अग्निः रश्मिश्च । स्पृश । अस्य सकारलोपो गुणाभावश्च । स्पर्शनमात्रा **पृश्निः**—स्तोकं जीवश्च । स्पृशेर्वृद्धिरुपधायाः, षकारभावश्च । स्पृशत्यनयेति **पार्ष्णिः**—पादैकदेशः । भुवो रगागमोऽगुणत्वञ्च । भवतीति **भूर्णिः**—भूमिः ।

बाहुलकादन्येऽपि । धृ धारणे अस्य ऊकारादेशो रुगागमश्च[1] निपात्यते । धरणं **धूर्णिः**—धृतिः । श्यैङ् गतौ । अस्य संप्रसारणं निपात्यते । श्यायत इति **शिनिः**—राहोर्वर्णः । कु शब्दे आदादिकः, कुङ् अव्यक्ते शब्दे भौ० । अनयोरगुणत्वं निपात्यते णत्वञ्च प्रत्ययस्य । कौति कवते कूयते वा **क्वणिः**—विकलपाणिः । कर्त्ता कर्म च ॥

## वृदृभ्यां विन् ॥२२॥

१. कोषे तु 'रेफादेश उमागमश्च' इत्यशुद्धपाठः ।

आभ्यां विन् स्यात् । वृञ् वरणे । वृणाति इति **वर्विः**—धात्री । कर्त्ता । दॄ भये । दृणातीति **दर्विः** । कर्त्ता ॥

## जॄस्तॄश्रॄजागृभ्यः क्विन् ॥२३॥

एभ्यः क्विन् प्रत्ययो भवति । जॄष् वयोहानौ । जीर्यतीति **जीर्विः**—क्वाथः । स्तॄञ् आच्छादने क्रै० । स्तृणाति इति **स्तीर्विः**— अध्वर्युः, तृणजातिर्वा । कर्त्ता । श्रॄ हिंसायाम् । श्रृणातीति **शीर्विः**— हिंस्रः । कर्त्ता । जागर्तीति **जागृविः** —अग्निः राजा च । कर्त्ता ॥

## दिवो द्वे दीर्घश्चाभ्यासस्य ॥२४॥

दिवो धातोः क्विन् प्रत्ययो भवति द्वे चास्य रूपे भवतो दीर्घश्चाभ्यासस्य । दिवु क्रीडादिषु दै० । दीव्यतीति **दीदिविः**—अन्नम् । कर्त्ता ॥

## कृविघृष्विछविस्थविदविकिकिदीविः ॥२५॥

एते शब्दा निपात्यन्ते क्विन्प्रत्यये निरुद्धाः । डुकृञ् करणे ता०, कृञ् हिंसायां सौ०, कृञ् करणे भौ० । करोति कृणोति करतीति वा **कृविः**—कारुः । कर्त्ता । घृ क्षरणदीप्त्योः जौ० । अस्य षुगागमो निपात्यते । जिघर्तीति **घृष्विः**—वायुरग्निश्च । कर्त्ता । छद संवरणे चौ० णिजन्तः । अस्य णिचो लोपे लोपह्रस्वौ निपात्येते । छाद्यतेऽनयेति **छविः**—त्वक् । भावः करणं वा । ष्ठा ग० । अस्य ह्रस्वं च निपात्यते । तिष्ठतीति **स्थविः**— भुजङ्गमोऽग्निश्च । कर्त्ता । डुदाञ् जौ० । अस्य ह्रस्वं च निपात्यते । ददातीति **दविः**—दाता । कर्त्ता । कु शब्दे अ०, कुङ् अव्यक्ते शब्दे भौ० । अस्य इत्वं निपात्यते प्रत्ययस्य च किः । कौति कवते वा **किकिः**—विद्वान् शब्दकारो वा । कर्त्ता । दिवु क्रीडादिषु दै० । अस्य दीर्घत्वं निपात्यते । दीव्यतीति **दीविः**—कितवः । बहुलादन्येऽपि । अटन्त्यस्यां प्रायेण श्वापदादय इति **अटविः**—अरण्यम् । अधिकरणम् ॥

## पातेर्डतिः ॥२६॥

पातेर्धातोर्डतिः प्रत्ययो भवति । पा रक्षणे अ० । पातीति **पतिः**—भर्त्ता । कर्त्ता ॥

## अमेरतिः ॥२७॥

अमेर्धातोरतिः प्रत्ययो भवति । अम गत्यादिषु भौ० । अमतीति **अमतिः**—व्याधिः गतिर्वा । कर्त्ता ॥

## वहिवस्यर्तिभ्यश्चित् ॥२८॥

एभ्यो धातुभ्योऽतिः प्रत्ययो भवति स चित्संज्ञः । वह प्रापणे । वहतीति **वहतिः**—वायुरनड्वांश्च । कर्त्ता । वस निवासे भ्वौ० । वसन्त्यस्यामिति **वसतिः**—आलयः । अधिकरणम् । ऋ गतौ भ्वौ० जौ० । ऋच्छति इयर्त्ति अर्यते वा **अरतिः**—वायुर्मरणं च । कर्त्ता कर्म च ॥

## अञ्चेः को वा ॥२९॥

अञ्चेर्धातोरतिः प्रत्ययो भवति चित्संज्ञः ककारश्चान्तादेशो वा । अञ्चु ग० भ्वौ० । अञ्चति अञ्च्यते वा **अंकतिः, अञ्चतिः**—ब्रह्माग्न्यनिलाः । कर्त्ता कर्म च ॥

## हन्तेरं ह च ॥३०॥

हन्तेर्धातोरतिः प्रत्ययो भवति चित् अंह इत्ययमादेशः। हन्ति हन्यते वा **अंहतिः**—पन्थाः, कालः, रथश्च । कर्त्ता कर्म च ॥

## रमेर्नित् ॥३१॥

रमेर्धातोरतिः प्रत्ययो भवति नित्संज्ञः । रमन्तेऽस्यामिति **रमतिः**—क्रीडा । अधिकरणम् ॥

## सुञो रिन्दीर्घश्च ॥३२॥

सुञो धातो रिन् प्रत्ययो भवति दीर्घश्च धातोः । सुनोति सूयते वा **सूरिः**—पण्डितः । कर्त्ता कर्म च ॥

## अदिशदिभूशुभिभ्यः क्रिन् ॥३३॥

एभ्यः क्रिन् प्रत्ययः । अत्ति अद्यते वा **अद्रिः**—पर्वतः । कर्त्ता कर्म च । शीयते इति **शद्रिः**—वज्रं गिरिश्च । कर्त्ता । भवतीति **भूरिः**—बहुः । कर्त्ता । शोभत इति **शुभ्रिः**—दर्शनीयः। कर्त्ता ॥

## वंक्र्यादयश्च ॥३४॥

वंक्र्यादयः शब्दा निपात्यन्ते क्रिन्प्रत्यये निरुद्धाः। वकि कौटिल्ये, वञ्चु गतौ । वञ्चतेः कुत्वं निपात्यते । वञ्चते वंकति वा **वंक्रिः**—शल्यम् । कर्त्ता । मकि मण्डने । मंकत इति **मंक्रिः**—शवः । कर्त्ता । अकि लक्षणे । अंकत इति **अंक्रिः**—चिह्नम् । कर्त्ता ॥

## राशतिभ्यां त्रिप् ॥३५॥

आभ्यां त्रिप् प्रत्ययो भवति । रा दाने, रै शब्दे । राति रायति वा **रात्रिः**—क्षपा । कर्त्ता । शतिः सौत्रो धातुः । शततीति वा **शत्रिः**—हस्ती । कर्त्ता ॥

**अदेस्त्रिनि च ॥३६॥**

अदेर्धातोस्त्रिनिः प्रत्ययो भवति त्रिप् च । अत्ति यः स्वाध्यायमिति **अत्री, अत्रिः** वा—ऋषिः । स्वरे रूपे च विशेषः ॥

**मृकणिभ्यामीचिः ॥३७॥**

आभ्यां धातुभ्यामीचिप्रत्ययो भवति । मृङ् प्राणत्यागे । म्रियत इति **मरीचिः**—रश्मिः । कर्त्ता । कण निमीलने । कणयति कण्यते वा **कणीचिः**—चक्षुः,प्राणी । कर्त्ता कर्म च ॥

**वेञो डित् ॥३८॥**

वेञो धातोरीचिप्रत्ययो भवति डित्संज्ञः । वपति ऊयते वा **वीचिः**—ऊर्मिः । कर्त्ता कर्म च ॥

**श्वयतेश्चित् ॥३९॥**

श्वयतेर्धातोरीचिप्रत्ययो भवति चित्संज्ञः। श्वयतीति **श्वयीचिः**—चन्द्रमा वायुश्च । कर्त्ता ॥

**नौ संजेर्घथिन् ॥४०॥**

नावुपपदे संजेर्धातोर्घथिन् प्रत्ययो भवति चित्संज्ञः । निषजति निषज्यते वेति **निषंगथिः**—रथकवचं तूणश्च । कर्त्ता कर्म च ॥

**उद्यर्त्तेश्चित् ॥४१॥**

उद्युपपदे अर्त्तेर्धातोर्घथिन् प्रत्ययो भवति चित्संज्ञः । उदृच्छति उदियर्त्ति उदर्यते वेति **उदरथिः**—वप्रः समुद्रो वा काष्ठं च । कर्त्ता कर्म च ॥

**सर्त्तेर्णित् ॥४२॥**

सर्त्तेर्धातोर्घथिन् प्रत्ययो भवति णिच्च । धावति सिसर्त्ति वा **सारथिः**—रथवाहः। कर्त्ता ॥

**अतेरिथिन् ॥४३॥**

अतेरिथिन् प्रत्ययो भवति । अततीति **अतिथिः**—याचकः ॥

**अमेर्गुरी रश्च लो वा ॥४४॥**

अमेर्धातोर्गुरीप्रत्ययो भवति रेफस्य च लकारो वा । अम गत्यादिषु । अमतीति **अंगुरिः, अंगुलिः** वा—करशाखा । कर्त्ता ॥

## इन् ॥४५॥

इन् प्रत्ययो भवति सर्वधातुभ्यः। पद्यते **पदिः**— मोक्षमार्गः। कर्त्ता। चिट परप्रैष्ये। चेटतीति **चेटिः**–प्रेष्या। कर्त्ता। वट वेष्टने। वटतीति **वटिः**—तंतुः। कर्त्ता। कटी गतौ। कटति कटयते वा **कटिः**— शरीराङ्गम्। कर्त्ता कर्म च। बल प्राणने। बलति बल्यते वा **बलिः**— असुरः देवेज्या वा। कर्त्ता कर्म च। कु, कुङ्। कौति कवति कूयते वा **कविः**—काव्यकृत्, शब्दकारः। कर्त्ता कर्म च। रौति रूयते वा **रविः**—भानुः। कर्त्ता कर्म च। पुनातीति **पविः**—पवित्रं वज्रं च। कर्त्ता॥

## हृपिशिरुहिवृतिविदिकीर्त्तिभ्यश्च ॥४६॥

एभ्यो धातुभ्य इन् प्रत्ययो भवति। पृथग्योगकरणं वक्ष्यमाणकित्त्वनिरासार्थम्। हृञ् हरणे भ्वा०, हृ प्रसह्यकरणे जो०। हरति जिहर्त्तीति **हरिः**—विष्णुर्वा नरश्च। कर्त्ता।

**विष्णौ शाखामृगे शक्रे सिंहदर्दुरवाजिषु।**
**वर्णे च रुक्मकपिले हरिशब्दः प्रयुज्यते॥**
**यमानिलेन्द्रचन्द्रार्ककपिमण्डूकवाजिषु।**
**शुककेशर्वासहाश्मवर्णादिषु हरिं स्मरेत्॥**

पिशति पिश्यते वा **पेशिः**—केशोर्णमांसलवः पेशलश्च। कर्त्ता कर्म च। रोहतीति **रोहिः**—जन्म। कर्त्ता। वर्तते वृत्यते वा **वर्त्तिः**–द्रव्यं चेलवेष्टनं वा। कर्त्ता कर्म च। वेत्ति विंदति विनत्ति विद्यते वा **वेदिः**—त्रेताग्न्यधिष्ठानम्। कर्त्ता। कीर्त्तिः सौत्रो धातुः। कीर्त्तनं कीर्त्यंते वा **कीर्तिः**— ख्यातिः। भावः कर्म च॥

## इगुपधात् कित् ॥४७॥

इगुपधाद् धातोरिन् प्रत्ययो भवति किच्च। भिनत्तीति **भिदिः**—वज्रं सूचकश्च। कर्त्ता। छिनत्तीति **छिदिः**—परशुः। कर्त्ता। अहरहः विलश्यमानं जनं शोचतीति **शुचिः**—विद्वान्। कर्त्ता। रोचत इति **रुचिः**–भानुः कान्तिर्वा। ऋषतीति **ऋषिः**। कृष विलेखने। तौ० भ्वा०। कृषति कर्षति वा तस्मिति **कृषिः**—वैश्यवृत्तिः। कर्म॥

## भ्रमेः संप्रसारणञ्च ॥४८॥

भ्रमेर्धातोरिन् प्रत्ययो भवति संप्रसारणञ्च, किच्च। भ्राम्यति भ्रमतीति वा **भृमिः**—वायुः। कर्त्ता॥

## क्रमितमिस्तम्भामत इच्च ॥४९॥

एभ्यो धातुभ्य इन् प्रत्ययो भवति किच्च इकारश्चैतेषां भवत्यकारस्य। क्राम्यति

क्रम्यते वा **क्रिमिः**—प्राणी । कर्त्ता कर्म च । तमु कांक्षायाम् । ताम्यतीति **तिमिः**—मत्स्यः । कर्त्ता । ष्टभि प्रतिबन्धे, स्तंभुः सौत्रः । स्तंभते स्तभ्नाति वा **स्तिभिः**—समुद्रः । कर्त्ता ॥

**मनेरुच्च ॥५०॥**

मनेर्धातोरिन् प्रत्ययो भवति अकारस्य चोकारः । मन्यते मनुते वा **मुनिः**—ऋषिः। कर्त्ता ॥

**वल्लेर्व लिरहिरण्ये ॥५१॥**

वल्लेर्धातोरिन् प्रत्ययो भवति वलिश्चादेशोऽहिरण्येऽर्थे । वल्ल इति सौत्रो धातुः । वल्लति वल्ल्यते वा **वलिः**—त्वङ्मांससंकोचः । कर्त्ता कर्म च । अहिरण्य इति किम्? **वल्लिः**—हिरण्यशलाका ॥

**वसिवपिवदिराजिव्रजिध्वजिसदिहनिकमिकषिवाशिवारिभ्य इन् ॥५२॥**

एभ्यो धातुभ्य इन् प्रत्ययो भवति, पुनः प्रत्ययारम्भबलाण्णित्वं च । वसतीति **वासिः**—रक्षणाभांडम् । कर्त्ता । वपन्त्यस्यामिति **वापिः**—पुष्करिणी । अधिकरणम् । वदति तस्यामिति **वादिः**—वीणा । अधिकरणम् । राजत इति **राजिः**—रेखा तिलकादिश्च । कर्त्ता । व्रजतीति **व्राजिः**—मनः । कर्त्ता । ध्वजतीति **ध्वाजिः**—अश्वः । कर्त्ता । सीदतीति **सादिः**—अश्वारोहः। कर्त्ता । हन हिंसागत्योः आ० । हंतीति **हानिः**—अर्थनाशः। कर्त्ता । काम्यत इति **कामिः**—कामुकः । कर्म । कषतीति **काषिः**—हिंसकः, उपकरणभाण्डं च । कर्त्ता । वाशृ शब्दे । वाशति वाश्यत इति **वाशिः**—जलदः । कर्त्ता कर्म च । वृञ् वरणे ण्यंतः । वार्यते तदिति **वारि**—जलम् । कर्म ॥

**नहो भश्च ॥५३॥**

नहो धातोरिन् प्रत्ययो भवति भश्चान्तादेशः । नह्यत इति **नाभिः**—चक्रमध्यं प्राण्यवयवश्च । कर्त्ता ॥

**कृषेर्वृद्धिश्छन्दसि ॥५४॥**

कृषेर्धातोरिन् प्रत्ययो भवति, वृद्धिश्च धातोश्छन्दसि विषये । कर्षति कृषतीति वा तामिति **कार्षिः**—कर्षकः । कर्म । छन्दसि किम् ? **कृषिः** । अत्र **इगुपधाद्** [द० उ० १।४७] इति **इन्** ॥

**श्रृ शकुनौ ॥५५॥**

शॄ इत्येतस्माद्धातोरिन् प्रत्ययो भवति शकुनौ गम्यमाने। शृणाति **शारिः**—शकुनिः। कर्त्ता। शकुनाविति किम्? **शरः**—शस्त्रं शूलम्॥

**कृञ उदीचां कारिषु॥५६॥**

कृञो धातोरिन् प्रत्ययो भवति उदीचामाचार्याणां मतेन कारिष्वभिधेयेषु। करोतीति **कारिः**—शिल्पी। कर्त्ता। उदीचामिति किम्? **करिः**—विष्णुः। अत्र इन्॥

**जनिघसिभ्यामिण्॥५७॥**

आभ्यां धातुभ्यामिण् प्रत्ययो भवति। जायते जजंति जन्यते वा **जनिः**—प्रादुर्भावः। कर्त्ता कर्म च। अत्ति अत्यर्थमिति **घासिः**—अग्निः। कर्त्ता॥

**अजातिभ्याम्॥५८॥**

आभ्यां धातुभ्यामिण् प्रत्ययो भवति। अजति वीयते वा **आजिः**—युद्धम्। कर्त्ता कर्म च। अततीति **आतिः**—पक्षी। कर्त्ता॥

**पादे च॥५९॥**

पादशब्द उपपदे अजातिभ्यामिण् प्रत्ययो भवति। **पादस्य पदाज्याति**[अ० ६।३।५२] इति पद्भावः। पादाभ्यामजतीति **पदाजिः, पदातिः**—हस्त्यश्वरथविरहितो योधः। कर्त्ता॥

**अशिपणाय्यो रुड्लुकौ च॥६०॥**

आभ्यामिण् प्रत्ययो भवति यथासंख्यं रुड्लुकौ चागमादेशौ भवतः। अश्नुते अश्नाति वा **राशिः**—यवादिसंघातः, ग्रहनक्षत्रं च। कर्त्ता। पणायन्त्यनेनेति **पाणिः**—हस्तः। करणम्। आयप्रत्ययस्य लुक्॥

**वेञो डित्॥६१॥**

वेञो धातोरिण् प्रत्ययो भवति डिच्च। वयतीति **विः**—तन्तुवायः। कर्त्ता॥

**प्रहरतेः कूपे॥६२॥**

प्रशब्द उपपदे हरतेर्धातोरिण् प्रत्ययो भवति डिच्च कूपेऽभिधेये। प्रह्रियतेऽस्मादुदकमिति **प्रह्रिः**—कूपः। अपादानम्॥

**नौ व्येञो यलोपः पूर्वपदस्य दीर्घः॥६३॥**

नावुपपदे व्येञो धातोरिण् डिच्च यलोपो भवति पूर्वपदस्य च दीर्घः। निवीयतेऽस्मादिति **नीविः**—अधोवासः॥

### समाने ख्यः स चोदात्तः॥६४॥

समाने शब्द उपपदे ख्याधातोरिण् प्रत्ययो भवति डिच्च यलोपश्च समानस्य स आदेशः स चोदात्तः। समानं ख्यायते जनैरिति **सखा**—वयस्यः। कर्म॥

### आङि श्रिहनिभ्यां ह्रस्वश्च॥६५॥

आङ्युपपदे श्रिहनिभ्यां धातुभ्यामिण् प्रत्ययो डिच्च ह्रस्वश्चादेशः पूर्वस्य। आश्रयन्ति तामिति **अश्रिः**—कोणः। कर्म। आहन्तीति **अहिः**—सर्पः। कर्त्ता॥

### अच इः॥६६॥

अजन्ताद्धातोरिप्रत्ययो भवति। आरौति आरूयते वेति **रविः**—भास्करः। कर्त्ता कर्म च। पुनाति पूयते वा **पविः**—वायुः। कर्त्ता कर्म च। भवतीति **भविः**—सत्ता विधिश्च। कर्त्ता। बिभर्त्ति भ्रियते वा **भरिः**—वसुधा। कर्त्ता कर्म च॥

### खनिकष्यञ्ज्यसिवसिध्वनिसनिग्रन्थिचरिभ्यश्च॥६७॥

एभ्य इप्रत्ययो भवति। खन्यत इति **खनिः**—तटाकम्। कर्म। कष हिंसार्थः। कषन्त्यनयेति **कषिः**—कुद्दालः। करणम्। अनक्तीति **अञ्जिः**—तेजः गतिश्च। कर्त्ता। अस्यतीति **असिः**—खड्गः। कर्त्ता। षण संभक्तौ भ्वा०, षणु दाने ता०। सनति सनोति वा **सनिः**—भक्तिः दानं वा। कर्त्ता। ग्रथ्नाति ग्रथ्यते वा **ग्रन्थिः**—बन्धः। कर्त्ता कर्म च। स्वरे भेदः। चर्यतेऽस्मिन्निति **चरिः**—विषयः। अधिकरणम्॥

### उभेर्द्वं च॥६८॥

उभेर्धातोरिः प्रत्ययो भवति द्व इत्ययं चादेशः। उभ उम्भ पूरणे तौ०। उभति उम्भते वा उभाविति **द्वौ**। कर्त्ता कर्म च॥

### वृतेश्छन्दसि॥६९॥

वृतेर्धातोरिश्छन्दसि विषये। वर्त्तत इति **वर्त्तिः**—द्रव्यं दीपाङ्गं च। कर्त्ता॥

### भुजेः किच्च॥७०॥

भुजेरिः किच्च। भुज, भुजो। भुनक्ति भुञ्जति भुज्यते वा **भुजिः**—राजा कुटिलश्च। कर्त्ता कर्म च॥

### कॄगॄशॄपॄकुटिभिदिछिदिभ्यश्च॥७१॥

एभ्य इः किच्च। किरति कीर्यते वा **किरिः**—मूषिका गर्त्तश्च। कर्त्ता कर्म च।

गृणाति गीर्यते वा **गिरिः**—पर्वतः। कर्त्ता कर्म च। शृणाति शीर्यते वा **शिरिः**—शलभः पातालं च। कर्त्ता कर्म च। पृणाति पूर्यते वा **पुरिः**—राजा। कर्त्ता कर्म च। कुटतीति **कुटिः**—शरीरम्। कर्त्ता। भिनत्तीति **भिदिः**—प्रहरणम्। कर्त्ता। छिनत्तीति **छिदिः**—शस्त्रम्। कर्त्ता॥

**कुंठिकम्प्योर्नलोपश्च ॥७२॥**

आभ्यामिः किच्च नलोपश्च। कुंठतीति **कुठिः**—देह आलयश्च। कर्त्ता। कंपत इति **कपिः**—अग्निर्वानरश्च। कर्त्ता॥

**वसेस्तिप् ॥७३॥**

वसेर्धातोस्तिप्प्रत्ययो भवति। वस निवासे भ्वा०, वस आच्छादने अ०। वसति वस्ते तस्मिन्नाहारौषधयुक्तमन्नमिति **वस्तिः**—अधःकायप्रदेशः चर्ममयः पटश्च। अधिकरणम्॥

**प्रथेर्निच्च ॥७४॥**

प्रथेर्धातोस्तिप्प्रत्ययो भवति निच्च। प्रथ्यतेऽनयेति **प्रस्तिः**। करणम्॥

**दृणातेः किद्ध्रस्वश्च ॥७५॥**

दृणातेस्तिप् किच्च ह्रस्वश्च। दीर्यत इति **दृतिः**—प्लवः। कर्म॥

**पातेरतिः ॥७६॥**

पातेरतिः प्रत्ययः। पातीति **पातिः**—रक्षिता प्रभुर्वा। कर्त्ता॥

**वातेर्नित् ॥७७॥**

वातेरतिः प्रत्ययो नित्संज्ञः। नित्त्वमाद्युदात्तार्थम्। वातीति **वातिः**—गन्धमिश्रः पवनः। कर्त्ता॥

**तनोतेर्ड्रिः ॥७८॥**

तनोति तन्यते वा **तन्द्रिः**—संख्या। कर्त्ता कर्म च॥

**जीर्यतेः क्विन् व च ॥७९॥**

जीर्यतेः क्विन् भवति रेफस्य च वादेशः। जीर्यत इति **जीविः**—शरीरम्। कर्म॥

**प्रहेरनिः ॥८०॥**

गृह्णाति गृह्यते वा **ग्रहणिः**—उदरान्तःस्थानं, यत्राहारः पच्यते। कर्त्ता कर्म च ॥

॥ इतीदन्ताः ॥

**अवितॄस्तृतन्त्रिभ्य ईः ॥८१॥**

एभ्यो धातुभ्य ईः प्रत्ययो भवति। अवति अव्यते वा **अवीः**—राजा स्त्री च। कर्त्ता कर्म च। तरति तीर्यते वा **तरीः**—वायुः प्लवश्च। कर्त्ता कर्म च। स्तृणाति स्तीर्यते वा **स्तरीः**—मेघः संख्या। कर्त्ता कर्म च। तन्त्र्यतेऽनयेति **तन्त्रीः**—शुकस्त्री, युवादिः। करणम् ॥

**यापोः किद् द्वे च ॥८२॥**

आभ्यामीप्रत्ययः किद् द्वे चानयो रूपे भवतः। यात्यनेन अपुनरावृत्तिपदमिति **ययीः**—मोक्षमार्गः। करणम्। पिबति पाति वा **पपीः**—आदित्यः। कर्त्ता ॥

**लक्षेर्मुट् च ॥८३॥**

लक्षेरीर्मुडागमश्च। लक्षयति पुण्यकृत् लक्ष्यते वा पुण्यकृतेति **लक्ष्मीः**—श्रीः। कर्त्ता कर्म च ॥

**वातप्रमीः ॥८४॥**

अयं निपात्यत ईप्रत्यये। वातं प्रमिणोतीति **वातप्रमीः**—शमीवृक्षः पक्षी च। कर्त्ता ॥

॥ इति ईदन्ताः ॥

**कृवापाजिमिस्वदिसाध्यशूभ्य उण् ॥८५॥**

एभ्य उण्। निरनुबन्धकग्रहणे सामान्यस्यापि ग्रहणमिति। करोति कृणोति करतीति वा **कारुः**—वेधाः शिल्पी चन्द्रश्च। कर्त्ता। वा आ०, ओवै शोषणे भौ०। वाति वायति द्रव्याणीति **वायुः**—मारुतः। कर्त्ता। पिबन्त्यनेन तैलादिद्रव्यमिति **पायुः**—अपानस्थानम्। करणम्। जयन्त्यनेन रोगानिति **जायुः**—औषधम्। डुमिञ् प्रक्षेपणे। मीयतेऽनेनेति **मायुः**—मानम्। करणम्। अथवा गां मिनोतीति **गोमायुः**—शृगालः। कर्त्ता। स्वद्यतेऽनेनेति **स्वादुः**—रुच्यम्। करणम्। स्वदनं वा **स्वादु**—भावः। साधयति साध्नोतीति वा परकृत्यानीति **साधुः**—कर्मशीलः। कर्त्ता। अश्नुते क्षिप्रमिति **आशु**—क्षिप्रं व्रीहिजातिश्च। कर्त्ता।।

**छन्दसीणः ॥८६॥**

छन्दसि विषये इण उण्। एतीति **आयुः**—जीवनम्। कर्त्ता। अथवा उर्वश्याः

किल पुत्रो जटायुः—गृध्रराजः ॥

दृसनिजनिचरिचटिरहिभ्यो ञुण् ॥८७॥

दरति दृणाति दीर्यते वा इति दारु काष्ठम् । कर्त्ता कर्म च । सनति सनोतीति वा सानु—पर्वतैकदेशः । कर्त्ता । जायते जजन्ति जन्यते वा इति जानुः—शरीराङ्गम् । कर्त्ता कर्म च । चरन्ति यत्र नेत्राणीति चारु—दर्शनीयः । अधिकरणम् । चट भेदने । चाटयतीति चाटु—पटुर्जनः प्रियवादी शिष्यश्च । कर्त्ता । रह्यतेऽनेनेति राहुः । प्रत्ययान्तरकरणं स्वरार्थम् । द्व्यनुबन्धग्रहणं जनिवध्योश्च [अ० ७।३।३५] इति जनेर्ह्रस्वप्रतिषेधार्थं वृद्धिप्रतिषेधो मा भूदिति तेन सिद्धं जानु इति ॥

किंजरयोः श्रिणः ॥८८॥

किं जरा एतत्पूर्वाभ्यां (धातु)भ्यां ञुण् प्रत्ययः । किमपि शृणातीति किंशारुः—धान्यशूकः । कर्त्ता । जरां प्राप्य योनौ एति·········कर्त्ता ॥

त्रो रश्च लः ॥८९॥

तॄ ऋ इत्येताभ्यां ञुण् अनयोश्च कृतवृद्धयो रेफस्य ल·········। तरन्त्यनेन वर्णा इति तालु—वक्त्रैकदेशः । करणम् । ऋच्छति इयर्ति अर्यते वा आलु—श्लेष्मातकम् । शाकमिति एके । कर्त्ता कर्म च ॥

कृके वचः कश्च ॥९०॥

कृकशब्दपूर्वाद् वचेर्ञुण् कश्चान्तादेशः । कृकं वक्ति ब्रवीति वा कृकवाकुः—कुक्कुटः । कर्त्ता ॥

भृमृशीतॄचरित्सरितनिधनिमिमस्जिभ्य उः ॥९१॥

एभ्य उः प्रत्ययः । बिभर्त्ति भरतीति वा प्राणिन इति भरुः—समुद्रः । कर्त्ता । भ्रियते वाऽसौ इति भरुः । कर्म । म्रियन्तेऽस्मिन् प्राणिनो जलार्थिन इति मरुः—जलतृणतरुवर्जितो देशः । अधिकरणम् । शेतेऽत्यर्थमिति शयुः—अजगरः । कर्त्ता । तरन्ति यं पुष्पफलार्थिन इति तरुः—वृक्षः । चरन्ति तस्माद्देवपितृभूतानीति चरुः—उपहारः । अपादानम् । त्सरतीति त्सरुः—आयुधग्रहणैकदेशः । कर्त्ता । तनोति आहारजातं प्राप्य इति तनुः—देहः । कर्त्ता । धनतीति धनुः । कर्त्ता । डुमिञ् । मीयतेऽसौ इति मयुः—तुरङ्गवदनः प्राकृतम् । कर्म । मज्जन्ति अम्भसि इति मज्जुः—पक्षी । पक्षे न्यंक्वादित्वात्कुत्वम् ॥

अणश्च ॥९२॥

उः । अणतीति अणुः—सूक्ष्मार्थः । कर्त्ता ॥

## धान्ये नित् ॥९३॥

धान्ये गम्यमाने अण उर्नित्संज्ञः । अण्यते प्राणिभिरिति **अणुः**—धान्यविशेषः । कर्म । **उणादयो बहुलम्** [अ० ३।३।१] इति बहुलवचनादन्यतोऽपि उः प्रत्ययः । कटतीति **कटुः**—रसः । कर्त्ता ॥

## शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च ॥९४॥

एभ्य उः नित्संज्ञः । शृणातीति **शरुः**—क्रोधः । कर्त्ता । स्वरतीति **स्वरुः**—वज्रम् । कर्त्ता । स्निह्यतीति **स्नेहुः**—चन्द्रमाः । कर्त्ता । त्रपते तेजसा सृष्टिमिति **त्रपुः**—सीसकम् । कर्त्ता । अस्यन्ति तस्माज्जाते जीर्णे कलेवरे इति **असवः** । कर्त्ता । वसति सुकृतमिति **वसु**—हिरण्यम् । कर्त्ता । वस्ते वा भाग्ययुक्तो जनान् इति **वसुः**—वनरत्नदेवाः सारश्च । आहन्ति आहारजातमिति **हनुः**—वक्त्रैकदेशः । कर्त्ता । क्लिदू आर्द्रीभावे ण्यन्तः । क्लेदयति चक्षुर्मनांसीति **क्लेदुः**—चन्द्रमाः । कर्त्ता । बन्ध बन्धने । बध्नाति स्नेहेनेति **बन्धुः**—स्वजनः । कर्त्ता । मन्यते मनुते वा **मनुः**—प्रजापतिः । कर्त्ता ॥

## स्यन्देः सम्प्रसारणं धश्च ॥९५॥

स्यन्देर्उर्निच्च सम्प्रसारणं च धश्चान्तादेशः । स्यन्दतेऽत्यर्थमिति **सिन्धुः**—नदी । कर्त्ता ॥

## उन्देरिच्चादेः ॥९६॥

उन्देर्धातोरुः प्रत्ययो भवति निच्च इच्चादेः । उनत्ति तेजसः चक्षुर्मनांसीति **इन्दुः**—चन्द्रमाः, हरचूडामणिः । कर्त्ता ॥

## ईषेः किच्च ॥९७॥

ईषेर्धातोरुः प्रत्ययो भवति किच्च निच्च इच्चादेरादेशः । ईष उञ्छे । ईष्यत इति **इषुः** । कर्म ॥

## स्कन्देर्लोपश्च ॥९८॥

स्कन्देर्उर्निच्च आदिलोपश्च । स्कन्दतेऽस्मिन्नन्नजाते इति **कन्दुः**—पाकस्थानम् । अधिकरणम् ॥

## सृजेरजुम् च ॥९९॥

सृजेरुः अजुमागमश्च आदिलोपश्च । सृजन्ति तां सृज्यते………… । आम्रेडनक्रिया । कर्म ॥

## कृतेराद्यन्तविपर्ययश्च ॥१००॥

कृतेर्गुनिच्चाद्यन्तवर्ण······ ····। कृती वेष्टने तौ०। कृत्यतेऽनेनेति तर्कुः—सूत्रवेष्टनम् ।।

**नावञ्चेः ।।१०१।।**

नावुपपदेऽञ्चेर्गुनिच्च। नियतमञ्चतीति न्यङ्कुः—मृगः। कर्त्ता। न्यङ्क्वादित्वात्कुत्वम् ।।

**फलिपाटिनमिमनिजनां गुक्पटनाकधताश्च ।।१०२।।**

एभ्य उः निच्च·················गुक्, पट, नाक, ध'त, इत्येते आदेशा आगमाश्च भवन्ति। फलतीति फल्गुः—असारम्। कर्त्ता। ·········जनः। कर्त्ता। नम्यतेऽनेनेति नाकुः—वल्मीकम्। करणम्। मन्यते तदतिशयेन जना इति मधु—माध्वी·········। जनी। जायते तदिति जतुः—लाक्षानिर्यासः। कर्त्ता ।।

**बलेर्गुक् च ।।१०३।।**

वलेर्धातोरुः गुक् चागमः। वल संवरणे। वलतीति वल्गु—असारं दर्शनीयं च। कर्त्ता ।।

**शः कित् सन्वच्च ।।१०४।।**

शो अस्मादुः किच्च निच्च, सन्वच्चास्मिन् कार्यं भवति। श्यति मातरं स्तनं प्राप्येति शिशुः—बालकः। कर्त्ता ।।

**यो द्वे च ।।१०५।।**

या एतस्मादुः किच्च द्वे चास्य रूपे भवतः। यान्ति तेन सुकृतकर्मेति ययुः—अश्वोऽश्वमेधीयः स्वर्गमार्गश्च। करणम् ।।

**कुर्भ्रश्च ।।१०६।।**

भृ एतस्मात् कुः प्रत्ययो भवति द्वे चास्य रूपे भवतः। बिभर्त्ति भरति वा तेज इति बभ्रुः—कपिलो वर्णः नकुलो वा। कर्त्ता। प्राक्प्रत्ययनिर्देशश्चक्र्वादीनां प्रसिद्धयर्थः। करोत्यसाध्यान्यपि कर्माणीति चक्रुः—विष्णुः। कर्त्ता। आहन्तीति जघ्नुः—इन्द्रः। कर्त्ता। तरतीति ततरुः—पतङ्गः। कर्त्ता। पृणातीति पपुरुः—चन्द्रमाः समुद्रश्च। कर्त्ता। पूर्यतेऽसौ पपुरुः। कर्म ।।

**पृभिदिव्यधिगृधिधृषिहृषिभ्यः ।।१०७।।**

एभ्यः कुः। पृणाति पूर्यते वा पुरुः—विस्तीर्णं लोकश्च। कर्त्ता कर्म च। भिनत्तीति भिदुः—वज्रम्। कर्त्ता। विध्यतीति विधुः—आयुधः शशिवायुरग्निरश्वश्च।

कर्त्ता । गृध्यतीति **गृधुः**—अभिलाषः । कर्त्ता । धृष्णोतीति **धृषुः**—प्रगल्भः उत्साहो वा । कर्त्ता । हृष्यतीति **हृषुः**—हृषवो नाम सूर्याग्निशशिनः ऋजुर्वा । कर्त्ता ॥

**कृग्रोरुच्च ॥१०८॥**

कृ गृ इत्येताभ्यां कुरुकारश्चान्तादेशः । । कीर्णमनेन धर्मबीजं यश इति **कुरुः**—राजर्षिः । कर्त्ता । गिरति गृणाति तांस्तानर्थानिति **गुरुः**—आचार्यः पूज्यो जनश्च । कर्त्ता ॥

**अपदुःसुषु स्थः ॥१०९॥**

अपदु सुषु इत्येतेषूपपदेषु स्थाधातोः कुप्रत्ययः । अपतिष्ठतीति **अपष्ठु** । दुस्तिष्ठतीति **दुष्ठु** । सुतिष्ठतीति **सुष्ठु** । कर्त्ता ॥

**रपेरिच्चोपधायाः ॥११०॥**

रपेः कुरिच्चोपधायाः । रप व्यक्तायां वाचि । रपतीति **रिपुः**—वैरी । कर्त्ता ॥

**अर्जिदृशिकम्यमिपंसिबाधामृजिपशितुग्बुग्दीर्घह्लकाराश्च ॥१११॥**

एभ्यो धातुभ्यः कुः प्रत्ययो भवति यथासंख्यं ऋजिपशितुक्बुक्दीर्घहकारा इत्येते आगमादेशा भवन्ति । अर्ज अर्जने भौ० । ण्यन्तः । अर्जयति प्रयत्नेनेति **ऋजुः** । कर्त्ता । दृशिर् । पश्यतीति **पशुः** । कर्त्ता । काम्यतेऽसाविति **कन्तुः**—कामी । कर्म । अमतीति **अम्बु**—उपादानम् । कर्त्ता । अम्यते वा **अम्बु** । कर्म । पसिः सौत्रो धातुः । पस्यते साकल्येनापि वायुनेति **पांसुः**—रेणुः । कर्म । बाधृ लोडने । बाधते परानिति **बाहु**—शरीराङ्गम् । कर्त्ता ॥

**प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च ॥११२॥**

एभ्यः कुः सम्प्रसारणं यथासम्भवं सलोपश्च । प्रथतेऽसाविति **पृथुः** । कर्त्ता । प्रथनं **पृथु**—विस्तीर्णम् । भावः । म्रदते **मृदु** । भर्जयति भृज्ज्यते वा **भृगुः**········ कर्त्ता । न्यङ्क्वादित्वात्कुत्वम् । अपादानम् ॥

**लंघिबंह्योर्नलोपश्च ॥११३॥**

आभ्यां कुर्नलोपश्च । लङ्घ्यतेऽसौ बालैरिति **लघु**—गौरववर्जितः । कर्म । बंहत इति **बहु**—प्रभूतम् । कर्त्ता । बंहनं वा **बहु** । भावः ॥

**ऊर्णोतेर्णुलोपश्च ॥११४॥**

ऊर्णोतेः कुः णुलोपश्च । ऊर्णोतीति **ऊरुः**—शरीराङ्गम् । कर्त्ता । ऊर्णूयते वा **ऊरुः** । कर्म ॥

## महति ह्रस्वश्च ॥११५॥

महत्यर्थे गम्यमाने ऊर्णोतेः कुः णुलोपश्च ह्रस्वश्च । ऊर्णोति ऊर्णनं वा उरु—विस्तीर्णम् । कर्त्ता भावश्च ॥

## श्लिषेः कश्च ॥११६॥

श्लिषेः कुः कश्चान्तादेशः । श्लिष्यतीति श्लिकुः—श्लेषकः । कर्त्ता ॥

## आङ्परयोः खनिशॄभ्यां डिच्च ॥११७॥

आङ्परपूर्वाभ्यां खनिशॄभ्यां कुः डिच्च । आखनतीति आखुः—मूषकः । कर्त्ता । परान् शृणातीति परशुः—आयुधः । कर्त्ता ॥

## हरिमितयोर्द्रुवः ॥११८॥

हरिमितपूर्वाद् द्रुधातोः कुः डिच्च । हरिभिर्द्रूयत इति हरिद्रुः—वृक्षः । कर्म । हरयोऽस्मिन्वा द्रवतीति हरिद्रुः । अधिकरणम् । मितं द्रवतीति मितद्रुः—समुद्रः । कर्त्ता । बहुलादन्यत्रापि । शतधा द्रवतीति शतद्रुः—नदः । कर्त्ता ॥

## खरुशङ्कुपीयुनीलङ्गुलिगु ॥११९॥

एते निपात्यन्ते कुप्रत्यये । खने रेफोऽन्त्यस्य निपात्यते । खनतीति खरुः—क्रूरो मूर्खश्च । खोॠ गतिप्रतिघाते भ्वा०। अस्योपधाया अत्वं निपात्यते । खोरतीति खरुः । कर्त्ता । शंकतेऽस्माज्जन इति शंकुः—पापं कीलको वा । अपादानम् । शक्लृ सौ० । अस्य नुम् निपात्यते । शक्यतेऽनेन खनितुमिति शंकुः । करणम् । पिबतेरीत्वं युडागमश्च निपात्यते । पिबति तेज इति पीयुः—स्वर्णम् । कर्त्ता । गम्लृ० नीलशब्दपूर्वः । अस्य टिलोपः पूर्वस्य नुमागमश्च । नीलं गच्छतीति नीलङ्गुः—क्रिमिजातिः शृगालो वा । कर्त्ता । लगे संगे । अस्योपधाया इत्वं निपात्यते । श्लिषेर्वा शकारलोपो गश्चान्तादेशः । लगति श्लिष्यतीति वा लिगुः—मूर्खः । कर्त्ता ॥

## मृगय्वादयश्च ॥१२०॥

मृगयु इत्येवमादयः शब्दा निपात्यन्ते कुप्रत्यये । मृगं यातीति मृगयुः—लुब्धकः । कर्त्ता । अस्मान् यातीति अस्मयुः—जिह्मः । कर्त्ता । अस्यैव भूशब्द उपपदे प्रत्ययस्य अन्युजादेशो धातुलोपो रुगागमो ह्रस्वत्वमुपपदस्य च निपात्यते । भुवं यातीति भुरण्युः—अग्निः । कर्त्ता । अस्यैव वरशब्द उपपदे प्रत्ययस्य अन्युजादेशो धातुलोप उपपदान्तलोपश्च निपात्यते । वरं यातीति वरण्युः—वायुः । कर्त्ता ॥

**सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् ॥१२१॥**

एभ्यस्तुन् । सिन्वन्ति तमिति **सेतुः**—नदीसंक्रमः । कर्म । तन्यत इति **तन्तुः**—सूत्रम् । कर्म । गच्छतीति **गन्तुः**—पथिकः । कर्त्ता । मसी परिणामे दै० । मस्यतेऽनेनेति **मस्तु**—दध्यवयवः । करणम् । षच सेवने । सच्यन्तेऽनेन प्राणा इति **सक्तुः**—यवविकारः । करणम् । यवतीति **ओतुः**—विडालः । कर्त्ता । बाहुलकाद्ह्रस्वोत्वम् । दधात्यर्थं धीयतेऽस्मिन्नर्थं इति **धातुः**— शब्दप्रकृतिः पर्वतनिस्रावो वा । कर्त्ता अधिकरणं च । क्रोशत्यर्थमिति **क्रोष्टा**—शृगालः । कर्त्ता ॥

**पः किच्च ॥१२२॥**

अस्मात्तुन् किच्च । पा, पा, पै । पाति पिबति पायति वा **पीतुः**—आदित्यश्चक्षुश्च । कर्त्ता ॥

**अर्तेश्च तुः ॥१२३॥**

अर्तेस्तुः किच्च । ऋच्छत्यर्यते वा **ऋतुः**—कालो ग्रीष्मादिः, स्त्रीणां वा पुष्पकालः । कर्त्ता कर्म च ॥

**कमिमनिजनिगाभापायाहिभ्यश्च ॥१२४॥**

एभ्यस्तुः । कामयते काम्यते वा **कन्तुः**—कामी । कर्त्ता कर्म च । मन्यते मनुते वा **मन्तुः**—पर्यायिनाम । कर्त्ता । जायते जजन्ति जन्यते वा **जन्तुः**—प्राणी । कर्त्ता कर्म च । गायति जिगाति वा **गातुः**—उद्गाता । कर्त्ता । भात्यर्थमिति **भातुः**—अग्निर्विद्वांश्च । कर्त्ता । यातीति **यातुः**—मनः । कर्त्ता । पाति पीयते वा **पातुः**—रक्षिता । कर्त्ता कर्म च । हिनोतीति **हेतुः**—निमित्तम् । कर्त्ता । हीयतेऽनेनार्थमिति **हेतुः** । करणम् ॥

**चायः की च ॥१२५॥**

चायस्तुः की चास्यादेशः । चाय्यत इति **केतुः**—ध्वजो ग्रहश्च । कर्म ॥

**आप्नोतेर्ह्रस्वश्च ॥१२६॥**

अस्मात्तुर्ह्रस्वश्च । आप्नोतीति **अप्तुः**—यज्ञियोऽग्निः । कर्त्ता । बाहुलकादन्यतोऽपि । अमतीति **अन्तुः**—रक्षिता । कर्त्ता ॥

**वसेस्तुन् ॥१२७॥**

वसन्ति तस्मिन्नर्थविशेषा इति **वस्तु**—प्रकारविशेषः । अधिकरणम् ॥

**अगारे णिच्च ॥१२८॥**

अगारे वाच्ये वसेस्तुन् णिच्च भवति । वसन्ति तस्मिन् देवा इति **वास्तु**—गृहम् । अधिकरणम् ॥

**कृञः कतुः ॥१२९॥**

क्रियतेऽसौ धर्मार्थिभिरिति **क्रतुः**—यज्ञः । कर्म ॥

**एधिवह्योश्चतुः ॥१३०॥**

आभ्यां चतुः । एधत इति **एधतुः**—पुरुषः । कर्त्ता । वहतीति **वहतुः**—अग्निरनड्वांश्च । कर्त्ता ॥

**जीवेरातुः ॥१३१॥**

जीवन्त्यनेन प्राणिन इति **जीवातुः**—औषधम् अन्नं वा । करणम् ॥

**कृहृभ्यामेणुः ॥१३२॥**

करोति कृणोति करति वा **करेणुः**–हस्तिनी । कर्त्ता । हरति जिहर्त्तीति वा **हरेणुः**—गन्धद्रव्यम् । कर्त्ता । बहुलत्वादन्यतोऽपि । कृतणत्वनिर्देशो गमेण्वादीनां प्रसिद्धयर्थः । गमतीति **गमेणुः**—पन्थाः। अनादितश्चायं पथि वर्तमानः । पचतीति **पचेणुः**—पाचकः। कर्त्ता । यजतीति **यजेणुः**—याजक ऋत्विक् । कर्त्ता ॥

**यजिमनिशुन्धिदसिजनिभ्यो युच् ॥१३३॥**

एभ्यो युच् प्रत्ययः । यजत इति **यज्युः**—अध्वर्युः । कर्त्ता । मन्यते मनुते वा **मन्युः**—अन्तर्गतः क्रोधः । कर्त्ता । शुन्धतीति **शुन्ध्युः** । कर्त्ता । दस्यतीति **दस्युः**—तस्करः । कर्त्ता । जायत इति **जन्युः**—भूतग्रामः । कर्त्ता । बाहुलकत्वादनित्यत्वाच्च योरनादेशो न भवति ॥

**भुजिमृङ्भ्यां युक्त्युकौ ॥१३४॥**

आभ्यां क्रमाद् युक्त्युकौ स्तः । भोजनं **भुज्युः**—भोगः । भावः । मरणं **मृत्युः**—प्राणैर्वियोगः । भावः ॥

**सर्त्तेरयुः ॥१३५॥**

धावति सिसर्त्ति वा **सरयुः**—नदी वायुर्वा । कर्त्ता ॥

**कन्युच् क्षिपेश्च ॥१३६॥**

क्षिपेः कन्युच् प्रत्ययो भवति । क्षिपति क्षिप्यते वा **क्षिपण्युः**—वायुः कालश्च । कर्त्ता कर्म च ॥

**भुवश्च ॥१३७॥**

भूधातोः कन्युच् । भवतीति **भुवन्युः**—ईश्वरः । कर्त्ता ॥

**चनुट् नदेश्च** ॥१३८॥

नदेः क्षिपेश्च चनुट् प्रत्ययो भवति । नदतीति **नदनुः**—मेघः सिंहो वा । कर्त्ता । क्षिपति क्षिप्यते वा **क्षिपणुः**—बाहुः । कर्त्ता कर्म च ॥

**स्तनिहृषिपुषिगदिमदिघुषिगडिमंडिजनिनंदिभ्यो णेरित्नुच्** ॥१३९॥

एभ्यो ण्यन्तेभ्य इत्नुच् प्रत्ययः । स्तनयतीति **स्तनयित्नुः**—मेघः । कर्त्ता । हर्षयन्तीति **हर्षयित्नुः**—आनन्दः । कर्त्ता । पोषयतीति **पोषयित्नुः**—भर्त्ता । कर्त्ता । गदयतीति **गदयित्नुः**—भ्रमरः कामश्च । कर्त्ता । मदयतीति **मदयित्नुः**—मदिरा । कर्त्ता । घोषयतीति **घोषयित्नुः**—शब्दः । कर्त्ता । गण्डयतीति **गण्डयित्नुः**—बलाहकः । कर्त्ता । मण्डयतीति **मण्डयित्नुः**—मण्डयिता । कर्त्ता । जनयतीति **जनयित्नुः**—पिता । कर्त्ता । नन्दयतीति **नन्दयित्नुः**—आनन्दः प्रमुदितश्च । कर्त्ता ॥

**कृहनिभ्यां क्नुः** ॥१४०॥

करोति कृणोति करतीति वा **कृणुः**—कारुः । कर्त्ता । आहन्त्याहारमिति **हनुः**—वक्त्रैकदेशः । कर्त्ता । बाहुलकत्वान्नलोपः ॥

**गमेः सन्वच्च** ॥१४१॥

**गमेः क्नुः** सन्वच्चास्य कार्यं भवति । गच्छत्याशु इति **जिगनुः**—प्राणः मीनो वा । कर्त्ता ॥

**दाभाभ्यां नुः** ॥१४२॥

दीयत इति **दानुः**—भक्षणार्थः । भातीति **भानुः**—आदित्यः । बहुलवचनात् **चित्रभानुः** । **स्वर्भानुः**—राहुः । विश्वं भातीति **विश्वभानुः**—आदित्यः ॥

**वचेर्गश्च** ॥१४३॥

वचेर्नुर्गश्चान्तादेशः । वक्ति ब्रवीति वा साधु शोभनमिति **वग्नुः** ॥

**धेट ई च** ॥१४४॥

धेटो नुः ईकारोऽन्तादेशश्च । गुणः । धयतीति **धेनुः**—प्रथमप्रसूता गौः । कर्त्ता ॥

**षूङः किच्च** ॥१४५॥

षूङ् एतस्मान्नुः किच्च । सूते तमिति **सूनुः**—पुत्रः ॥

**स्थो णुः** ॥१४६॥

तिष्ठतीति **स्थाणुः**—ईश्वरोऽचलद्रव्यं च । कर्त्ता ॥

अजिवृरीभ्यो नित् ॥१४७॥

एभ्यो णुर्निच्च । अजति वीयते वा वेणुः । वृणोति व्रियते वा वर्णुः—देशविशेषः । रीयते रिणाति वा रेणुः—पांसुः ॥

विषेः किच्च ॥१४८॥

विषेर्णुः किच्च निच्च । वेवेष्टीति विष्णुः—अधोक्षजः ॥

कुडिकुषिभ्यां काकुः ॥१४९॥

आभ्यां काकुः प्रत्ययः । कुडिः सौत्रो धातुः । कुडतीति कुडाकुः—आन्त्रम् । कुष्णातीति कुषाकुः—मूषकः ॥

सर्तेर्मुक् च ॥१५०॥

सर्तेः काकुर्मुगागमश्च । धावत्यत्यर्थमिति सृमाकुः—मृगजातिः ॥

पर्देर्नित् सम्प्रसारणमलोपश्च ॥१५१॥

पर्देः काकुर्निच्च सम्प्रसारणं चास्य धातोरकारलोपश्च । पर्दतीति पृदाकुः—कुत्सितशब्दकृत् ॥

इकः क्षुट् च ॥१५२॥

अस्मात् काकुः क्षुडागमश्च । अध्येतीति इक्ष्वाकुः—राजा ॥

ह्रियः कुः रश्च लो वा ॥१५३॥

अस्मात् कुः रेफस्य च लकारो वा । जिह्रेतीति ह्रीकुः, ह्लीकुः—त्रपुः जनता लज्जावांश्च ॥

क्सुरिषः ॥१५४॥

इषेः क्सुः । इच्छन्ति तमिति इक्षुः—गुडादिप्रकृतिः । आदौ प्रत्ययोच्चारणाद् अशेरपि । अश्नात्यश्नुते वा अक्षुः ॥

अर्तेररुः ॥१५५॥

ऋच्छत्यर्यते वा अररुः—आयुधम् ॥

कुटो ङित् ॥१५६॥

कुटोऽरुः ङिच्च । कुटतीति कुटरुः—मर्कटः । कुटादित्वादेव ङित्त्वे सिद्धे गणपठितस्यानित्यत्वसूचनार्थं ङित्वम् । तेन व्यचेः कुटादित्वमनसि इत्येतन्न वक्तव्यम् ॥

मापो रुरी च ॥१५७॥

मा पा आभ्यां रुः ई चान्तादेशः। माति मिनोति मिमीते मीनाति मीयते वा सूर्येन्दुभ्यामिति **मेरुः**—सूर्यपर्वतः। पाति पिबति पीयते वा **पेरुः**—आदित्यो वा ॥

**जत्र्वादयश्च ॥१५८॥**

जत्रु इत्येवमादयः शब्दा निपात्यन्ते रुप्रत्यये। जनी०। अस्य तकारान्तता निपात्यते। जायते जजति जन्यते वा **जत्रुः**—प्राणिग्रीवाधःप्रदेशश्च। शॄ हिंसायाम्। रुप्रत्यये गुणोऽन्त्यस्य तकारागमो निपात्यते। शृणातीति **शत्रुः**। अस्यैवेत्वं तकारागमश्च निपात्यते। शृणातीति **शित्रुः**—शितिः। अत्तीति **अत्रुः**। हन्तीति **हत्रुः** ॥

**रुशदिभ्यां क्रुन् ॥१५९॥**

आभ्यां क्रुन्। रौति रुयते वा **रुरुः**—मृगः। शीयत इति **शद्रुः**—शातकः (क्षुद्रजन्तुः)। जत्र्वादित्वादेव सिद्धे शद्लृवचनं नित्स्वरार्थम् ॥

**तनोतेर्डउः सन्वच्च ॥१६०॥**

तनोतेर्डउः प्रत्ययो भवति सन्वच्च। तनोति पिष्टद्रव्याणीति **तितउः**—चालनी। प्रत्ययसामर्थ्याद् आद्गुणो न ॥

**श्मनि श्रयतेर्डुन् ॥१६१॥**

श्मनि शब्द उपपदे श्रयतेर्धातोर्डुन् प्रत्ययो भवति। श्मनि श्रयते **श्मश्रु**—पुंमुखजो रोमसंघातः ॥

**अश्र्वादयश्च ॥१६२॥**

अश्रु इत्येवमादयः शब्दा निपात्यन्ते डुन्प्रत्यये। न श्रीयते न श्रूयते सत्वविद्भिरिति **अश्रु**—शोकानन्दसमुत्पन्नं नेत्रवारि। अश्नुतेऽश्नाति वा **अश्रु**। अनयो रुगागमः। स्रु गतौ नञ्पूर्वः। अस्यान्तस्वरस्याकारभावो निपात्यते[1]। न स्रूयते न स्रवति वा **अस्रु**। द्रु गतौ, दॄ विदारणे। अनयोरन्त्यस्वरलोपो निपात्यते दृणाते रुगागमश्च। विद्रूयते विदृणाति वा **विद्रुः**—दारुप्रकारः। अवद्रवतीति **अवद्रुः**। कुत्सितं द्रवतीति **कुद्रुः**—विकलपादः। एवमन्येऽपि ॥

**जीवे रदानुक् ॥१६३॥**

जीवति जीव्यते वा **जीरदानुः**—औषधम् ॥

॥ इत्युदन्ताः ॥

---

१. प्रत्ययस्य डित्वादकारभावो व्यर्थः।

**कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः ॥१६४॥**

एभ्य ऊः प्रत्ययः। कर्षति कृषति कृष्यते वा **कर्षूः**—गोमयाग्निसङ्घातः। चमति परान् आचम्यते वा परैरिति **चमूः**—सेना। तनोति तन्यते वा **तनूः**—शरीरम्। दधन्तीति **धनूः**—धान्यादिचयः, वरारोहा वा। सर्जत इति **सर्जूः**—अर्थः। खर्जतीति **खर्जूः**—कण्डूः, विद्युत्। बहुलाद् यौतीति **यवागूः**।

**मृजेर्गुणश्च ॥१६५॥**

मृजेरूर्गुणश्च। मर्जनं **मर्जूः**—शुद्धिः। गुणवचनं वृद्धिप्रतिषेधार्थम्॥

**वहेर्धश्च ॥१६६॥**

अस्माद् ऊर्धोऽन्तादेशश्च। उह्यते विवाहकर्मणेति **वधूः**—कुमारी, जाया॥

**कषेश्छश्च ॥१६७॥**

ऊः छोऽन्तादेशश्च। कषति शरीरमिति **कच्छूः**—कुष्ठप्रकारः॥

**णिच्च कसिपद्यर्त्तेः ॥१६८॥**

एभ्य ऊर्णिच्च। कसतीति **कासूः**—विकला वाक्। पद्यत इति **पादूः**—पादुका। ऋच्छत्ययंते वा **आरूः**—फलवृक्षजातिः॥

**अणो डश्च ॥१६९॥**

ऊर्णिच्च डश्चान्तादेशः। अणत्यनेनोदकमिति **आडूः**॥

**नञि लम्बेर्नलोपश्च ॥१७०॥**

नञ्युपपदे लंबेरूर्णिच्च नलोपश्च। न लंबत इति **अलाबूः**—उर्वी॥

**के शृ एरङ् च ॥१७१॥**

क उपपदे शृ धातोरूरेरङ् चादेशः। कं शृणातीति **कशेरूः**—वीरुत्प्रकारः॥

**त्रो द्रुट् च ॥१७२॥**

तॄ एतस्मादूः प्रत्ययः द्रुट् चागमः। तरति तीर्यते वेति **तर्द्रूः**—नौः। कर्त्ता करणं च॥

**दरिद्रातेर्यालोपश्च ॥१७३॥**

अस्माद् ऊः, इकारस्य आकारस्य च लोपः। इश्च आ च या। दरिद्रयतेऽनवा शरीरमिति **दर्द्रूः**—कुष्ठविकारः॥

**नृतिशृध्योः कूः ॥१७४॥**

नृत्यतीति नृतूः—नर्त्तकः क्रिमिजातिर्वा । शृधु उन्दने, शृधु शब्दकुत्सायाम् । शर्धति शर्धते वा शृधूः—बुद्धिः ॥

**ऋतेरम् च ॥१७५॥**

ऋतेः कूः अमागमश्च । ऋतिः सौत्रः । ऋतीयत इति रतूः —नदी सत्यवाक् च ।

**अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः ॥१७६॥**

एते कूप्रत्ययान्ता निपात्यन्ते । अम० । अस्य दुगागमः । अमति अम्यते वानयेति अन्दूः—बुद्धिः । दृभी ग्रन्थे । अस्य नुमागमो निपात्यते । दृभतीति दृम्भूः—कथकः । दृम्भणं वा दृम्भूः । जनी । अस्य बुगागमः । जायत इति जम्बूः—वृक्षः । कर्त्ता । फल०, ञिफला० । अनयोः किंशब्द उपपदे उपधाया इत्वं गुणश्च निपात्यते कादेशश्च किमः । किञ्चित् फलतीति कफेलूः—श्लेष्मातको मधुपर्कश्च । कर्कं दधातीति कर्कन्धूः—बदरीवृक्षः । अस्यालोपो निपात्यते[1] । धिष शब्दे । अस्य द्विर्वचनम् । दिधेष्टीति दिधिषूः—पुनर्भूर्भार्या । अथवा धाञ इत्वं द्विर्वचनं षुगागमश्च । दिधिषूः । कर्त्ता ॥

**भ्रमेश्च डूः ॥१७७॥**

चाद् गमेः[2] । भ्रमति भ्राम्यतीति भ्रूः—अक्षणोरुपरि रोमराजिः । अग्रं गच्छतीति अग्रेगूः—पुरःसरः ॥

॥ इत्यूदन्ताः ॥

॥ इति प्रथमः पादः ॥

———

१. आलोपनिपातनं चिन्त्यम् । प्रत्ययस्य कित्त्वाद् 'आतो लोप०' (अ० ६।४।६४) इति सिद्धयति ।

२. नात्र पूर्वं गमिर्वर्तते । पञ्चपाद्यां तु 'गमेर्डोः' (२।६८) इति सूत्रस्य पुरस्ताद् विद्यमानत्वात् तत्रोपयुक्तश्चकारः ।

# ॥ अथ द्वितीयः पादः ॥

## तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ ॥१॥

शंसेः क्षदादिभ्यः तृन् तृच् एतौ प्रत्ययौ भवतः संज्ञायां तौ चानिटौ। शंसतीति **शंस्ता**—यज्ञकर्मवित्। क्षदतीति **क्षत्ता**—विदुरः। आशास्तीति **आशास्ता, प्रशास्ता**—राजा गुरुश्च। अनिडर्थोऽयमारम्भः॥

## बहुलमन्यत्रापि ॥२॥

अन्येभ्योऽपि धातुभ्यः तृन्तृचौ बहुलं भवतोऽनिटौ च संज्ञायां विषये। प्रस्तौतीति **प्रस्तोता**—ऋत्विक्। प्रतिहरतीति **प्रतिहर्त्ता**। **प्रतिहन्ता**। उपपश्यतीति **उपद्रष्टा**। उद्गायतीति **उद्गाता**। जुहोतीति **होता**। उन्नयतीति **उन्नेता**। ऋत्विज एते॥

## नप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृमातृभ्रातृजामातृपितृदुहितृ ॥३॥

एते निपात्यन्ते। नयतीति **नप्ता**। अत्र धातोर्नादेशः पुगागमश्च निपात्यते। अस्यैव षुगागमो गुणश्च। नयतीति **नेष्टा**—ऋत्विक्। त्विषेरुपधाया अत्वं निपात्यते। त्विषतीति **त्वष्टा**—आदित्यः। क्षदतीति **क्षत्ता**—विदुरो वियोनिजः। जुहोतीति **होता**—याजकः। पुनातीति **पोता**—पवित्रः। मान पूजायाम्। अस्य नकारलोपो निपात्यते। मान्यत इति **माता**—जनित्री। भ्राजतेर्जकारलोपः। भ्राजत इति **भ्राता**—सहजः। डुमिञ् जायापूर्वः। अस्य आकारान्तता निपात्यते पूर्वपदान्त्यलोपः। जायां मिनोतीति **जामाता**—दुहितुः पतिः। पातेरित्वं निपात्यते। पातीति **पिता**—जनकः। दु०, दुह०। दुनोतेरिटि कृते हुमागमश्च निपात्यतेऽप्रगुणत्वं च। दुहेरप्यगुणत्वं च निपात्यते। दुनोति पितरं दुःखेनेति **दुहिता**। अथवा दोग्धि पितृकुलमिति **दुहिता**॥

## सावसेर्ऋन् ॥४॥

सुपूर्वादस्यतेर्ऋन् प्रत्ययः। शोभनं अस्यतीति **स्वसा**—भगिनी॥

## यतेर्वृद्धिश्च ॥५॥

यतेर्ऋन् वृद्धिश्च । यतत इति **याता**—पत्युर्भगिनी तत्पुत्री वा ॥

**नञि च नन्देः ॥६॥**

नञ्युपपदे नन्देर्ऋन् वृद्धिश्च । न नन्दतीति **ननान्दा**—पत्युर्भगिनी तन्माता वा ॥

**दिवेश्च ॥७॥**

दिवेर्ऋन् । दीव्यतीति **देवा**। देवरौ । देवरः ॥

**नयतेर्डिच्च ॥८॥**

नयतेर्ऋन् डिच्च । नयतीति **ना**—मनुष्यः ॥

**सव्ये स्थश्छन्दसि ॥९॥**

सव्य उपपदे तिष्ठतेर्ऋन् डिच्च छन्दसि विषये । सव्ये तिष्ठतीति **सव्येष्ठा**—सारथिः । कर्त्ता । **अम्बाम्ब०** (अ० ८।३।९७) इति षत्वम् । बहुलवचदाद् भाषायामपि ॥

॥ इत्यृदन्ताः ॥

**रातेर्डैः ॥१०॥**

रातेर्डैप्रत्ययः । राति पात्रेभ्यः श्रेयोऽर्थं यत् तत् **राः**—धनम् ॥

॥ इत्यैकारान्तः ॥

**गमेर्डोः ॥११॥**

गमेर्डोप्रत्ययः । गच्छत्युपयोगमिति **गौः**—बहुला इच्छा वा ।

**वाग्दिग्भूरश्मिसंघेषु पश्वक्षिस्वर्गवारिषु ।**
**नवस्वर्थेषु मेधावी गोशब्दमवधारयेत् ॥**[1]

॥ इत्योकारान्तः ॥

**ग्लानुदिभ्यां डौः ॥१२॥**

आभ्यां डौः प्रत्ययः । ग्लायतीति **ग्लौः**-चन्द्रमाः,व्याधिग्रस्तश्च । नुदति नुद्यते वा **नौः**—प्लवः ॥

**च्विरव्ययम् ॥१३॥**

---

१. अनुपलब्धमूलमेतत् ।

च्विप्रत्यययोऽव्ययसंज्ञो भवति। स च अभूततद्भावे इति विहितः। अग्लौग्लौः सम्पद्यते तं करोतीति ग्लौ करोति, ग्लौ भवति। नौ स्यात्। च्विरिति किम्? ग्लौः ग्लावौ ग्लावः, नौः नावौ नावः। नियमार्थमिदम्। च्विप्रत्ययानामेव न केवलानाम्। तेन राः रायौ रायः, गौः गावौ गाव इति॥

॥ इत्यौकारान्ताः॥

॥ इत्यजन्ताः॥

॥ इति द्वितीयः पादः॥

———

# ॥ अथ तृतीयः पादः ॥

## जीवेरातृकन् वृद्धिश्च ॥१॥

जीवेरातृकन् प्रत्ययो वृद्धिश्च ।····· जीवति जीव्यति वा **जैवातृकः**—चन्द्रमाः । जीवन्त्यनेन प्राणिन इति **जैवातृकः** ॥

## समि कस उकन् ॥२॥

सम्युपपदे कसेरुकन् प्रत्ययः । समन्तात् कसन्ति तस्मात् **संकसुकः**—सुकुमारः ॥

## पचिनश्योर्णुकन् कनुमौ च ॥३॥

आभ्यां णुकन् यथासंख्यं चानयोः कनुमावादेशागमौ भवतः । पचतीति **पाकुकः**—सूपकारः, अध्वर्युश्च । नश्यन्त्यल्पेन वायुनेति **नंशुकाः** । वञ्चत्यध्वन्यपि वायुनेति **वंचुकाः**—पांसवः ॥

## भियः क्रुकन् ॥४॥

अस्मात् क्रुकन् प्रत्ययः । बिभेतीति **भीरुकः**—कातरः ॥

## क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि ॥५॥

नास्ति पूर्वो यस्य तस्माद् धातोः क्वुन् प्रत्ययो भवति शिल्पिन्यभिधेये संज्ञायां च विषये,अपि शब्दात् सपूर्वस्यापि। शिल्पिन्यपूर्वस्य तावत्-रज्यते रजतीति वा **रजकः**। कर्त्ता । तक्ष्णोति तक्षति वा **तक्षकः**। खनतीति **खनकः** । सपूर्वस्यापि—पीड अवगाहने चौ० तिलपूर्वः । तिलान् पीडयतीति **तिलपीडकः** । वस्त्राणि धावतीति **वस्त्रधावकः** । घट्ट वेष्टने । इक्षुं घट्टयतीति **इक्षुघट्टकः** । एते शिल्पिवाचकाः । एवमन्येऽपि । संज्ञायां खल्वप्यपूर्वस्य—जनयतीति **जनकः**—पिता । क्षिपतीति **क्षिपकः**—योद्धा । ध्रुवतीति **ध्रुवकः**—स्थिरः । धुनोति धुनाति धुवतीति वा **धुवकः**—प्रधानम्, स्त्रीक्षिपकः । सपूर्वस्य च-बृहत्तन्त्रकलान् आपिबतीति **कलापकः**—शास्त्रकर्त्ता । एवमन्येऽपि शिल्पिनि संज्ञायां च पूर्ववन्निदर्शितव्याः ॥

## जहातेर्द्वे च ॥६॥

जहातेः क्वुन् द्वे च । जहातीति **जहकः**—निर्मोकः ॥

## ध्मो धम च ॥७॥

अस्मात् क्वुन् धम चादेशः । धमतीति **धमकः**—अग्निध्मापकः ॥

हनो वधश्च ॥८॥

हन्तेः क्वुन् वधादेशश्च । हन्तीति **वधकः** ॥

बहुलमन्यत्रापि ॥९॥

क्वुन् प्रत्ययः । कथयतीति **कथकः**—तोटकाख्यायिकादीनां वर्णयिता, पिता । रोचत इति **रुचकः**—अलङ्कारः ।

अपरावृत्तिः—बहुलमन्यत्रापि इति वचनाद् वधादेशः । वृत्रं हन्तीति **वृत्रवधकः**—इन्द्रः ॥

कृषेर्वृद्धिश्चोदीचाम् ॥१०॥

कृषेः क्वुन् वृद्धिश्चोदीचां मतेन । कर्षति कृषतीति वा **कार्षकः**—क्षेत्रोपजीवी । अन्यत्र **कृषकः** ॥

उदकम् ॥११॥

निपात्यते क्वुनि । उत्खायते उदच्यते वायुना विखन्यमानं तदिति **उदकम्**। कर्म॥

वृश्चिकृषोः किकन् ॥१२॥

आभ्यां किकन् प्रत्ययः । वृश्चतीति **वृश्चिकः** । कर्षति कृषतीति वा **कृषिकः** ॥

आङि पणिकषः ॥१३॥

आङ्पूर्वाभ्यां पणिकषिभ्यां किकन् । **आपणायत** इति **आपणिकः**—वणिक् । आकषतीति **आकषिकः**—हिंस्रः ॥

मुषेर्दीर्घश्च ॥१४॥

मुषेः किकन् दीर्घश्च धातोः । मुष्णातीति **मूषिकः**—आखुः ॥

स्यमेः सम्प्रसारणं च ॥१५॥

स्यमेः किकन् सम्प्रसारणं च धातोः, दीर्घश्च प्रत्ययादेः । स्यमतीति **सिमीका**—सूक्ष्मा क्रिमिजातिः ॥

क्रिय इकन् ॥१६॥

क्रीणातीति **क्रयिकः**—पण्यग्रहीता ।।

आङि पणिपनिपतिखनिभ्यः ॥१७॥

आङ्युपपद एभ्य इकन् । आपणत इति **आपणिकः**—वणिक् । पन च । आपनत इति **आपनिकः** । आपततीति **आपतिकः**—पथिकः । आखनति **आखनिकः**—वराहः ॥

## कृदाधारार्चिकलिभ्यः कः ॥१८॥

एभ्यः कः। करोति कृणोति करति वा कर्कः—अग्निः सारङ्गश्च। क्रियत इति कर्कः—दत्तः। ददातीति दाकः—यजमानः। दधातीति धाकः—स्तम्भः। रातीति राकः। रायते वा राकः—मखः। कर्म। अर्च्यतेऽसौ अर्कः—कलिकामधेनुः। कल्कः—पुष्पजातिश्च।

उत्तरत्र कित्करणात् ककारो नानुबन्धः॥

## सृवृभूशुषिमुषिभ्यः कित् ॥१९॥

एभ्यः कः किच्च। धावति सिसर्त्तीति वा सृकः—वायुर्वाणो वा। वृणोति व्रियते वा वृकः—क्षुद्रश्वापदः। भवति भूयते वा भूकः—कालः। कर्त्ता भावः। शुष्यतीति शुष्कः—म्लानः। मुष्णातीति मुष्कः—चोरः॥

## शुकवल्कोल्काः ॥२०॥

एते निपात्यन्ते कप्रत्यये। शुभ शोभार्थे तौ०, शुभ दीप्तौ भौ०। अनयोरन्त-लोपः। शुभति शोभते वा शुकः—पक्षी ऋषिश्च। वलति वल्यते वा वल्कः—वासः। उष दाहे। अस्य षस्य लत्वम्। ओषतीति उल्कः—अग्निज्वाला, उत्पातश्च॥

## इण्भीकापाशल्यतिमर्चिभ्यः कन् ॥२१॥

एभ्यः कन्। एतीति एकः—संख्यावाची केवलार्थश्च, प्रधानवाची च। बिभेतीति भेकः—मण्डूकः। कायतीति काकः—पक्षी। पिबति स्तनमिति पाकः—बालः। पातीति पाकः—असुरः। शलति शल्यते वा शल्कः—काष्ठत्वक्। अततीति अत्कः—राजा। मर्चिः सौत्रो धातुः। मर्चयतीति मर्कः—वायुः। निरनुनासिकत्वात् प्रयोजनाभावाद्वा बाहुलकाद्वा ककारस्येत्संज्ञा न॥

## नौ हः ॥२२॥

नावुपपदे हा एतस्मात् कन्। जहाति हीयते वा निहाकः—स्नेहः। निहाका—गोधः॥

## स्यमेरिट् च ॥२३॥

स्यमेः कन् इडागमश्च। स्यमतीति स्यमिका—क्रिमिजातिः॥

## अजिसुयुधूञां दीर्घश्च ॥२४॥

एभ्यः कन् दीर्घश्च। अजतीति वीकः—वायुः। दीर्घविधिरिड्गुणबाधार्थम्। सुनोतीति सूकः। यौतीति यूकः। धुनोतीति धूकः। बाहुलकान् नयतीति नौका—उदकहारिका॥

### ह्रियो रश्च लो वा ॥२५॥

अस्मात् कन् रेफस्य च लो वा । जिह्रेतीति ह्रीकः, ह्लीकः – लज्जावान् ॥

### आनकः शीङ्भियः ॥२६॥

आभ्यामानक् प्रत्ययो भवति । शेतेऽत्यर्थमिति शयानकः– अजगरः । बिभेत्यत्यर्थमिति भयानकः—भीषणः ॥

### आणको लूधूशिङ्घिधाञ्भ्यः ॥२७॥

एभ्य आणकः । लूयतेऽनेन लुनातीति वा लवाणकम्– दात्रम् । शिघि आघ्राणे । शिङ्घ्यत इति शिङ्घाणका—नासा । दधाति धीयते वा धानका—सुवर्णपरिमाणम् । बाहुलकाण्णस्य नत्वम् ॥

### वृतेस्तिकन् ॥२८॥

वर्त्तत इति वर्त्तिका—पक्षिजातिः । वृत्यत इति वा वर्त्तिका—द्रव्यगुणिका ॥

### कृतिभिदिलतिभ्यः कित् ॥२९॥

एभ्यस्तिकन् किच्च । कृन्ततीति कृत्तिका—नक्षत्रम् । भिनत्ति भिद्यते वा भित्तिका—कुडयस्थानम् । लत इति सौत्रो धातुः । अवलतति अवलत्यते वा अवलत्तिका—गन्धर्वभाण्डम् ॥

### इष्यशिभ्यां तकन् ॥३०॥

आभ्यां तकन् किच्च । इच्छति तं इष्यते वा श्रेयोऽर्थिभिरिति इष्टका—दग्धमृद्विकाराः । अश्नन्त्यस्यां पितर इति अष्टका—श्राद्धम् ॥

### खजेराकः ॥३१॥

खज मन्थे । खजतीति खजाकः—पक्षिजातिः बन्धकी च । कर्त्ता ॥

### बलाकादयश्च ॥३२॥

एते निपात्यन्ते आकप्रत्यये । वलतीति वलाका—पक्षिजातिः । मन्यत इति मनाका—हस्तिनी । पवत इति पवाका—वात्या वातसंघातः । मव्य बन्धने । अस्य यलोपो निपात्यते । मव्यति मव्यते वा मवाका—बन्धनं करेणुर्वा ॥

### शलिपटिपतिभ्यो नित् ॥३३॥

एभ्य आको निच्च । शलति शल्यते वा शलाका– लोहवर्त्तिका । पटति पट्यते वा पटाका—पक्षिजातिः । पतति वायुनेति पताका ॥

### पिनाकादयश्च ॥३४॥

एते निपात्यन्ते आकप्रत्यये। पिष्लृ संचूर्णने। अस्य नकारोऽन्त्यस्यागुणत्वं च निपात्यते। पिनष्टयनेन शत्रून् इति **पिनाकम्**—रौद्रं धनुः शूलो वा। तड आघाते। तड्यते तद् गवादिभिरिति **तडाकम्**—पुष्करिणी। भदि कल्याणे सुखे च। अस्य रगागमो निपात्यते नकारलोपश्च। भन्दत इति **भद्राकः**—अकुटिलः। न भातीति **नभाकम्**—तमः। पिष्लृ संचूर्णने। अस्य युगागमो निपात्यते णकारोऽन्त्यस्यागुणत्वं च। पिष्यत इति **पिण्याकः**—तिलपिष्टपीडितः कल्कः। कौति कवते कूयते वा **कवाकः**। श्यायते **श्यामाका**॥

### कषिदुषिभ्यामीकन् ॥३५॥

आभ्यामीकन्। कषत्यनयेति **कषीका**—खनित्रम्। दूषयति नेत्रमिति **दुषीका**—अक्षिमलसंघातः॥

### चङ्क्वणेः किङ्किणच् ॥३६॥

चङ्क्वणेर्धातोरीकन् प्रत्ययः किङ्किण इत्ययमादेशः। क्वण शब्दार्थः। चङ्क्वण इति यङ्लुगन्तम्। पुनः पुनः भृशं वा क्वणतीति **किङ्किणीका**—सूक्ष्मा घंटिका॥

### शॄपॄवॄञां द्वे रुक् चाभ्यासस्य ॥३७॥

एभ्य ईकन् द्वे चैषां भवतो रुगागमश्चाभ्यासस्य। शृणाति रक्षांसीति **शर्शरीका**—माङ्गल्याभरणम्। पृणाति पूर्यते वा **पर्परीका**—सूर्यो जलाशयश्च। वृणोति व्रियते वा **वर्वरीका**—संवरणम्॥

### फर्फरीकादयश्च ॥३८॥

एते निपात्यन्त ईकनि। स्फुर संचलने। द्वे रुक् चाभ्यासस्येत्यनुवर्तमान उकारस्याकारो धातोश्च सलोपः। अत्यन्तं स्फुरतीति **फर्फरीकम्**—किसलयम्। दॄ भये। अस्य द्वित्वं रुक् चाभ्यासस्य। दीर्यत इति **दर्दरीकम्**—वादित्रम्। जॄष्। द्वे रुक् च तृतीयस्य चतुर्थभावो निपात्यते। जीर्यत इति **झर्झरीकम्**—शरीरम्। तड आघाते। अभ्यासस्य तुगागमः, इत्वं च निपात्यते चतुर्थस्य रभावो निपात्यते। ताडयत्यनयेति **तित्तिरीकम्**—पक्षी शाकजातिश्च॥

### ईषेः किच्च ह्रस्वश्च ॥३९॥

ईषेरीकन् किच्च ह्रस्वश्च धातोः। ईष उञ्छे। ईषतीति **इषीका**—दर्भशलाका॥

### ऋजेश्च ॥४०॥

ऋजेरीकन् किच्च । अर्जते ऋज्यते वा ऋजीकम्—उपकृतम् ॥

**अनिदृशिभ्यां च ॥४१॥**

आभ्यामीकन् । अन्यत इति अनीकम्—सेना । पश्यति तां विस्मिता इति दृशीका—पश्यन्ती ॥

**सर्त्तेर्नुक् ॥४२॥**

सर्त्तेरीकन् किच्च नुगागमश्च । धावतीति सृणीका ॥

**अलीकादयश्च ॥४३॥**

एते निपात्यन्त ईकनि । अततेर्लकारोऽन्तादेशः । अतत्यनेन अधोगतिमिति अलीकम्—असत्यम् । वह प्रापणे । अस्यान्त्यस्य लकारः युडागमश्चोपधायाः । वहन्ति हृदयेनेति व्यलीकम्—मनसो विकारः ॥

**मृकणिभ्यामूकोकणौ ॥४४॥**

आभ्याम् ऊक ऊकण् एतौ भवतः । म्रियत इति मरूकः—प्राणी । कणयति कण्यते वेति काणूकः ॥

**वलूकम् ॥४५॥**

अयं निपात्यत ऊकप्रत्यये । वलति वल्यते वा वलूकम्—जलं द्रव्यम् ॥

**उलूकादयश्च ॥४६॥**

एते निपात्यन्त ऊकप्रत्यये । लोकृ दर्शने । अस्य उकारागम ओकारककारयोर्लोपः । उत्क्रम्य लोकविषयमालोकयतीति उलूकः—कौशिकः । भल्ल परिभाषणे । भल्लत इति भल्लूकः—ऋक्षः ॥

**शलिमण्डिभ्यामूकण् ॥४७॥**

आभ्यामूकण् प्रत्ययः । शलति शल्यते वा शालूकः—जलजम् । मडि भूषायां भौ० प्रकृत्यन्तरं ण्यन्तो वा । मंडति मंडयति वा क्षितिमिति मंडूकः—भेकः ॥

**मृडेः कीकन्ककणौ ॥४८॥**

मृडेः कीकन्ककणौ स्तः । मृडीकः, मृडकः[1] ॥

**कृत्रादिभ्यः संज्ञायां वुन् ॥४९॥**

---

१. प्रत्यये णकारानुबन्धं चिन्त्यम् ।

कृञादिभ्यः संज्ञायां विषये वुन् । क्रियतेऽस्मिन् उदकमिति **करकम्**—कमण्डलु । स्रियत इति **सरकः**—पानम् । चरति तानिति **चरकः**—भिषगाचार्यः । दरति दृणाति वा **दरकः**—भीरुः ॥

**ऋजः कीकन् ॥५०॥**

अर्जत इति **ऋजीकम्**—बलस्थानम् ॥

**अर्भकः पृथुकः पाको वयसि ॥५१॥**

एते निपात्यन्ते [अक उक] कप्रत्यये वयस्यर्थेऽभिधेये । ऋ गतौ । अस्माद् अकप्रत्ययो भुगागमश्च निपात्यते । ऋच्छत्यर्यते वा **अर्भकः** । प्रथ प्रख्याने । अस्माद् उकप्रत्ययो निपात्यते सम्प्रसारणमगुणत्वं च । प्रथत इति **पृथुकः** । पचेः कप्रत्यय उपधाया दीर्घश्च लोपश्च निपात्यते । पच्यते पचति वा **पाकः** । सर्व एते बालाः ॥

**॥ इति कान्ताः ॥**

**डच् खनेर्मुट् चोदात्तः ॥५२॥**

खनेर्धातोर्डच् प्रत्ययो मुट् चागमः खनेरुदात्तो भवति । खन्यते तत्र सुखार्थिभिरिति **मुखम्**—वक्त्रम् ॥

**शमेः खः ॥५३॥**

अस्मात् खः । शाम्यतीति **शंखः** ॥

**मुहेः खन् मूर्च ॥५४॥**

मुहेः खन् प्रत्ययो मूर् इत्ययमादेशः । मुह्यतीति **मूर्खः**—अज्ञो जनः ॥

**नहेर्हलोपश्च ॥५५॥**

नहेः खन् हलोपश्च । नह्यत इति **नखः**—कररुहः, द्रव्यं च ॥

**महेश्च ॥५६॥**

महेः खन् हकारलोपश्च । मह्यत इति **मखः**—अर्चनः ॥

**शीङो निद् ह्रस्वश्च ॥५७॥**

शीङः खन् निद् ह्रस्वश्च धातोः । नितरां शेत इति **निशिखः** ॥

**वृक्षावयव आ च ॥५८॥**

अस्मादेव खन् प्रत्यय आकारोऽन्तादेशश्च । शेरतेऽस्यां पक्षिण इति **शाखा**—वृक्षावयवः ॥

माङ उखा ॥५९॥

माङ उखाशब्दो निपात्यते । मिमीतेऽन्नाविति उखा—स्थाली, ऊर्ध्वक्रियावयवः ॥

मीनातेरूखः ॥६०॥

मीनातेरूखप्रत्ययः । मिनातीति मयूखः—किरणः ॥

॥ इति खान्ताः ॥

पतेरङ्गच् पक्षिणि ॥६१॥

पतेरङ्गच्प्रत्ययः पक्षिण्यभिधेये । पतत्यत्यर्थमिति पतङ्गः—पक्षी आदित्यो वा ॥

आदिभ्यश्च ॥६२॥

तॄ इत्येवमादिभ्योऽङ्गच्प्रत्ययः । आदिशब्दः प्रकारे बोद्धव्यः । तरन्ति तेनेति तरङ्गः—पक्षी आदित्यो वा ऊर्मिश्च । एवमन्येऽपि द्रष्टव्याः ॥

विडादिभ्यः कित् ॥६३॥

एभ्योऽङ्गच् किच्च । विड सौत्रः । विडयतीति विडङ्गः—द्रव्यजातिः । कर्त्ता । एवमन्येऽपि ॥

गन् गम्यदेः ॥६४॥

आभ्यां गन् प्रत्ययः । गम्यतेऽसौ पुण्यार्थिभिरिति गङ्गा—जाह्नवी । अत्तीति अद्गः—समुद्रः, अग्निश्च । प्राक् प्रत्ययनिर्देशो वर्गादीनां प्रसिद्धचर्थः । वृणोतीति वर्गः—संघातः ॥

भृञः किन्नुट् च ॥६५॥

भृञो गन् किच्च नुडागमश्च । भरति बिभर्त्ति वा भृङ्गः—पक्षी भ्रमरश्च ॥

शृणातेर्ह्रस्वश्च ॥६६॥

शृणातेर्गन् किच्च नुट् च ह्रस्वश्च । शृणातीति शृङ्गम् ॥

गण् चाशकुनौ ॥६७॥

अस्माद् गण् नुट् । शृणातीति शार्ङ्गः—अशकुनिः, नरपालसुतः ॥

मुदिग्रोर्गग्गौ ॥६८॥

आभ्यां गक्गौ स्तः । इदमेव कित्करणं ज्ञापकं पूर्वसूत्रे गकारस्येत्संज्ञानिषेधस्य । मोदयतीति मुद्गः—अन्नजातिः । गिरति गृणाति गीर्यते वा गर्गः—ऋषिः । बाहुलकाद् गस्येत्संज्ञा नास्ति ॥

### दहेर्हलोपो दश्च नः ॥६९॥

दहेर्गप्रत्ययो हलोपो दकारस्य च नकारः । दह्यतेऽसावग्न्यनिलैरिति नगः—वृक्षः पर्वतश्च ॥

### ना च ॥७०॥

दहेर्गो हलोपो दस्य च ना इत्यादेशः । दह्यत इति नागः—गजः सर्पो वा ॥

### छापूङ्खडिभ्यो गक् ॥७१॥

छयतीति छागः—अजः । पवते पूयते वा पूगः—संघातः । खडि भेदने । खण्डयतीति खड्गः—निस्त्रिंशः ॥

॥ इति गान्ताः ॥

### जनेः को जङ्घ च ॥७२॥

जनेः कः प्रत्ययो जङ्घादेशश्च धातोः । जायन्तेऽस्यामतिशयेन रोमाणीति जङ्घा—शरीराङ्गम् ॥

### दृणातेर्घक् ॥७३॥

दृणातीति दीर्घः ॥

॥ इति घान्ताः ॥

॥ इति तृतीयः पादः ॥

---

# ॥ अथ चतुर्थः पादः ॥

**स्रुवश्चिक् ॥१॥**

स्रु इत्येतस्माद् धातोः चिक् प्रत्ययः। स्रवत्यस्यां हविरिति **स्रुक्**·········॥

**तनोतेरनश्च वः ॥२॥**

अकारनकारयोश्च वादेशः। तनोति तन्यते वा **त्वक्**—चर्म ॥

**कुवश्चङ् दीर्घश्च ॥३॥**

कुवः चङ् प्रत्ययो दीर्घश्च। कौति कूयते **कूचम्**—चित्रकारभाण्डम् ॥

**समीणः ॥४॥**

सम्युपपद इणश्चङ् दीर्घश्च। समेति तस्मिन्निति **समीचः**—·········। संयन्ति तामिति **समीची**—भूमिः स्त्री वा ॥

**सिवेष्टेरू च ॥५॥**

सिवेश्चङ् दीर्घश्च टेरूकारादेशश्च। सीव्यतीति **सूचः**—पिशुनः। सीव्यत्यनेनेति **सूची**—संधानम् ॥

॥ **इति चान्ताः** ॥

**कचेश्छः ॥६॥**

कचेश्छप्रत्ययो भवति। कच्यतेऽनेनेति **कच्छः**—शरीरैकदेशः ॥

॥ **इति छान्तः** ॥

**पारेरजिः ॥७॥**

पारेरजि। पृ एतस्मादजिः प्रत्ययः। ण्यन्तः। पारयतीति **पारक्**—सुवर्णं रत्नं वा ॥

**पणेरिच्चादेश्च[1] वः ॥८॥**

पणेर्धातोरजिप्रत्ययः प्रत्ययादेरिच्च धात्वादेश्च वः। पणत इति **वणिक्**—वाणिज्यकः ॥

---

१. 'आदे'रित्यस्य सम्बन्धः 'प्रत्ययस्य', 'धातो'रित्युभयत्र विद्यते।

**वशेः कित् ॥९॥**

वशेरजिः प्रत्ययादेरित् किच्च। वष्टि उश्यते वा श्रेयोर्थिभिरिति उशिक्—अग्निः ॥

**ऋधिप्रथिभ्यां कित् सम्प्रसारणं च ॥१०॥**[1]

आभ्यामजिः किच्च सम्प्रसारणं च। ऋध्यत इति ऋधक्। प्रथयतीति पृथक् ॥

**भृञ उच्च ॥११॥**

भृञोऽजिः प्रत्ययादेरिच्च उच्च। बिभर्त्ति भरति वा मर्त्यानिति भुरिक्—भूमिः वायुर्वा ॥

॥ इति जान्ताः ॥

॥ इति चतुर्थः पादः ॥

---

१. सूत्रमिदं 'पारेरजिः' इत्यस्याग्रे भवितव्यम्। इत्थमयं पाठो हैमोणादिवृत्तिम् (सूत्र ८७४) अनुसरति। सूत्रेऽस्मिन् पुनः कित्करणाद् उत्तरसूत्रे च इदनुवर्त्तनाद-स्थानेऽयं पाठो लेखकप्रमादात् पठितः।

# ॥ अथ पञ्चमः पादः ॥

**लङ्घेरटिर्नलोपश्च ॥१॥**

लङ्घेरटिः प्रत्ययो नकारलोपश्च । लङ्घत इति **लघट्** ॥

**सर्त्तेश्च ॥२॥**

सर्त्तेरटिप्रत्ययः । धावतीति **सरट्**—जन्तुविशेषः ॥

**शकादिभ्योऽटन् ॥३॥**

एभ्योऽटन् प्रत्ययः । शक्नोति शक्यते वाऽनेन गन्तुमिति **शकटम्**—यानम् । अवतीति **अवटम्**—छत्रम् । दीव्यतीति **देवटः**—शिल्पी । मर्क इति सौत्रः । मर्कतीति **मर्कटः**—वानरः । वय समवाये । वयतीति **वयटः**—रसः । चमतीति **चमटः**—खरः । बिभर्त्ति भ्रियते वा **भरटः**—भृत्यः । चपतीति **चपटः** । एवमन्येऽपि ॥

**कॄतॄकपिभ्यः कीटन् ॥४॥**

एभ्यः कीटन् । कीर्यत इति **किरीटम्**—मुकुटम् । तरति तीर्यते वा **तिरीटम्**—कुलम् । कम्पत इति **कम्पीटम्**—कम्पा ॥

**जनेष्ट लोपश्च ॥५॥**

जनेष्टः प्रत्ययोऽन्त्यस्य लोपः । जायते जजन्ति जन्यते वा **जटा**—उद्ग्रथिताः केशाः ॥

॥ इति टान्ताः ॥

**कमेरठः ॥६॥**

कमेरठप्रत्ययः । काम्यतेऽसौ **कमठः**—इच्छाभोजनः ॥

**कणेष्ठः ॥७॥**

कणेष्ठप्रत्ययः । ण्यन्तः प्रकृत्यन्तरं वा । कणयति कण्यते वेति **कण्ठः**—गलः ।

बहुलग्रहणादन्यतोऽपि ठप्रत्ययः । कुणति कुणयति वा **कुण्ठः**, **गुण्ठः**—अपटुरिन्द्रियः ॥

॥ इति ठान्ताः ॥

**अमन्ताड्डः ॥८॥**

ञमिति प्रत्याहारग्रहणं **ञमङणनम्** [अ० प्र० सू० ७] इति। ञमन्ताद्धातोर्ड-प्रत्ययो भवति। ञकारङकारयोर्नास्त्येवोदाहरणम्। दाम्यतेऽनेनोद्भूतेन जन इति **दण्डः**। दमनं वा **दण्डः**—चतुर्थोपायो······यष्टिर्वा। मन्यतेऽसौ जनैरिति **मण्डः**—अन्न-मुच्यते। वनति वनुते वा **वण्डः**—अल्पशेषः। रण्यते रम्यते वाऽसौ **रण्डा**—पुनर्भू-र्भार्या। बहुलमेव बाहुलकम्—

**क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव।**
**विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति॥**[1]

बाहुलकवचनात् सत्यप्यनुबन्धप्रयोजने डकारस्यानुबन्धसंज्ञा नास्ति, उत्तरत्र कित्-करणाद् वा। वक्ष्यति **क्वादिभ्यः कित्** [५।९] इति गुणप्रतिषेधार्थं कित्करणमनर्थकं स्यात्। तस्मात् श्रवणमेव डकारस्य, न लोपः। अन्तकरणं नियमार्थम्। अवसाने यत्र ञमिति ततः प्रत्ययविधिः स्यात्। मध्ये ञमिति तत्र मा भूत्॥

**क्वादिभ्यः कित्॥९॥**

कु आदिर्येषां ते क्वादयः कवर्गादय इत्यर्थः। अणिति प्रत्याहारग्रहणम् **अणुदित् सवर्णस्य चाप्रत्ययः** [अ० १।१।६९] इति। तत्रेष्टिः। अण् उदिच्च सवर्णं गृह्णा-तीति। कवर्गादिभ्यो ञमन्तेभ्यो धातुभ्यो डप्रत्ययो भवति किच्च। कुणति कुण्यते वा **कुण्डम्**—भाण्डम्, उपकरणं परजातं च। कण्यतेऽनेन रिपुवर्ग इति **काण्डः**—शरः, बलसंघातः। गच्छत्युपधानमिति **गण्डः**—वक्त्रैकदेशः। खन्यतेऽसौ **खण्डः**—अपूर्णः, इक्षुविकारश्च। अणतीति **अण्डम्**—गर्भनिलयः।

बाहुलकादञमन्तादपि डप्रत्ययः। कौति कवते वा **कुडः**—बालः। गुङ् अव्यक्ते शब्दे। गवते गूयते वा **गुडः**—इक्षुविकारः। एवमादयोऽन्येऽपि द्रष्टव्याः॥

**अण्डन् कृसृभृवृञः॥१०॥**

एभ्योऽण्डन् प्रत्ययः। क्रियन्ते सामान्यदेशाद् वा तत्रोपरि गृह्यन्ते द्रव्याणीति **करण्डः**—भाण्डजातिः। धावति सिसर्त्ति वा **सरण्डः**—वायुः, भूतसंघातश्च। बिभर्त्ति भरति भ्रियते वा **भरण्डः**—भाण्डजातिः। वृणोति व्रियते वा **वरण्डः**—काष्ठादिसंघातः। सानुबन्धकरणं सामान्यधातुनिवृत्त्यर्थम्।

प्राक्प्रत्ययनिर्देशः शरण्डादीनां प्रसिद्ध्यर्थः। शृणातीति **शरण्डः**—वायुः। तर-तीति **तरण्डः**—वायुः। एतैर्बाहुलकाद् रगागमः। एतीति **एरण्डः**—वायुः। धृ धारणे। ध्रियतेऽस्मिन् लोक इति **धरण्डः**—भुवर्लोकः॥

---

१. अनुपलब्धमूलमिदम्। द्र०—उणा० कातन्त्र (१।२६, पृष्ठ ७)।

सर्त्तेरडिः ॥११॥

धावति सिसर्तीति वा **सरट्**—वायुः ॥

अर्त्तेः फिडफिड्डौ ॥१२॥

अर्त्तेरेतौ स्तः कितौ च । ऋच्छति इर्यत्ति वा **ऋफिडः, ऋफिड्डः** ॥

॥ इति डान्ताः ॥

शमेर्ढः ॥१३॥

शमेर्ढप्रत्ययो भवति । शान्तान्यस्य सर्वेन्द्रियाणीति **शण्ढः**—नपुंसकः ॥

॥ इति ढान्तः ॥

श्यास्त्याहृञविभ्य इनच् ॥१४॥

एभ्य इनच् प्रत्ययः । श्यायतेऽसौ **श्येनः**—गृध्रः । स्त्यायतीति **स्तेनः**—चौरः । बाहुलकाद्यलोपः । हरत्यपवादं जिहर्त्तीति वा **हरिणः** । अवतीति **अविनः**—राजा, अध्वर्युश्च ॥

वृजेः किच्च ॥१५॥

वृजेरिनच् किच्च । वृणक्ति वृज्यते वा **वृजिनम्**—कुटिलं पापं च ॥

अजेरज च ॥१६॥

अजेरिनच् अज इत्ययं चादेशः । अजति वीयते वा तदिति **अजिनम्** । अजेरजादेशकरणं व्यादेशनिवृत्त्यर्थम् ॥

बहुलमन्यत्रापि ॥१७॥

अन्येभ्योऽपि धातुभ्य इनच् भवति । कठतीति **कठिनम्**—अमृदु । एवमन्यत्रापि ।

अपरा वृत्तिः—बाहुलकादन्यस्मिन्नपि प्रत्यये परतः अजेरजादेशः । तेन अजतीति **अजिता**—गन्ता । **अजिः**—वीचिः, निशा वा । समजतीति **समजः** । **संज्ञायां**[अ० ३।३।९९] क्यप् । **समज्या** ॥

द्रुदक्षिभ्यामिनन् ॥१८॥

आभ्यामिनन् । द्रूयते तदर्थिभिरिति **द्रविणम्**—धनम् । दक्षत इति **दक्षिणः**—परचित्तानुरञ्जिता ॥

अर्त्तेः किदिच्च ॥१९॥

अर्त्तेरिनन् किच्च इदादेशश्च । ऋच्छति इर्यत्ति वा तदिति **इरिणम्**—तृणस्थानम् ॥

**द्रुहेः ॥२०॥**

द्रुहेरिनन् प्रत्ययः । द्रुह्यत इति **द्रुहिणम्**—विषम् ॥

**वेपितुह्योर्ह्रस्वश्च ॥२१॥**

आभ्यामिनन् ह्रस्वश्च । वेपत इति **विपिनम्**—गहनं वनम् । तुहिर् अर्दने । तोहति तुह्यते वा अर्केणेति **तुहिनम्**—अन्धकारः ॥

**महेरिनण् च ॥२२॥**

महेरिनण् प्रत्ययः, चकारादिनच् । मह्यतेऽस्मिन्निति **माहिनम्**, **महिनम्**—राज्यम् ॥

**सुयुरुवृञो युच् ॥२३॥**

एभ्यो युच् । सुनोति सूयते वा सवनम् । पूर्वाह्णापराह्णमध्याह्नादिकालः त्रिषवणम् । यौति यूयते वा **यवनः**—देशः । रौतीति **रवणः**—वायुः भ्रमरश्च । वृणाति व्रियते वा **वरणम्**—कन्याप्रतिपादनम् ॥

**अशे रश च ॥२४॥**

अशेर्युच् रशादेशश्च । अश्नुतेऽश्नाति वा त्रिकगतस्पर्शमिति **रशना** ॥

**उन्देर्नलोपश्च ॥२५॥**

अस्माद् युच् नकारलोपश्च । उनत्तीति **ओदनः**—शाल्यन्नम् ॥

**बहुलमन्यत्रापि ॥२६॥**

अन्येभ्योऽपि धातुभ्यो बहुलं युच् । स्यन्दत इति **स्यन्दनः**—रथः । मज्जत्यस्मिन्निति **मज्जनम्**—तोयम् । दीव्यत इति **देवनः**—कितवः । रोचतेऽत्यर्थमिति **रोचनः**—चन्द्रः । भृज्जतीति **भर्ज्जनः**—पाकः ॥

**रजः क्युन् ॥२७॥**

रजेः क्युन् प्रत्ययः । रज्यतेऽनेनेति **रजनम्** ॥

**भूसूधूभ्रस्जिभ्यश्छन्दसि ॥२८॥**

एभ्यः क्युन् छन्दसि । भवन्ति तस्मिन् भूतानीति **भुवनम्**—अन्तरिक्षं लोकश्च । सूते सूयते वा **सुवनम्**—आदित्यः, अंकुरप्रादुर्भावश्च । धुनोति धुवति वा **धुवनः**—वायुः, अग्निश्च । भृज्जतीति **भृज्जनम्**—अम्बरीषम् । छन्दसीति किम्? भवनम्, सवनम्, भर्ज्जनम् । **युच्** [५।२६] । एवमन्येऽपि ॥

**कॄपॄवृजिमन्दिनिधाञ्भ्यः क्युः ॥२९॥**

एभ्यः क्युश्छन्दसि विषये । किरतीति **किरणम्**—रश्मिः । पृणाति पूर्यते वा **पूरणः**—समुद्रः । वृणक्ति वृज्यते वा **वृजनम्**—निवारणम्, अन्तरिक्षम् । मदि स्तुत्यादिषु । मन्दतेऽनेनेति **मन्दनम्**—स्तोत्रम् । निदधातीति **निधनम्**—नाशः । छन्दसीत्येव । करणम्, परणम्, वर्जनम्, मन्दनम्, निधानम् । **युच्** [५।२६] । किरतीति **किरणम्** । एवमन्येऽपि ॥

**धृषेर्धिष च संज्ञायाम् ॥३०॥**

धृषेः क्युः धिषादेशः संज्ञायां विषये । धृष्णोत्यनयेति **धिषणा**–प्रज्ञा । संज्ञायामिति किम् ? धर्षणं, धर्षणा । युच् । संज्ञायामिति वर्त्तमाने पुनः संज्ञाग्रहणं छन्दोऽधिकारनिवृत्त्यर्थम् ॥

**हनो जघ च ॥३१॥**

हन्तेः क्युः जघादेशश्च । हन्ति हन्यते वा **जघनम्**—कटिः ॥

**छन्दस्यसानच् शुजॄभ्याम् ॥३२॥**

छन्दसि विषये शुजॄभ्यामसानच प्रत्ययः। शु गतौ । शवति शूयते वा **शवसानः**—पन्थाः । जीर्यत इति **जरसानः**—प्राणी ।

प्राक्प्रत्ययनिर्देशः शरसानादीनां प्रसिद्धयर्थः । शृणातीति **शरसानः**—अग्निः । तरतीति **तरसानः** ।

**शशाङ्के भास्करे चैव वायावग्नौ प्रजापतौ ।**
**इन्द्रे मनोरथे प्रश्ने तरसानं स्मरेद् बुधः ॥**[1]

वृणोतीति **वरसानः**—मनोरथः ॥

**ऋजिवृधिमन्दिसहिभ्यः कित् ॥३३॥**

एभ्योऽसानच् किच्च । ऋजतीति **ऋजसानः**—मेघः । वर्धत इति **वृधसानः**—गर्भो मृत्युश्च । मन्दते **मन्दसानः**—स्वप्नः ।

**जीवेऽग्नौ भास्करे चैव शशाङ्के हंसके तथा ।**
**मन्दसानं स्मरेद् धीमान् रन्ध्रैः सर्वेषु संस्थितम् ॥**[2]

सहत इति **सहसानः**—क्षमावान् ॥

**अर्त्तेर्गुणः शुट् च ॥३४॥**

---

१. अनुपलब्धमूलमिदम् । २. अनुपलब्धमूलमिदम् ।

अर्त्तेरसानच् गुणः शुडागमश्च । ऋच्छत्यर्यते वा अर्शसानः—पन्थाः ॥

**सम्यानच् स्तुवः ॥३५॥**

सम्युपपदे स्तौतेरानच् प्रत्ययः । संस्तौतीति संस्तवानः—वाग्मी ॥

**युजियुधिबुधिदृशेः कित् ॥३६॥**

एभ्य आनच् किच्च । युज्यत इति युजानः । युध्यत इति युधानः—इषुः । बोधयन्तीति बुधानाः । पश्यतीति दृशानः ॥

**हूर्च्छेः सनो लुक् छलोपश्च ॥३७॥**

सन्नन्ताद् हूर्च्छेरानच् सनो लुक् छलोपश्च । जुहूर्च्छिषतीति जुहुराणः—कठिन-हृदयः ॥

**इण्सिञ्दीङुष्यविभ्यो नक् ॥३८॥**

एभ्यो नक्प्रत्ययः । यन्त्यर्थिन इति इनः—ईश्वरः । सिनोति सीयते वा सिनः—कायं बन्धो वा । दीङ् क्षये । दीयत इति दीनः—दुर्गतिः खिन्नश्च । उष्यतेऽनेन शरीरमिति उष्णम् । अवतीति ऊनः—असम्पूर्णः ॥

**फेनमीनौ ॥३९॥**

एतौ नक्प्रत्ययान्तौ निपात्येते । स्फायी वृद्धौ । अस्य फीभावो गुणश्च निपात्यते । स्फायत इति फेनः—बुद्बुद्संघातः । मिनातीति मीनः—जलचरः ॥

**कृषेर्वर्णे ॥४०॥**

कृषेर्नक् वर्णेऽभिधेये । कृष्यत इति कृष्णः—वर्णः ॥

**बन्धेर्ब्रधबुधौ च ॥४१॥**

बन्धेर्नक्प्रत्ययः ब्रध बुध एतौ चादेशौ । बध्नाति बध्यते वा ब्रध्नः—संकल्पो मनश्च देवो वा । एवं बुध्नः ॥

**धापॄवस्यज्यतिभ्यो नः ॥४२॥**

एभ्यो नः । धीयन्त आसां विकारैः प्राणिन इति धानाः—यवविकारः । पृणाति पूर्यत इति पूर्णम्—अवसानम् । वस्तेऽनेनेति वस्नम्—वासः । अजतीति वेनः । अततीति अत्नम्—वायुरात्मा आयुर्वा ॥

**लक्षेरट् च ॥४३॥**

लक्षेर्नप्रत्ययोऽडागमश्च । लक्ष्यतेऽनेनार्थ इति लक्षणम्—कारणम् । लक्ष्यतेऽनेन शुभाशुभमिति लक्षणम्—तिलकादि रेखा वा ॥

## सिवेष्टेयुं च ॥४४॥

सिवेर्नप्रत्ययः टेश्च यु इत्यादेशः। सीव्यतेऽनेनेति **स्योनः**— रश्मिः, आस्तरणं वा ॥

## कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित् ॥४५॥

एभ्यो नप्रत्ययो निच्च। कीर्यत इति **कर्णः**—श्रोत्रम्। वृणोति व्रियते वा **वर्णः**—अकारादिः, ब्राह्मणादिर्वा श्वेतादिर्वा वर्ण उच्यते। जीर्यत इति **जीर्णः**—वयः, धर्मो वा। सिनोति सीयते वा **सेना**—बलसंघातः। द्रवति द्रूयते वा **द्रोणः**—मानभाण्डम्। पन इति सौत्रः। पनतीति **पन्नम्**— नीचैः करणम्। अन्यते तदिति **अन्नम्**— आहारः। स्वपन्त्यनेन निविष्टा इति **स्वप्नः**— निद्रा ॥

## धेट ई च ॥४६॥

धेटो न ई धान्तादेशः। धयन्ति तामिति **धीना**—सरस्वती माता च ॥

## तृषिशुषिरसिभ्यः कित् ॥४७॥

एभ्यो नः किच्च। तृष्यतेऽनेनेति **तृष्णा**—पिपासा रागबन्धनं च। शुष्यतीति **शुष्णम्**—अनुदकम्। रसतीति **रस्नम्**—द्रव्यजातिः ॥

## सुञो दीर्घश्च ॥४८॥

सुञो नः किच्च दीर्घश्च। सुन्वन्त्यस्यां प्राणिनां शरीराणीति **सूना**—मांस-विक्रयः ॥

## रमेस्त च ॥४९॥

रमेर्नः तश्चान्तादेशः। रमतेऽस्मिन्निति **रत्नम्**—वज्रवैडूर्यादिः ॥

## रास्नासास्नास्थूणावीणाः ॥५०॥

एते नप्रत्ययान्ता निपात्यन्ते। रातेः सगागमो निपात्यते रसतेर्दीर्घत्वं च। राति रसति रस्यते वा **रास्ना**—ओषधिः। षस स्वप्ने। अस्योपधाया दीर्घत्वम्। सस्तीति **सास्ना**—गोगलचर्म। स्थः स्थू आदेशो निपात्यतेऽगुणत्वं च। तिष्ठतीति **स्थूणा**—स्तम्भः। अजेर्वीभावोऽगुणत्वं च। अजतीति **वीणा**—वल्लकी ॥

## गादाभ्यां चेष्णक् ॥५१॥

आभ्यां चेष्णक् प्रत्ययः। गायन्ति तस्मिन्निति **गेष्णम्**—मखः, उद्गाता। ददातीति **देष्णः**—दानशीलः ॥

### कृत्यशिभ्यां क्स्नक्[1] ॥५२॥

आभ्यां क्स्नक् प्रत्ययः। कृणत्तीति **कृत्स्नम्**—निरवशेषम्। अश्नुत इति **अक्ष्णम्**—तेजनम् ॥

### तिजेर्दीर्घश्च ॥५३॥

तिजेः क्स्नक् दीर्घश्च। तितिक्षते जनमिति **तीक्ष्णम्**—निशितम् ॥

### श्लिषेरच्चोपधायाः ॥५४॥

श्लिषेः क्स्नक् उपधाया अच्च। श्लिष्यत इति **श्लक्ष्णम्**—मृदु ॥

### कृवृतृदारिभ्य उनन् ॥५५॥

एभ्य उनन् प्रत्ययः। किरति मनांसीति **करुणः**—शोचनीयः। वृणोति व्रियते वा **वरुणः**—अपां पतिः। तरति तेनेति **तरुणः**—युवा। दारयति दार्यते वा **दारुणः**—रोषः ॥

### पिशेः किच्च ॥५६॥

पिशेरुनन् किच्च। पिशतीति **पिशुनः**—सूचकः ॥

### लपेः श च ॥५७॥

लपेरुनन् शश्चान्तादेशः। लपति लप्यते वा **लशुनः**—पलाण्डुजातिः ॥

### फलेर्गुक् च ॥५८॥

फलेरुनन् गुगागमश्च। फल निष्पत्तौ। फलतीति **फल्गुनः**—पार्थः ॥

### त्रो रश्च लः ॥५९॥

तॄ इत्येतस्मादुनन् रेफस्य च लकारः। तरति सर्वमिति **तलुनः**—वायुः। बाहुलकात् **तरुण** इत्यपि भवति ॥

### अर्जेर्णिलुक् च ॥६०॥

अर्जेरुनन् णेर्लुक् च। अर्जयतीति **अर्जुनः** ॥

### तृणाख्यायां चित् ॥६१॥

अर्जेरुनन् णिलुक्च चित्संज्ञश्च तृणेऽभिधेये। अर्जयतीति **अर्जुनम्**—तृणम् ॥

### अर्तेश्च ॥६२॥

अर्तेरुनन् चित्संज्ञः। ऋच्छत्यर्यते वा **अरुणः**—वैनतेयः ॥

---

१. द्विः कित्करणमनर्थकम्।

**धारेर्णिलुक् च ॥६३॥**

धारेरुनन् चित्संज्ञो णिलुक् च । धारयतीति **धरुणः** ॥

**अजियमिशीङ्भ्यश्च ॥६४॥**

उनन् चित्संज्ञः । अजति वीयते वा **वयुनः**—चन्द्रमाः । **वयुनानि**—अङ्गानि । यच्छति भक्तानां पापमिति **यमुना**—नदी । अत्यथं शेत इति **शयुनः**— अजगरः ॥

**तृहेः क्नन् हलोपश्च ॥६५॥**

तृहेः क्नन् हलोपश्च । तृह्यते गवादिभिरिति **तृणम्**—वृक्षः ॥

**अर्त्तेर्युजुच्च ॥६६॥**

अर्त्तेर्युच् प्रत्ययः उच्चास्यादेशः । ऋच्छत्यर्यते वा **उरणः**—वायुः, मेघः । उरण्रपरः [अ० १।१।५१] इति रपरत्वम् ॥

**ऊर्णोतेर्डः ॥६७॥**

ऊर्णोतेर्डः प्रत्ययः । ऊर्णोतीति **ऊर्णा**—अविलोमानि ॥

**पृपूभ्यां तनन् किच्च ॥६८॥**

आभ्यां तनन् किच्च । पिपर्त्तीति **पृतना**—सेना । पवत इति **पूतना**—राक्षसी ॥

**वीपतिभ्यां च ॥६९॥**

आभ्यां च तनन् प्रत्ययः किच्च । वेति वीयते वा **वेतना**—भृतिः । बाहुलकाद गुणः । पततीति **पत्तनम्**—नगरम् ॥

॥ इति णान्ता नकारसहिताः ॥

॥ इति पञ्चमः पादः ॥

---

# ॥ अथ षष्ठः पादः ॥

**मृग्रोरुतिः ॥१॥**

आभ्यामुतिः प्रत्ययः । म्रियतेऽसौ न कदाचिदिति **मरुत्**—वायुः, **मरुतः**-देवाः । गृणाति गिरति वा **गरुत्**—अजगरः । गीर्यत इति **गरुत्**—मणिः ॥

**गर्मुत् ॥२॥**

अयं निपात्यत उति प्रत्यये, मुगागमश्च । गृणाति गिरति गीर्यते वा **गर्मुत्**—आदित्यः सुपर्णो वा ॥

**हृसृरुहियुषिभ्य इतिः ॥३॥**

एभ्य इतिः । हरति जिहर्त्ति वा हृदयेऽसौ **हरित्**—वायुः, मृगजातिश्च । सरति सिसर्त्ति वा **सरित्**—नदी । रोहतीति **रोहित्**—वीरुत्प्रकारः सूर्याग्निश्च । युषि सौत्रो धातुः । योषति युष्यते वा **योषित्**—प्रमदा ॥

**तडेर्णिलुक् च ॥४॥**

ताडेरितिर्णेर्लुक् च । तड आघाते चौ० । ताडयति मेघान् ताड्यते वायुना वेति **तडित्**—शतह्रदा ॥

**वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवच्च ॥५॥**

वर्त्तमाने काले पृषदादयः शब्दा निपात्यन्ते शतृवच्चैषां कार्यं भवति । पृषु सेचने। अस्य कतिप्रत्ययः । पर्षतीति **पृषत्** । पृणातेर्वा ह्रस्वः षुक् च । **पृषत्**—चित्रवर्ण-जातिः शीकरश्च । बृह बृहि वृद्धौ । अस्य नकारलोपः । बर्हति बृंहतीति वा **बृहत्**—विस्तीर्णम् । महति महयति वा तदिति **महत्**—पूजितं, विस्तीर्णं च । गमेर्द्विः टिलोपश्च । अहरहः क्षयं गच्छतीति **जगत्**—स्थावरजङ्गमलोकः ।

शतृवदिति निर्देशो नुमाद्यर्थः । **पृषती**—मृगी । छन्दसीत्येव । **बृहती** । **जगती** ।

वर्त्तमानाधिकारे पुनर्वर्त्तमानग्रहणं नियमार्थम् । वर्तमान एव पृषदादयः साधवो नान्यत्रेति ॥

**संस्वत्तृपद्वेहत् ॥६॥**

एते निपात्यन्तेऽतिप्रत्यये । व्येञोऽन्तलोप उपसर्गस्य सकारागमः । संव्ययतीति **संस्वत्**—कुत्सकः । तृप्यति तृपति तृणेढि तृहति वा **तृपत्**—चन्द्रमाः । हन्तेर्विपूर्वस्य

टिलोपो निपात्यते पूर्वस्य च गुणः। विहन्ति गर्भमिति वेहत्—अप्रजा स्त्री मृतापत्या वा अनड्वांश्च ॥

**हसिमृग्रिण्वामिदमितमिलूपूधूर्विभ्यस्तन् ॥७॥**

एभ्यस्तन् प्रत्ययः। हसतीति **हस्तः**—पाणिः। म्रियत इति **मर्तः**—प्राणी। गिरति गृणाति वा **गर्तः**—अवटः। एतीति **एतः**—वायुः पथिकश्च। वातीति **वातः**—मातरिश्वा। अम्यतेऽसाविति **अन्तः**—यस्य पूर्वोऽस्ति न परः सः। दाम्यतीति **दन्तः**—दशनः। ताम्यतीति **तन्तः**। लुनाति लूयते वा **लोतः**—वाष्पं लवणं च। पुनाति पवते वा **पोतः**—अग्निः समुद्रयानं डिम्भश्च। धूर्वतीति **धूर्तः**—शठः ॥

**तनिमूङ्भ्यां किच्च ॥८॥**

आभ्यां तन् किच्च। तनोति तन्यते वा **ततम्**—विस्तीर्णम्। मवते मूयते वा **मूतः**—आलानपाशः, अन्यद्वा बन्धनम् ॥

**अञ्जिघृसिभ्यः क्तः ॥९॥**

एभ्यः क्तः। अनक्ति अज्यते वेति **अक्तम्**—म्रक्षितम्। जिघर्तीति **घृतम्**—सर्पिः। सिनोतीति **सितम्**—शुक्लं बन्धश्च ॥

**दुतनिभ्यां दीर्घश्च ॥१०॥**

आभ्यां क्तो दीर्घश्च। दुनोतीति **दूतः**—सन्धानकर्त्ता। तनोतीति **तातः**—पिता ॥

**नञ्याप इट् च ॥११॥**

नञि उपपद आप्नोतेः क्त इट् चागमः। नाप्नोतीति **नापितः**—श्मश्रुकर्मकर्त्ता ॥

**जेर्मूट् चोदात्तः ॥१२॥**

जेः क्तो मूट् चागमः स चोदात्तो दीर्घश्च। जयति जीयते वा वायुनेति **जीमूतः**—मेघः ॥

**मुहेरूर् किच्च ॥१३॥**

मुहेः क्तः प्रत्यय ऊर्चागमः किच्च। मुह्यतीति **मुहूर्त्तः** ॥

**नौ माङो मित् ॥१४॥**

.................. ॥

**हृश्याभ्यामितच् ॥१५॥**

आभ्यामितच् प्रत्ययः। हरति जिहर्त्तीति वा **हरितः**—वर्णः, मत्स्यश्च। श्यायत इति **श्येतः**—वर्णः ॥

**रुहे रश्च लो वा ॥१६॥**

रुहेरितच्। रेफस्य च लो वा। रोहतीति **रोहितः**—मृगविशेषः। **लोहितः**—वर्णः ॥

**मृभृदृशीङ्यजिपर्विपच्यमिनमितमिहर्यिभ्योऽतच् ॥१७॥**

एभ्योऽतच् प्रत्ययः। म्रियत इति **मरतः**। बिभर्त्ति भरतीति **भरतः**—राजा। द्रियत इति **दरतः**—आदरी। शेतेऽत्यर्थमिति **शयतः**—निद्रालुः। यजतीति **यजतः**—अग्निः। पर्वतीति **पर्वतः**—गिरिः। पचतीति **पचतः**—अग्निः, आदित्यो वा। अमतीति **अमतः**—अन्तको मृत्युर्वा। नमति नम्यते वा **नमतः**—वटुः, देवो वा ताम्यतीति **तमतः**—निर्वेदी। हर्यतीति **हर्यतः**—वायुः, अश्वः, रश्मिश्च ॥

**पृषिरञ्जिभ्यां कित् ॥१८॥**

आभ्यामतच् किच्च। पृषतीति **पृषतः**—मृगः। रजतेऽस्मिन् जन इति **रजतम्**—रूप्यम् ॥

**खलतः ॥१६॥**

अयं निपात्यते। स्खलतेः सकारलोपः। खलिताः केशा यस्य स **खलतः**—विकीर्णकेशः ॥

**जृविशिभ्यां झच् ॥२०॥**

जीर्यतीति **जरन्तः**—ऋजुः, ग्रामश्च। विशतीति **वेशन्तः**—अप्राप्तवर्गः कान्तश्च ॥

**रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि ॥२१॥**

एभ्यो झच् षिच्च आशिषि। रोहतीति **रोहन्तः**—वीरुत्। **रोहन्ती** स्त्री। नन्दयन्तीति **नन्दयन्तः**। **नन्दयन्ती** स्त्री। जीव्यादिति **जीवन्तः**—आयुष्मान्। **जीवन्ती** स्त्री। प्राण्यादिति **प्राणन्तः**—वायुः, रसायनं च। **प्राणन्ती** स्त्री। षित्करणं ङीषर्थम्। भविष्यत्कालः ॥

**तॄभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च ॥२२॥**

एभ्यो झच् आशिषि षिच्च। तीर्यात् **तरन्तः**—आदित्यः। भूयाद् **भवन्तः**—कालः। उह्याद् **वहन्तः**—वायुः। उष्याद् **वसन्तः**। भासिषीष्टेति **भासन्तः**—सूर्यः। साध्यात् **साधन्तः**—शिष्यः। गड्याद् **गडन्तः**—जलदः। मण्ड्यात् **मण्डन्तः**—

अलङ्कारः। जीयात् जयन्तः—राजा। जयन्ती—पुष्पजातिः। नन्द्यात् नन्दयन्तः—आनन्दः। केचिद् वर्त्तमानेऽपि वर्णयन्ति ॥

**हन्तेर्मुट् हि च ॥२३॥**

हन्तेर्झच् मुडागमो हि चादेशः। हन्ति पद्मानीति **हेमन्तः**—ऋतुः ॥

**उचिकुषितुषिभ्यः कितच् ॥२४॥**

एभ्यः कितच्। उच समवाये दि०। उच्यत इति **उचितम्**—वंशागतं श्रेष्ठम्। कुष्यतीति **कुषितम्**—श्लिष्टम्। तुष्यत इति **तुषितम्** ॥

**अदि भुवो डुतच् ॥२५॥**

अद्युपपदे भुवो डुतच्। अद्भूयत अद्भवतीति **अद्भुतम्**—आश्चर्यम् ॥

**सौ रमेः क्तो दमेः पूर्वपदस्य च दीर्घः ॥२६॥**

सावुपपदे रमेः क्तो दमेश्च क्तः पूर्वपदस्य च दीर्घः। सुष्ठु रमत इति **सुरतम्**। दाम्यति दम्यते वेति **सुदन्तः**—हस्ती। अन्यो वा सुदन्तः ॥

**फलेरितजादेश्च पः ॥२७॥**

फलेरितच् आदेश्च पः। फलतीति **पलितम्**—शाकादि, जरा च ॥

**जनेस्तो र च ॥२८॥**

जनेस्तो रश्चान्तादेशः। जायत इति **जर्त्तः**—वस्त्रलोम। कर्त्ता ॥

**शकेर्ऋतिन् ॥२९॥**

शक्नोतीति **शकृत्**—विष्ठा ॥

॥ इति तान्ताः ॥

**हनिकुषिनीरमिकाशिभ्यः क्थन् ॥३०॥**

एभ्यः क्थन्। हन्तीति **हथः**—कलहः। कुष्यतीति **कुष्ठः**—व्याधिः। शोभनं नयतीति **सुनीथः**—नीतिमान्, धर्मकारः। रमन्तेऽस्मिन् प्राणिन इति **रथः**—स्यन्दनः। काश्यतेऽनेनाग्निरिति **काष्ठम्**—इन्धनम् ॥

**अवे भृञः ॥३१॥**

अव उपपदे भृञः क्थन्। अवभरति अवबिभर्त्ति वा जनान् तस्माद् **अवभृथः**—यज्ञान्तस्नानम् ॥

**उषिकुषिगार्त्तिभ्यस्थन् ॥३२॥**

एभ्यस्यन् । उष्यते व्यञ्जनैर्नानावर्णैरिति **ओष्ठः** । उष्यते वा तेनेति **ओष्ठः**—दन्तच्छदः । कुष्णाति कुष्यते वा तस्मिन्नाहार इति **कोष्ठम्**—उदरम् । गीयतेऽसौ गायति वा तामिति **गाथा**—वृत्तजातिः । ऋच्छति तं अर्यते वेति **अर्थः**—धनम्, वाङ्मयं वा, वृत्तिर्वा ॥

**सर्त्तेर्णित्** ॥३३॥

थन् णिच्च । स्रियते धावति सिसर्त्ति वेति **सार्थः**—फक्किकासंघातः ॥

**जॄवृञोरूथन्** ॥३४॥

आभ्यामूथन् । जीर्यत इति **जरूथम्**—कश्मलम् । वृणोतीति **वरूथम्** ॥

**पातॄतुदिवचिसिचिरिचिभ्यस्थक्** ॥३५॥

पिबति तेज इति **पीथः**—मत्सरः । तरन्ति तीर्यते वा तेनेति **तीर्थम्**—पुण्यजलविशेषः । तुदन्तेऽनेन तस्मिन्वा **तुत्थम्**—द्रव्यम् । उच्यते तदिति **उक्थम्** । सिच्यते तदिति **सिक्थम्** । रिच्यते तदिति **रिक्थम्**—गृहधनद्रव्यं च ॥

**अर्त्तेर्निरि** ॥३६॥

निरि उपपदेऽर्त्तेस्थक् प्रत्ययः । नियतं निश्चितं ऋच्छत्यर्यते वेति **निर्ऋथः**—स्थानम् ॥

**निशीथगोपीथावगथाः** ॥३७॥

एते थक्प्रत्ययान्ताः । नियतं शेरते तस्मिन्निति **निशीथः**—अर्धरात्रः । गावः पिबन्ति तस्मिन्निति **गोपीथः**—जलह्रदः । गमेर्मलोपः । अवगच्छत्यस्मिन्निति **अवगथः**—प्रातःसवनम् । गातेर्ह्रस्वत्वं वा । अवगायति तदिति **अवगथम्**—साम ॥

**ग उदि** ॥३८॥

गा एतस्मात् थक् उद्युपपदे । उद्गीयतेऽसौ **उद्गीथः** ॥

**समीणः** ॥३९॥

सम्युपपद इणस्थक् । समेति समीयते वा **समिथः**—कालातिथिः ॥

**तिथपृष्ठगूथयूथप्रोथाः** ॥४०॥

थक्येते निपात्यन्ते । तिष्ठति तिम्यति वा **तिथः**—प्रावृट्कालः । स्पृशेः सलोपः । स्पृशतीति **पृष्ठम्**—शरीरैकदेशः । गवत इति **गूथम्**—अमेध्यम् । अत्र दीर्घत्वम् । यौतीति **यूथम्**—गजादिसंघातः । अत्रापि दीर्घः । प्रवतेर्गुणः । प्रवत इति **प्रोथः**—वराहमुखम् ॥

**शीङ्शपिरुगमिवन्दिजीविप्राणिभ्योऽथः ॥४१॥**

एभ्योऽथप्रत्ययः । शेतेऽत्यर्थमिति **शयथः**—अजगरो वराहश्च । शपन्ति तेनेति **शपथः**—प्रत्ययकरणम् । रौतीति **रवथः**—शब्दकारः । गच्छति गम्यते वा **गमथः**—पथिकः पन्था वा । वन्दते **वन्दथः**—स्तोता स्तुत्यं च । जीवति जीवयति वा **जीवथः**—धार्मिकोऽग्निश्च, अर्थवांश्च । प्राणितीति **प्राणथः**—बलवान् ईश्वरश्च ॥

**आङि वसः ॥४२॥**

आङ्युपपदे वसेरथः । एतस्मिन् वसन्तीति **आवसथः**—आलयः ॥

**भृञश्चित् ॥४३॥**

भृञोऽथश्चित्संज्ञः । बिभर्त्ति भरतीति वा **भरथः**—लोकपालः ॥

**रुदिविदिभ्यां कित् ॥४४॥**

आभ्यामथः कित्संज्ञः । रोदित्यत्यर्थमिति **रुदथः**—आर्त्तः शिशुर्वा । वेत्तीति **विदथः**—ज्ञानी ॥

**॥ इति थान्ताः ॥**

**शॄदॄभसोऽदिः ॥४५॥**

एभ्योऽदिप्रत्ययः । शीर्यतेऽस्मिन् तृणमिति अथवा गुल्मवनस्पतिजातीनां तेजांसीति **शरत्**—ऋतुः । दृणाति दीर्यते वा **दरत्** । बभस्ति भस्यते वा तस्मिन्नाहार इति **भसत्**—आमाशयस्थानम् ॥

**त्यजितनियतिभ्यो डित् ॥४६॥**

एभ्योऽदिर्डिच्च । त्यजति **त्यत्**—परोक्षवादी । तनोतीति **तत्**—अयं च परोक्षवादी । यतत इति **यत्** ।

**प्रत्यक्षे च परोक्षे च समीपे दूरतस्तथा ।**
**सर्वेषां च प्रयोक्तव्यस्तथा पुंसि नपुंसके ॥**[1]

**एतेस्तुट् च ॥४७॥**

एतेरदिः सुडागमश्च । एतीति **एतत्**—प्रत्यक्षवादी । एतदपि सर्वनामैव ॥

**दृणातेः षुक् ह्रस्वश्च ॥४८॥**

दृणातेरदिः षुक् चागमो ह्रस्वश्च धातोः । दृणाति दीर्यतेऽस्यामिति **दृषत्**—शिला ॥

१. अनुपलब्धमूलमिदम् ।

**कुणिपुलोः किन्दच् ॥४९॥**

आभ्यां किन्दच् । कुणतीति कुणिन्दः—पोलतीति पुलिन्दः ॥

**कुपेर्व च ॥५०॥**

किन्दच् वान्तादेशश्च । कुप्यतीति कुविन्दः ॥

**शाशपिभ्यां ददचौ ॥५१॥**

आभ्यां ददचौ प्रत्ययौ भवतः । श्यति शायते वेति शादः—मृगः । शपन्ति तेनेति शब्दः—घोषः, संस्कृता वाक् ॥

**अब्दादयश्च ॥५२॥**

निपात्यन्ते दे । आप्नोतेर्ह्रस्वत्वं बान्तादेशश्च । आप्नोत्यसौ सूर्यं मेषादिकालम् इति अब्दः—संवत्सरः । मन्यते मनुते वा मन्दः—अप्रगल्भः । वृहि वृद्धौ । अस्य हलोपो गुणत्वं च निपात्यते । वृंहयते वृहति वा वृन्दः—संघातः । कमेरस्योत्वम् । काम्यत इति कुन्दम्—पुष्पजातिः ॥

**युष्यसिभ्यां मदिक् ॥५३॥**

आभ्यां मदिक् । युषिः सौत्रः । युष्यत इति युष्मद् । अस्तीति अस्मद् ॥

॥ इति दान्ताः ॥

**कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवुभ्यः ॥५४॥**

एभ्यः कनिन् प्रत्ययः । यौतीति युवा—मिश्रणकर्त्ता । वर्षत इति वृषा—देवः । तक्ष्णोति तक्षतीति वा तक्षा । राजतेऽत्यर्थमिति राजा । धन्व इति सौत्रः । धन्वतीति धन्वा—कुत्सितो देशः । आद्यूयतेऽसौ द्युवा—अभिगमनीयः । प्रतिदीव्यत्यस्मिन्निति प्रतिदिवा—दिवसः ।

प्राक्प्रत्ययनिर्देशोऽक्षादौ प्रसिद्ध्यर्थः । अश्णोतीति अक्षा—दृष्टिनिपातः । ईष्टे ईशा—परमात्मा । लुनातीति लुवा—दात्रम् ॥

**नञि जहातेः ॥५५॥**

नञ्युपपदे जहातेः कनिन् । न जहातीति अहः—दिवसः ॥

**षप्यशूभ्यां तुट् च ॥५६॥**

आभ्यां कनिन् तुट् चागमः। षप समवाये । सपन्तीति सप्त—संख्या । अश्नुत इति अष्टौ—संख्या ॥

**नदंशेर्गणश्च ॥५७॥**

आभ्यां कनिन् गुणश्च। नौतीति **नव**—संख्या। दशतीति **दश**—संख्या॥

**पचेर्नुट् च ॥५८॥**

पचेः कनिन् नुट् चागमः। पचतीति **पञ्च**—संख्या॥

**श्वनुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्निति ॥५९॥**

एते निपात्यन्ते कनिनि। श्वयतेरिकारलोपः। श्वयतीति **श्वा**—कुक्कुरः। उक्षतीति **उक्षा**। पुषेर्दीर्घः। पुष्णातीति **पूषा**। प्लिहेरुपधाया दीर्घत्वम्। प्लिह गतौ। प्लेहतेऽसौ **प्लीहा**—व्याधिः, अध्वगश्च। क्लिद्यतीति **क्लेदा**—विचर्चिका। स्निहेर्गुणः। स्निह्यतीति **स्नेहा**—शीतांशुः शुकश्च। मुह वैचित्ये। उपधादीर्घो धश्चान्तादेशो रुडागमश्च। मुह्यन्ति अस्मिन्नाहता इति **मूर्धा**—उत्तमाङ्गम्। मज्जत्यस्मिन्निति **मज्जा**—आभ्यन्तरः सारः। ऋ गतौ भ्वा०। गुणो युगागमः प्रत्ययस्य चामुडागमः। ऋच्छत्यर्यते वा **अर्यमा**। विश्वं प्सातीति **विश्वप्सा**—अग्निः। जनेरुपधालोपो मश्चान्तादेशः। परिजायतेऽसौ **परिज्मा**—चन्द्रोऽग्निश्च। श्वयतेरिकारलोपः। मातरं श्वयतीति **मातरिश्वा**—वायुः। महेर्घान्तादेशो वुगागमश्च निपात्यते। महयतेऽसौ **मघवा**—इन्द्रः॥

**वीपतिभ्यां तनन् ॥६०॥**

आभ्यां तनन्। वीयते तदिति **वेतनम्**—भृतकदानम्। पतन्ति तस्मिन्निति **पत्तनम्**—क्रयविक्रयस्थानम्॥

**गमेरिनिः ॥६१॥**

गमिष्यतीति **गमी**—द्विजः॥

**आङि णित् ॥६२॥**

आङि गमेरिनिर्णिच्च। आगमिष्यतीति **आगामी**—कालान्तरगतः, पथिकश्च॥

**भुवश्च ॥६३॥**

भुव इनिर्णिच्च। भविष्यतीति **भावी**—आगाम्यर्थः॥

**प्रे स्थः ॥६४॥**

प्र उपपदे स्थ इनिर्णिच्च। प्रस्थास्यतीति **प्रस्थायी**—गन्तुमनाः॥

**परमे कित् ॥६५॥**

परम उपपदे स्थ इनिः किच्च। परमे तिष्ठतीति **परमेष्ठी**—प्रजापतिः॥

**मन्थेश्च ॥६६॥**

इनिः किच्च । मन्थतीति **मन्थाः**—वायुः, वैशाखः, वज्रश्च ॥

**पतेस्थश्च ॥६७॥**

पतेरिनिस्थश्चान्तादेशः । पतन्त्यनेनेति **पन्थाः**—मार्गः ॥

**अदेस्त्रिन् ॥६८॥**

अदेस्त्रिन् प्रत्ययः । अत्ति तपः स्वाध्यायादीनीति **अत्रिः**—ऋषिः । स्वरे विशेषः ॥

**पतेरत्रिनिः ॥६९॥**

पतत्यत्यर्थमिति **पतत्री**—पक्षी ॥

**हृसृभ्यां क्वनिप् ॥७०॥**

आभ्यां क्वनिप् प्रत्ययः । हरति जिहर्त्तीति वा **हृत्वा**—वायुः । धावति सिसर्त्ति वा **सृत्वा**—सर्पः ॥

**सृजेरम् च ॥७१॥**

सृजेः क्वनिप् अमागमश्च । सृजति सृज्यते वा **स्रज्वा**—तन्तुसृक् ॥

**स्नामदिपद्यर्त्तिपॄशकिभ्यो वनिप् ॥७२॥**

एभ्यो वनिप् प्रत्ययः । स्नाति तस्यामिति **स्नावा**—नदी । माद्यतीति **मद्वा**—पानम् । स्त्री चेत् **मद्वरी** । **वनो र च**[अ० ४।१।७]इति रः। पद्यत इति **पद्वा**—रथः। **पद्वरी**—गतिः । ऋच्छत्यर्यते वा **अर्वा**—आसनं हृदयं च । पिपर्त्ति पूर्यते वा **पर्वा**—पूरणम् अङ्गुल्यवयवश्च । शक्नोति शक्यते वेति **शक्वा**—समर्थः । **शक्वरी**—युवतिः, रात्रिश्च ॥

**शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप् ॥७३॥**

एभ्यः क्वनिप् । शेत इति **शीवा**—सर्पः । क्रोशति क्रुश्यते वा **क्रुश्वा**—क्रोष्टा । रोहतीति **रुह्वा**—वनस्पतिः । जयतीति **जित्वा**—इन्द्रः । क्षयति क्षीयते वा **क्षित्वा**—कालः । धावति सिसर्त्ति वा **सृत्वा**—वायुः । ध्रियन्तेऽस्मिन् भूतानीति **धृत्वा**—विष्णुः । **धृत्वरी**—भूमिः ॥

**ध्याप्योः सम्प्रसारणं च ॥७४॥**

आभ्यां क्वनिप् संप्रसारणं च । ध्यायत्यशुभमिति **धीवा**—निषादः, शाकुनिकश्च ।

प्यायत इति **पीवा** —मांसलः। **पीवरी**—मांसोपवीता। हलः [ प्र० ६।४।२ ] इति दीर्घः॥

**अदेर्ध च ॥७५॥**

अदेः क्वनिप् धश्चान्तादेशः। अत्ति नभ इति **अध्वा**—मार्गः॥

**प्र ईरिसद्योस्तुट् च ॥७६॥**

प्र उपपद ईरिसद्योः क्वनिप् तुडागमश्च। प्रेरयतीति **प्रेत्वा** वायुः। प्रसीदति प्रसद्यते वा **प्रसत्वा** —मूढः॥

**मनिन ॥७७॥**

सर्वधातुभ्यो मनिन् प्रत्ययः स्यात्। क्रियते तत्फलार्थिभिरिति **कर्म**। चरन्ति तत् शस्त्रेणेति **चर्म**—त्वक्। वृणोति व्रियते वा **वर्म**—आवरणम्। शृणाति दुःखमिति **शर्म**—सुखम्। जायते जन्यते वा **जन्म**—प्रादुर्भावः। भसितं तदग्निनेति **भस्म**—भूतिः॥

**बृंहतेर्नोऽच्च ॥७८॥**

बृंहेर्मनिन् नकारस्य चाकारः। बृंहति बृंह्यते वा **ब्रह्म**—परं, तेजः, **अध्ययनं** च॥

**अशिशकिभ्यां छन्दसि ॥७९॥**

आभ्यां मनिन् छन्दसि विषये। अश्नुतेऽश्नाति वा **अश्मा**—पाषाणः। शक्नोति शक्यते वा **शक्मा** समर्थः॥

**हृदृभृधृसृस्तृसूभ्य ईमनिन् ॥८०॥**

एभ्य ईमनिन्। हरति जिहर्त्ति वा **हरीमा**—मातरिश्वा। दरति द्रियते वा **दरीमा**—चोरः। बिभर्त्ति भ्रियते वा **भरीमा**—राजा। ध्रियत इति **धरीमा**—धर्मः। धावति सिसर्त्ति स्रियते वा **सरीमा**—कालः। स्तीर्यत इति **स्तरीमा**—आच्छादनम्। सूते सुवति वा **सवीमा**—गर्भः॥

**जनिहृभ्यामिमनिन् ॥८१॥**

जायते जन्यते वा **जनिमा**—संसारः। हरति जिहर्त्ति ह्रियते वा **हरिमा**—मृत्युः, वायुर्वा॥

८

**वेञः सर्वत्र ॥८२॥**

वेञो मनिन् छन्दसि भाषायां च । वयति ऊयते वा **वेमा**—कुविन्दभाण्डम् ॥

**नामन्सामन्सोमन्हेमन्रोमन्लोमन्व्योमन्विधर्मन्पाप्मन्व्येमन् ॥८३॥**

एते निपात्यन्ते मनिनि प्रत्यये । नमेर्मलोपो दीर्घश्च । नमन्त्यनेनेति **नाम**—संज्ञा । सिनोति स्वरानिति **साम**—छन्दः । अत्राकारोऽन्तादेशः । षुञ् । सुनोति सूयते वा **सोम**—यज्ञद्रव्यं, चन्द्रमाश्च । जुहोतेरुकारस्यैकारो गुणः । हूयतेऽनेनेति **हेम**—सुवर्णम् । रु शब्दे । अस्य वा लत्वम् । रूयत इति **रोम, लोम**—केशाः । व्येञ् । अस्यौत्वं निपात्यते । वीयते वायुना घनैश्चेति **व्योम**—नभः । विविधं ध्रियत इति **विधर्मा** ॥[1]

**वसौ शृणातेः ॥८४॥**

वसावुपपदे शृणातेर्मनिन् । वसवोऽस्य दुरितं शीर्यासुरिति **वसुशर्मा** । एवमन्येऽपि भविष्यत्कालः ॥

**सातिभ्यां त्मनिन्मनिणौ ॥८५॥**

आभ्यां त्मनिन्मनिणौ । स्यति **सात्मा**—अन्तकः । अतत्यत्यते वा सर्वभूतैरिति **आत्मा**—पुरुषः ॥

**अर्त्तेर्भुक्षिनक् ॥८६॥**

अर्त्तेर्भुक्षिनक् प्रत्ययः । ऋच्छति इयर्त्ति वा **ऋभुक्षा**—इन्द्रः ॥

**लूञो मनिन् ॥८७॥**

लूयन्त इति **लोमानि** ॥

**हन्तेर्युन्नाद्यन्तयोर्घत्वतत्वे च ॥८८॥**

हन्तेर्युन् आद्यन्तयोर्घत्वतत्वे च भवतः । हन्ति हन्यते वा परस्यात्मनो वा लज्जामिति **घतनः** ॥

**॥ इति नान्ताः ॥**

॥ इति षष्ठः पादः ॥

---

१. सूत्रे 'पाप्मन्व्येमन्' शब्दावपि स्तः, परं वृत्तौ नोपलभ्येते । अत्र ग्रन्थपातः संजातः स्यादथवा वृत्तिकारस्य मते शब्दाविमौ सूत्रे न स्याताम् ।

# ॥ अथ सप्तमः पादः ॥

**आप्नोतेः क्विप् ह्रस्वश्च ॥१॥**

आप्नोतेः क्विप् प्रत्ययो ह्रस्वश्च । आप्नोतीति **अप्**—अम्भः ॥

**पानीविषिभ्यः पः ॥२॥**

एभ्यः पः प्रत्ययः । आत्मना पीयते जनैरिति **पापम्**—कायवाङ्मनःसुखजं दुःखम् । नयति नीयते वा **नीपम्**—उदकम् । वेवेष्टीति **वेष्पम्**—परत्रा ॥

**चुपेः कित् ॥३॥**

चुपेः पः कित् । चोपतीति **चुप्पम्**—मन्दगमनम् ॥

**स्तौतेर्दीर्घश्च ॥४॥**

स्तौतेः पः किच्च दीर्घश्च । स्तौति स्तूयते वा **स्तूपम्**—इन्द्रभवनम् ॥

**कुसुयुभ्यश्च ॥५॥**

एभ्यः पः कित् दीर्घश्च । कूयतेऽस्मिन्निति **कूपः**—उदकस्थानम् । सुनोति सूयते वेति **सूपः**—व्यञ्जनम् । यौति यूयते वा **यूपः**—पशुबन्धनकाष्ठम् ॥

**सृशृभ्यामूर्च्च ॥६॥**

आभ्यां प ऊर्चादेशः । धावति सिसर्त्ति वा **सूर्पः**—अहिः । शृणातीति **शूर्पम्**—धान्यादिनिःसरणभाण्डम् ॥

**सष्पशिल्पशष्पबाष्परूपतर्पतल्पाः ॥७॥**

एते निपात्यन्ते । खनु अवदारणे, षणु हिंसायाम् । षो नकारस्य निपात्यते । सनति सन्यते वा सषति सष्यते वा **सष्पम्**—मनीलम् अङ्गारो वा[1]। शील समाधौ भ्वा०, शील उपधारणे चौ० । अस्य णेर्लुकि ह्रस्वत्वं निपात्यते । शीलन्ति शीलयन्ति वा **शिल्पम्**—क्रियाकौशलम् । शिष हिंसायाम् । उपधाया अत्वं निपात्यते । शिष्यते गवादिभिरिति **शष्पम्**—घासः, वीरुच्च । बाधृ लोडने । षकारोऽन्तादेशः । बाधते

---

१. लेखकप्रमादाद् भ्रष्टोऽयं पाठः । अन्यवृत्त्यनुसारं 'खष्पशिल्प······अवदारणे, कष हिंसायाम् । खनतेः षोऽन्त्यस्य निपात्यते, कषतेरादिखत्वं च निपात्यते खनति खन्यते वा, कषति कष्यते वा **खष्पम्**—खलीलम् अङ्गारो वा' इति पाठेन भाव्यम् ।

लोचनमिति **बाष्पम्**— अश्रु । रूप रूपक्रियायाम् । अस्य पकारलोपो निपात्यतेऽगुणश्च । रूपयति रूप्यते वा शोभनमिति **रूपम्**— चक्षुर्विषयः । तरन्त्यनेन जना इति **तर्पः**—नदीप्लवः । तृप्यन्ति तस्मिन्निति **तल्पम्**—शयनम् ।

बाहुलकात् **चण्पा**—नगरी । **पम्पा क्षपा** इत्यादिशब्दा निपात्यन्ते । चण दाने । चणतीति **चण्पा** । पो ह्रस्वत्वं नुमागमश्च । पान्ति पिबन्ति वा **पम्पा** ॥

**सर्त्तेरपः षुक् च ॥८॥**

सर्त्तेरपः षुक् चागमः । धावति सिसर्त्ति वा तस्माद्रक्ष इति **सर्षपः**—रक्षोघ्नं द्रव्यं शाकं च ॥

**उषिकुषिकुटिदलिकचिखजिभ्यः कपन् ॥९॥**

ओषतीति **उषपः**—अग्निः । कुष्यतीति **कुषपः** । कुटतीति **कुटपः**—मानभाण्डम् । दल्यते दलति वा **दलपम्**—रणे मुखत्राणम् । कच बन्धने । कचतीति **कचपम्**—बन्धनम् । खज मन्थे । खज्यत इति **खजपम्**—उदकम् ॥

**क्वणेः सम्प्रसारणं च ॥१०॥**

क्वणेः कपन् सम्प्रसारणं च । क्वणत अत्र स्वरैरिति **कुणपम्**— मृतशरीरम् ॥

**कपश्चाक्रवर्मणस्य ॥११॥**

क्वणतेः कपश्चाक्रवर्मणस्य मतेन सम्प्रसारणं च । क्वणते तदग्निनेति **कुणपम्** । शब्दार्थसादृश्यम् । स्वरे विशेषः ॥

**विटपविष्टपविशिपोलपाः ॥१२॥**

एते निपात्यन्ते कपन्प्रत्यये । विशेरन्त्यस्य टकारः । विशन्त्यस्मिन् पक्षिण इति **विटपः**—शाखावयवः । तस्यैव षडागमः[1] । विशन्ति तस्मिन् पुण्यकृत इति **विष्टपम्**—स्थानम् । अस्यैव प्रत्ययादेरित्वम् । विशन्त्यस्मिन्निति **विशिपम्**—वेश्म । उषेः षस्य लत्वम् । उष्यत इति **उलपम्**—पर्वततृणम् । उत्पूर्वस्य लातेः उपसर्गतलोपो निपात्यते धातोरन्तलोपश्च । उल्लायत इति **उलपम्** ॥

॥ **इति पान्ताः** ॥

**कलेः फगस्योच्च ॥१३॥**

कलेः फक् प्रत्ययः, अकारस्योकारः । कलति कल्यते वा **कुल्फः**—पादमध्यसन्धिः॥

**गलेश्च ॥१४॥**

---

१. अशुद्धोऽयं पाठः । 'षान्तादेशः तुडागमश्च' इति भाष्यम् ।

फक् अस्योकारः । गल अदने । गलति गल्यते वा **गुल्फः**—पादोपरिग्रन्थिः ॥

॥ इति फान्तौ ॥

**कदिकडिगडिकटिभ्योऽम्बच् ॥१५॥**

एभ्योऽम्बच् । कदतीति **कदम्बः**—वृक्षः समूहो वा । कण्डतीति **कण्डम्बः**—वादित्रम् । गडतीति **गडम्बः** । कटतीति **कटम्बः** ॥

**कदेर्णित् पक्षिणि ॥१६॥**

कदेरम्बच् णिच्च पक्षिण्यभिधेये । कदतीति **कादम्बः**—कलहंसः ॥

**कृञश्च ॥१७॥**

कृञोऽम्बच् । कृणोति करोति करति वा **करम्बम्**—दधिसक्तवः ॥

**शमादिभ्यो बन् ॥१८॥**

एभ्यो बन् । शाम्यतीति **शम्बः**—शान्तः । दाम्यतीति ककारपूर्वः **कदम्बः**—वृक्षविशेषः । इत्यादि ॥

**तमेर्निपूर्वात् ॥१९॥**

बन् । निताम्यतीति **नितम्बः**—कटिप्रदेशः ॥

**निम्बः ॥२०॥**

निम्ब इति निपात्यते । नयतेर्नुम् बन् ह्रस्वश्च । नयति नीयते वा **निम्बः**—वृक्षः ॥

**शुल्बादयश्च ॥२१॥**

एते निपात्यन्ते बनि । शुषेः षस्य लः । शुष्यतीति **शुल्बम्** ॥

॥ इति बान्ताः ॥

**कृगृशृशलिगर्दिभ्योऽभच् ॥२२॥**

एभ्योऽभच् । किरतीति **करभः**—त्रिवर्ष उष्ट्रः । गिरति गृणाति वा **गरभः**—सिंहः । शृणातीति **शरभः**—हिंस्रः । शलतीति **शलभः**—पतङ्गः । गर्दतीति **गर्दभः**—खरः ॥

**ऋषिवृषिभ्यां कित् ॥२३॥**

आभ्यामभच् कित् । ऋषतीति **ऋषभः**—गोपतिः । वर्षतीति **वृषभः**—सत्वः ॥

**दशेर्निच्च लुश च ॥२४॥**

रुशेरभच् नित्संज्ञः लुशादेशश्च । रुशतीति **लुशभः**—हस्ती, हिस्रः ॥

**रासिवल्लिभ्यां च ॥२५॥**

आभ्यामभच् नित्संज्ञः । रासत इति **रासभः**—गर्दभः । वल्लिः सौत्रो धातुः । वल्लतेऽसौ **वल्लभः**—दयितः ॥

**गडेः कड च ॥२६॥**

गडेरभच् कड इत्ययं चादेशः । गडतीति **कडभः**—हस्तिपोतः ॥

**दृदलिभ्यां भः ॥२७॥**

आभ्यां भः । दरति दार्यते वा **दर्भः**—कुशः । दलति दल्यते वा **दल्भः**—वल्कलम् ॥

**अर्त्तिगृभ्यां भन् ॥२८॥**

आभ्यां भन् । ऋच्छत्यर्यते वा **अर्भः**—सूक्ष्मः प्राणी । गिरति गीर्यते वा **गर्भः**—उदरस्थः प्राणी ॥

**इणः कित् ॥२९॥**

इणो भन् किच्च । एति ईयते वा **इभः**—हस्ती ॥

॥ इति भान्ताः ॥

**अर्त्तिस्तुसुहुसृधृक्षिक्षुभायापदियक्षिनीभ्यो मन् ॥३०॥**

एभ्यो मन् प्रत्ययः । ऋच्छत्यर्यते वा **अर्मः**—आहुतिः । स्तौति स्तूयते वा **स्तोमः**—मन्त्रस्तवः । सुनोति सूयते वा **सोमः**—चन्द्रः, यज्ञद्रव्यं वा । जुहोति हूयते वा **होमः**—आहुतिः । धावति सिसर्त्ति वा **सर्मः**—नदः । धरति ध्रियते वास्मिन् राजा इति **धर्मः**—न्यायः । क्षयति क्षिणोति वा **क्षेमम्**—कुशलम । क्षौति **क्षौमम्**—दुकूलम् । भात्यर्थमिति **भामः**—क्रोधः । यातीति **यामः**—दिवसचतुर्थभागः । पद्यते मधुकरैरिति **पद्मम्**—कमलम् । यक्षिः सौत्रः । यक्षतीति **यक्ष्मम्**—रोगविशेषः । नयतीति **नेमम्**—शकलम् ॥

**अवतेष्टिलोपश्च ॥३१॥**

अवतेर्मन् प्रत्ययः टिलोपश्च प्रत्ययस्य, धातोः संप्रसारणं च । अवतीति **ओ३म्**—प्रणवः । **प्रणवष्टेः** [अ० ८।२।८९] इति प्लुतः ॥

**ग्रसतेरा च ॥३२॥**

ग्रसतेर्मन् प्रत्यय आकारोऽन्तादेशश्च । ग्रसन्तेऽस्मिन् प्रत्यक्षं जना इति **ग्रामः** ॥

**प्रथेरट् च ॥३३॥**

प्रथेर्मन् अट् चागमः । प्रथन्तेऽस्माद् द्वितीयादयः शब्दा इति **प्रथमः—आदिः** ॥

**अविसिविशुषिभ्यः कित् ॥३४॥**

एभ्यो मन् किच्च । अवति **ऊमः**—जनः । सीव्यतेऽनेनेति **स्यूमः**—सूत्रतन्तुः । शुष्यत्यस्मात् परदर्पः भयं वेति **शुष्मम्**—बलम् ॥

**ईषियुधीन्धिदसिश्याधूसूभ्यो मक् ॥३५॥**

एभ्यो मक् । ईषति ईष्यते वा **ईष्मः**—वसन्तः । युध्यन्तेऽरिमन्निति **युध्मः**—शरत्कालः । युध्यते वा **युध्मः**—शूरः । इध्यतेऽनेनाग्निरिति **इध्मः**—पलाशादिः । दस्यति दस्यते वा **दस्मः**—हीनः । श्यायतेऽसौ **श्यामः**—कृष्णो वर्णः । धुनोति धुवति धूयते वायुनेति **धूमः**—अग्निवर्त्मा । सुवति सूयते वा **सूमः** ॥

**गलेरुच्चोपधायाः ॥३६॥**

गलेर्मक् उच्च भवत्युपधायाः । गलति निगल्यते वा **गुल्मः**—व्याधिर्वातिजः ॥

**युजिरुचितिजां कुश्च ॥३७॥**

एभ्यो मक् कवर्गादेशश्च । युनक्ति युज्यते वेति **युग्मम्**—युगलम् । रोचते रुच्यते वा **रुक्मम्**—कार्त्तस्वरम् । तितिक्षत इति **तिग्मम्**—तीक्ष्णम् ॥

**हन्तेर्हि च ॥३८॥**

हन्तेर्मक् हि इति चादेशः । हन्ति दुर्गतिमिति **हेमम्** । बाहुलकाद् गुणः ॥

**भियः षुग्वा ॥३९॥**

भियो मक् षुक् चागमः । बिभेत्यस्मादिति **भीष्मः, भीमः**—भयानकः ॥

**घर्मः ॥४०॥**

अयं निपात्यते मकि । जिघर्त्ति स्वेन ओजसा जगदिति **घर्मः**—निदाघः । निपातनाद् गुणः ॥

**ग्रीष्मः ॥४१॥**

अयं च निपात्यते । ग्रसेरुपधाया ईत्वं षश्चान्तादेशः । ग्रसते जगत्तेजसेति **ग्रीष्मः**—घर्मः ॥

आदेराद्यन्तविपर्यये डुटलुटौ च·········॥[1]

१. 'आदे······च' एतावान् पाठोऽत्राधिकमुपलभ्यते । सम्भाव्यते यदयं कस्यचित्

**पच एलिमच् ॥४२॥**

पचेरेलिमच् प्रत्ययः । पचतीति **पचेलिमः**—अग्निः, आदित्यो वा । पच्यन्त इति **पचेलिमाः**—माषाः ॥

**भिदेः केलिमन् ॥४३॥**

भिनत्तीति [भिदेलिमः—तस्करः । कर्त्ता । भिद्यत इति] **भिदेलिमम्**—काष्ठम्॥

**कर्दिकडोरमः ॥४४॥**

कर्दतीति **कर्दमः** । कडतीति **कडमः** ॥

**सूचेः क्स्मन् ॥४५॥**

सूचेः क्स्मन् प्रत्ययः । सूचयति सूच्यते वेति **सूक्ष्मम्**—अणुः ॥

**गुधेरूमः ॥४६॥**

गुधेरूमः प्रत्ययः । गुध्यति गुध्यते वा प्राणिभिरिति **गोधूमः**—सस्यम् ॥

**इणो दमुक् ॥४७॥**

इणो **दमुक्** प्रत्ययः । एतीति **अयम्-इयम्-इदम्** ॥

**कायतेर्डिमन् ॥४८॥**

कायतेर्डिमन् प्रत्ययः । कायत इति **किम्**—प्रश्नविषयार्थ उच्यते ॥

**क्रमिगमिक्षमिभ्यस्तुमुन् वृद्धिश्च ॥४९॥**

एभ्यस्तुमुन् वृद्धिश्चैषाम् । क्रामतीति **क्रान्तुम्** । गच्छतीति **गान्तुम्**—पथिकः । क्षाम्यतीति **क्षान्तुम्** ॥

**प्रथेरमच् ॥५०॥**

प्रथन्तेऽस्माद् द्वितीयादयः संख्यावाचिन इति **प्रथमः**—आदिः । स्वरे भेदः ॥

**चरेश्च ॥५१॥**

चरेरमच् । चरतीति **चरमः**—अन्त्यः ॥

॥ इति मान्ताः ॥

॥ इति सप्तमः पादः ॥

---

सूत्रस्य वृत्तेर्वा भागः स्यात् ।

# ॥ अथाष्टमः पादः ॥

श्रुदक्षिस्पृहिभ्य आय्यः ॥१॥

एभ्य आय्यः प्रत्ययः। शृणोति श्रूयते वा श्रवाय्यः—यज्ञपशुग्रहणम् अर्थश्च। दक्षतेऽसौ दक्षाय्यः—वैनतेयः, दक्षो जनश्च। स्पृहयतीति स्पृहयाय्यः—स्पृहणशीलः ॥

दिधिषाय्यः ॥२॥

अयं निपात्यते। दधातेर्द्विवचनं षुगागमश्च। धीयत इति दिधिषाय्यः—पृषदाज्यम्। धिष शब्दे। अस्य द्वित्वं निपात्यते। धिष्यतीति दिधिषाय्यः—शब्दः ॥

वृञ एण्यः ॥३॥

वृञ एण्यः प्रत्ययः। वृणोति व्रियते वा वरेण्यः—परब्रह्मधाम ॥

स्तौतेः क्सेय्यश्छन्दसि ॥४॥

स्तौतेः क्सेय्यः प्रत्ययः छन्दसि विषये। स्तूयत इति स्तुषेय्यः ॥

राजेरन्यः ॥५॥

राजतेऽत्यर्थमिति राजन्यः—ज्योतिः, अग्निः, क्षत्रियो वा ॥

अर्त्तेर्नित् ॥६॥

अर्त्तेरन्यो निच्च। अर्यते तत् मृगपदैरिति अरण्यम्—निर्जनस्थानम् ॥

पर्जन्यः ॥७॥

अयं निपात्यत अन्यप्रत्यये। वृषु सेचने। वर्षतेः परिपूर्वस्य जादेश उपसर्गस्य इलोपः। गर्जतेर्वा गरेफलोपः परेरिलोपश्च। परिवर्षति परिगर्जतीति वा पर्जन्यः—महेन्द्रः, मेघः ॥

शॄरम्योश्च ॥८॥

आभ्यामन्यः प्रत्ययः। शृणात्यर्थिनां भयमिति शरण्यः। रमन्तेऽस्मिन्निति रमण्यः—शोभनः ॥

वदेरान्यः ॥९॥

वदतीति **वदान्यः**—दाता ॥

**वलिमलितनिभ्यः कयन् ॥१०॥**

एभ्यः कयन् प्रत्ययः । वलति वल्यते वा **वलयम्**—कङ्कणम्, आभरणम् । मल धारणे । मलति क्षितिमिति **मलयः**—पर्वतः । तनोति कुलमिति **तनयः**—सुपुत्रः ॥

**वृह्नोः षुक् दुक् इत्वं च ॥११॥**

आभ्यां कयन् यथासख्यं षुक् दुक् एतौ आगमौ स्तः, वृणोतेरित्वं च । वृणोति व्रियते वा **विषयः**—आशयः । ह्रियते तदिति **हृदयम्**—मनः ॥

**माच्छाससिसूभ्यो यः ॥१२॥**

एभ्यो यः । माति मिमीते मीयते वा **माया** । छ्यति छायते वा **छाया**—प्रतिरूपम् । सस्तीति **सस्यम्**—यवादिः । सूते सूयते सुवति वा **सव्यम्**—वामम् । **वान्तो यि** [अ० ६।१।७९] इति अव् ॥

**जनेर्यक् ॥१३॥**

जनेर्यक् प्रत्ययः । जायते जन्यते वाऽस्यामिति **जाया**--भार्या । **जनसन** [अ० ६।४।४२] इति आत्वम् ॥

**अघ्न्यादयश्च ॥१४॥**

अघ्न्यादयः शब्दा निपात्यन्ते यकि । हन्तेर्नञ्पूर्वस्य उपधालोपः । न हन्ति न हन्यते वा **अघ्न्यः**—धर्मः,गोपतिर्वा । सम्पूर्वस्य ध्यायतेर्यकार[आकार]लोपः । संध्यायन्त्यस्यां विप्रा इति **सन्ध्या**—सायंकालः । सम्पूर्वस्य धाञ आलोपो वा । सन्धानं **सन्ध्या**—सूर्योदयास्तमयकालः । कमेरन्त्यस्य नकारः । काम्यते सा **कन्या**—पुत्री । हन्तेर्बधादेशो नुमागमश्च । हतमस्याः कर्मभिरशुभैर्वा जीवितमिति **बन्ध्या**—अनपत्या । ईर्ष्य ईर्ष्यार्थः । अस्य यलोपः । ईर्ष्यतीति **ईर्ष्या**—मात्सर्यम् । शक्लृ शक्तौ । उपधाया इत्वम् । शक्नोति वक्तुमिति **शिक्यम्**—सारम् ॥

**रुचिभुजिभ्यां किष्यन् ॥१५॥**

आभ्यां किष्यन् प्रत्ययः । रुच्यत इति **रुचिष्यम्**—भोज्यम् । भुज्यत इति **भुजिष्या**—दासी ॥

**पूञो यन् णुट् ह्रस्वश्च ॥१६॥**

पूञो यन्णुट् चागमो ह्रस्वश्च । पवते पूयते वानेनेति **पुण्यम्**—शुभम् ॥

**स्रंसेः शिः कुट् किच्च ॥१७॥**

स्रंसेर्यन् कित्संज्ञश्च कुट् चागमः शि इत्ययं चादेशः। स्रंसतीति **शिक्यम्**—भिक्षास्तरणम् ॥

**हर्यतेः कन्यन् हिर्च ॥१८॥**

हर्यतेः कन्यन् प्रत्ययः हिर् इत्ययं चादेशः। हर्यति हर्यते वा **हिरण्यम्**—सुवर्णम्॥

**दधातेर्यन् नुट् च ॥१९॥**

दधातेर्यन् प्रत्ययो नुट् चागमः। दधाति सत्त्वानिति **धान्यम्**—व्रीह्यादिः ॥

**कवतेर्यक् डुक् च ॥२०॥**

कवतेर्यक्प्रत्ययो डुक् चागमः। कवत इति **कुडचम्**—तृणपर्णगृहम् ॥

॥ इति यान्ताः ॥

**मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच् ॥२१॥**

एभ्य उरच् प्रत्ययः। मन्दन्तेऽस्यां वाजिन इति **मन्दुरा**—वाजिशाला। वाशृ शब्दे। वाश्यतेऽत्यर्थमिति **वाशुरः**—गर्दभः, अरिश्च। मथ्यते जनैरिति **मथुरा**—नगरी। चततीति **चतुरः**—पटुः। चकिः सौत्रः। चङ्कत इति **चङ्कुरः**। अङ्कत इति **अङ्कुरः**—प्रादुर्भावः ॥

**व्यथेः सम्प्रसारणं धः किच्च ॥२२॥**

व्यथेरुरच् किच्च अन्त्यस्य धोऽन्तादेशः सम्प्रसारणं च। व्यथन्तेऽस्मात् जना इति **विधुरः**—अनग्निकः राक्षसश्च ॥

**मुकुरदर्दुरौ च ॥२३॥**

एतौ निपात्येते उरचि। मकि मण्डने। अस्य नलोप उपधोत्वं च। मङ्क्यतेऽनेनेति **मुकुरः**—आदर्शः। दृणातेर्दुक्। दृणातीति **दर्दुरः**—मण्डूकः।

बहुलवचनादन्येभ्योऽपि। शृणातेः कुगागमः। शृणातीति **शर्कुरः**। कौतेर्द्विवचनं [धातोरुकारलोपः] कुगागमश्च। कौतीति **कुक्कुरः**—श्वा ॥

**मुद्गरादयश्च ॥२४॥**

निपात्यन्ते। मुहेर्हस्य दः तस्य च गक्। प्रत्ययोकारस्य चाकारः। मोहयतीति **मुद्गरः**—अस्त्रविशेषः ॥

**असेरुरन् ॥२५॥**

उरन् प्रत्ययः। अस्यन्ते देवैरिति **असुराः**—दैतेयाः ॥

**मसेश्च ॥२६॥**

उरन् । मसुरः ॥

**शावशेराप्तौ ॥२७॥**

शावुपपदे अशेरुरन् आप्तौ गम्यमानायाम् । अश्नुते विविधान् कामानिति **श्वशुरः**—जायापिता । अश्नातीति वा **श्वशुरः** ॥

**इषिमदिमुदिखिदिछिदिभिदिमन्दिवन्दितिमिमिहिमुहिमुचिरुचिरुधिशुषिबन्धिभ्यः किरच् ॥२८॥**

एभ्यः किरच् प्रत्ययो भवति । इषु इच्छायाम्, इष गतौ, इष आभीक्ष्ण्ये । इच्छति इष्यति इष्णातीति **इषिरः** – अग्निः, आहारो वा । माद्यन्तेऽनयेति **मदिरा**—सुरा । मदयतीति वा । मोदतेऽनेनेति **मुदिरः**—मेघः । खिद्यतेऽनेनेति **खिदिरः**—सोमवक्रः, त्रासः । छिनत्तीति **छिदिरम्**—शस्त्रम् । भिनत्तीति **भिदिरः**—भेदः । मन्दतेऽस्मिन्निति **मन्दिरम्**—गृहम् । वन्दति वन्दयति वा **वन्दिरः**—चन्द्रमाः । तिम्यति तेमयति वा **तिमिरम्**—तमः । मेहति मेहयति वा **मिहिरः**—पूषा । मुह्यतेऽनेनेति **मुहिरः**—कामः । मुच्यन्तेऽनेनेति **मुचिरः**—धर्मः । मोचयतीति वा । रोचते सर्वेभ्य इति **रुचिरम्** । रुणद्धीति **रुधिरम्**—रक्तम् । शुष्यते शोषयति वा **शुषिरम्**—शुष्कम् । बध्नाति श्रोत्रेन्द्रियमिति **बधिरः**—श्रोत्रहीनः ॥

**अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः ॥२९॥**

एते निपात्यन्ते किरचि । अनक्तीति **अजिरम्**—जित्वरम् । नञ्पूर्वस्य जीर्यतेर्ऋवर्णलोपो वा । न जीर्यत इति **अजिरः**—देवः। शृणातेः शोऽन्तादेशः । शीर्यतेऽस्मिन् तृणगुल्मवनस्पतीनां तेजांसीति **शिशिरः**—कालः । श्लथेर्ललोप उपधाया इत्वं लत्वं प्रत्ययस्य निपात्यते । श्लथत इति **शिथिलम्**—असारम् । तिष्ठतेरालोपः । तिष्ठतीति **स्थिरम्**—निश्चलम् । स्फायतेष्टिलोपः । स्फायत इति **स्फिरम्**—बहुभारः । तिष्ठतेर्ह्रस्वत्वं वुगागमश्च । तिष्ठतीति **स्थविरः**—वृद्धः । खादृ भक्षणे । अस्योपधाया ह्रस्वः । खादति कुष्ठव्याधिनिमित्तमिति **खदिरः**—वृक्षविशेषः ।

**उणादयो बहुलम्** [अ० ३।३।१] इति वचनादन्येऽपि शिबिरादयश्च निपात्यन्ते । शीङो बुक् ह्रस्वश्च । शेरतेऽस्मिन् राजबलानि ति **शिबिरम्**—स्थानम् । पचेरुपधाया इत्वम् । पच्यतेऽस्मिन्निति **पिचिरम्**[१]—भाण्डम् ॥

---

१. अन्यत्र ठान्तादेशं विधाय 'पिठिरम्' शब्दोऽपि साध्यते ।

**मीनातेरूरन् ॥३०॥**

मीनातेरूरन् प्रत्ययः । मीनाति सर्पानिति **मयूरः**—बर्हि ॥

**कठिचकिभ्यामोरः ॥३१॥**

आभ्यामोरः प्रत्ययः । कठतीति **कठोरम्**—चिरन्तनम् । चकतीति **चकोरः**—पक्षी ॥

**किशोरादयश्च ॥३२॥**

एते निपात्यन्ते ओरप्रत्यये । काशेरुपधाया इत्वम् अगुणत्वं च निपात्यते । काशत इति **किशोरः** । एवमन्येऽपि ॥

**स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्विति-वृत्यजिनीपदिमदिमुदिखिदिभिदिछिदिमन्दिचन्दिदहिदसि-दम्भिवहिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् ॥३३॥**

एभ्यो रक् । स्फायत इति **स्फारम्**—बहुः। तञ्चु गतौ । तच्यते तदिति **तक्रम्** । वञ्चु गतौ । वच्यत इति **वक्रम्**—कुटिलम् । शक्नोतीति **शक्रः**—इन्द्रः । क्षिप्यते तदिति **क्षिप्रम्**—आशु । क्षुदतीति **क्षुद्रः**—हिंस्रः । सर्पतीति **सृप्रः**—चन्द्रमाः । तृप्यतीति **तृप्रम्**— । दृप्यतीति **दृप्रम्**—बलम् । वन्दते वन्द्यते वा **वन्द्रः** । समुन्दन्ति तस्मादिति **समुद्रः**—उदधिः । श्वेतत इति **श्वित्रम्**—व्याधिः । वर्त्तत इति **वृत्रः** । अजति संग्राममिति **वीरः**—शूरः । नीयते तदिति **नीरम्**—जलम् । पद्यतेऽस्मिन्निति **पद्रः**—ग्रामघोषादिजनपदसन्निवेशः । माद्यन्तेऽस्मिन्निति **मद्रः**—जनः, क्रीडा । मोदतेऽनयेति **मुद्रा**—प्रत्ययः । खिद्यते खेदयति वा **खिद्रम्**—दिषाणम् । भिनत्ति भिद्यते वा **भिद्रः**—शरः । छिद्यते तदिति **छिद्रम्**—विवरम् । मन्दत इति **मन्द्रः**—मधुरस्वरः । [चन्दत इति **चन्द्रः**—सोमः ।] दहति दह्यते वा **दह्रः**—अग्निः । दस्यतीति **दस्रः**—देवभिषक् । दभ्नोति दभ्यते वा **दभ्रः**—अल्पः, सूर्यचन्द्रमसौ च । वहतीति **उह्रः**—अनड्वान् । वस्यते तदिति **उस्रम्**—परं तेजः । वाश्यत इति **वाश्रः**—रासभः । शेतेऽत्यर्थमिति **शीरः**—अजगरः । हसत्यर्थमिति **हस्रः** । षिधु संराद्धौ । सिध्नोतीति **सिध्रः**—आसनप्रकारः । शोभत इति **शुभ्रम्**—सितम् ॥

**निन्देर्नलोपश्च ॥३४॥**

निन्दे रक् नकारलोपश्च । निन्द्यत इति **निद्रा** ॥

**चकिरम्योरुच्चोपधायाः ॥३५॥**

आभ्यां रक् उच्चानयोरुपधायाः। चकति चक्यते वा चुक्रः—रसविशेषः। रमन्तेऽस्मिन्निति रुम्रः—सुन्दरः॥

**वौ कसेः ॥३६॥**

वावुपपदे कसे रक् उच्चोपधायाः। विकसतीति विकुस्रम्—कुत्सितम्॥

**तदेर्नुम् ॥३७॥**

तदे रक् नुम् च। तन्द्रा॥

**शदेरू च ॥३८॥**

शदे रक् ऊ चोपधायाः। शीयत इति शूद्रः॥

**स्थश्च ॥३९॥**

अस्माद् रक् ऊकारश्च। तिष्ठतीति स्थूरम्—उच्चम्॥

**अमितम्योर्दीर्घश्च ॥४०॥**

आभ्यां रक् दीर्घश्चोपधायाः। अमति अम्यते वा आम्रः—चूतः। ताम्यति ताम्यते वा जनैरिति ताम्रम्—लोहितविकारः॥

**दुरीणो लोपश्च ॥४१॥**

दुरीणो रक् लोपश्च धातोः पूर्वस्य च दीर्घः। दुःखेन ईयते प्राप्यत इति दूरम्—विप्रकृष्टम्॥

**कृतेश्छक् क्रू च ॥४२॥**

कृते रक् छक् क्रू चा[गमा]देशौ भवतः। कृन्तति कृत्यते वा कृच्छ्रम्—दुःखम्। कृन्ततीति क्रूरः—पापकर्मा॥

**हन्तेर्घुरच् ॥४३॥**

हन्तेर्घुरच् प्रत्ययः। हन्तीति हन्तुरम् (?)॥

**रोदेर्णिलुक् च ॥४४॥**

रोदे रक् णेर्लुक् च। रोदयतीति रुद्रः—ईशः॥

**बहुलमन्यत्रापि संज्ञाछन्दसोः ॥४५॥**

अन्यस्माद्धातोरन्यस्मिन् प्रत्यये परतः संज्ञायां छन्दसि विषये बहुलं णेर्लुग् भवति। संज्ञायाम्—देवयतीति द्यौः—स्वर्गः, अन्तरिक्षम्। पुण्यं कारयतीति पुण्यकृत्—देवः।

चक्रं धारयतीति **चक्रधरः**। अम्बु धारयतीति **अम्बुधरः**। वज्रं धारयतीति **वज्रधरः**। [छन्दसि—] "वर्धन्तु त्वा सुष्टुतयो गिरो मे" [ऋ० ७।९९।७]। वर्धयन्तु [इति प्राप्ते]। "अग्ने शर्ध महते सौभगाय" [ऋ० ५।२८।३] शृधु उन्दने। शर्धयेति प्राप्ते। "नेमिं नमन्ति" [ऋ० ८।९७।१२]। नमयन्तीति प्राप्ते। "जजान गर्भं महिमानमिन्द्रम्" [अथ० ३।१०।१२]। जनयामासेति प्राप्ते।

बाहुलकादसंज्ञाच्छन्दसोरपि णेर्लुक्। पर्णानि शोषयतीति **पर्णशुट्, पर्णशुषौ**। पर्णानि मोचयतीति **पर्णमुक्**। पर्णानि मोहयतीति **पर्णमुक् पर्णमुहौ**।

> वान्ति पर्णशुषो वातास्ततः पर्णमुचोऽपरे।
> ततः पर्णमुहो वान्ति ततो देवः प्रवर्षति ॥[1]

## जोरी च ॥४६॥

जु इत्येतस्माद्धातो रक् प्रत्यय ईकारश्चान्तादेशः। जवत इति **जीरः**—द्रव्यम् ॥

## सुसूधागृधिभ्यः क्रन् ॥४७॥

एभ्यः क्रन्। सुन्वन्ति सूयते वा **सुराः**—देवाः। सूते सुवते वा **सूरः**—आदित्यः। दधाति चित्तमिति **धीरः**—सत्त्ववान्। गृध्यति यत्र तत्रेति **गृध्रः**—खगः॥

## शुषिचिमिभ्यो दीर्घश्च ॥४८॥

एभ्यो रक् दीर्घश्चैषाम्। शु गतौ। शवति संग्रामम्, शूयते वा रिपुरनेनेति **शूरः**—जेता। सिनोति सीयते वा **सीरा**—लाङ्गलं हलविलिखिता रेखा च। चिनोति चीयते वा **चीरः**—मुनिजनवासः। मिनोति मीयते वा **मीरा**—देशसीमा॥

## वाविन्धेः ॥४९॥

वावुपपदे इन्धेः क्रन् प्रत्ययः। विविधमिन्धे इध्यते वा ज्योतिर्भिरिति **वीध्रम्**—नभः॥

## वृधिवपिभ्यां रन् ॥५०॥

आभ्यां रन्। वर्धतेऽत्यर्थमिति **वर्ध्रम्**—उप्यतेऽस्मिन् बीजमिति **वप्रम्**—तटम्, प्राकारश्च॥

## ऋज्रेन्द्राग्रवज्रविप्रकुप्रचुप्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्ल-तीव्रवर्णरामालाः ॥५१॥

एते रन्प्रत्यये निपात्यन्ते। अर्जेरलोपो रेफस्य ऋ। अर्जत इति **ऋज्रः**—

---

१. अनुपलब्धमूलमिदम्।

नायकः । इन्दतीद्यते वा **इन्द्रः**—शक्रः । अङ्ग्यत इति **अग्रम्** —प्रान्तः । व्रजे रलोपः। व्रजतीति **वज्रम्**—पविः । प्रातेराकाररेफयोर्लोपः । विविधं प्रातीति **विप्रः** । विविधं पातीति वा **विप्रः** । आलोपः । कुपि छादने । कुप्यतीति **कुप्रम्**—गृहं स्थानं वा । चुबि वक्त्रसंयोगे । अस्य पोऽन्तादेशः । चुम्बत इति **चुप्रम्**—मुखम् । क्षुर खुर विलेखने । अनयोरन्तलोपो गुणाभावश्च । क्षुरतीति **खुरः**—नापितशस्त्रम् । खुरतीति **खुरः**—शफः । भन्दत इति **भद्रम्**—कल्याणम् । गमेरुत्पूर्वस्य टिलोपः, उपसर्गान्तलोपश्च । उद्गच्छतीति **उग्रम्**—क्रूरम् । उद्गिरतीति **उग्रः**—कपर्दी । भियः प्रत्ययस्य वा लत्वम् । बिभेतीति **भेरः, भेलः**—शरः । शुभेः कान्तादेशः प्रत्ययस्य वा लत्वम् अगुणत्वं च । शोभत इति **शुक्रः**—कविः दैत्यगुरुश्च । शोभत इति **शुक्लः**—पाण्डुवर्णः । तिपृ क्षरणार्थः । उपधादीर्घो बश्चान्तादेशः । तेपत इति **तीव्रम्**—निष्ठुरम् । वृणोति व्रियते **वर्णः**—श्वेतादिः । अत्र प्रत्ययस्य नत्वम् । वर्णयतीति **वर्णः**—अकारादिः। प्रत्ययस्याकारादेशः। एतीति **इरा**—मदिरा । मान पूजायाम्,मल धारणे। नलोपः प्रत्ययस्य लत्वम्, ललोप उपधादीर्घः प्रत्ययस्य लः । मान्यतेऽनया मलति वा **माला** – स्रक् ॥

## कॄगॄशॄवृञ्चतिभ्यष्ट्वरच् ॥५२॥

एभ्यष्ट्वरच् । किरति कीर्यते वा **कर्वरः**—व्याघ्रादिः, विष्टरो वा । गिरति गृणाति वा **गर्वरः** । **गर्वरी**—सन्ध्या । शृणाति शीर्यन्ते वास्मिन् प्राणिन इति **शर्वरः** । **शर्वरी**—रात्रिः । वृणोतीति **वर्वरः**—कामः । **वर्वरी**—नदी । चतन्तेऽस्मिन् प्राणिन इति **चत्वरम्**—अङ्गणम् ॥

## नौ सदेः ॥५३॥

नावुपपदे सदेः ट्वरच् प्रत्ययः । नियतं सीदन्त्यस्मिन्निति **निषद्वरः**—जम्बालः । **निषद्वरी**—प्रभा ॥

## छित्वरछत्वरधीवरपीवरचीवरगह्वरकट्वरसंयद्वरोपह्वराः ॥५४॥

एते निपात्यन्ते ट्वरचि । छिनत्तेस्तोऽन्तादेशोऽगुणत्वं च, छयतेर्वा इत्वं तुगागमश्च । छिनत्ति छ्यतीति वा **छित्वरः**—छेदकः, धूर्त्तश्च । छादयतेर्णिलुकि तोऽन्तादेशः । छादयतीति **छत्वरम्**—छादनम् । ध्वंसतेर्धी आदेशोऽगुणत्वं च । ध्वंसत इति **धीवरः**—निषादः । प्यायः पीभावः । प्यायति प्यायते वाऽन्नाहारेणेति **पीवरः**—मांसलः । चेर्दीर्घः । चिनोतीति **चीवरम्**—मुनिजनवासः । गुहू संवरणे । उपधाया अत्वम् । ण्यन्तोऽपि । गुहति गूहयति वा तांस्तानर्थानिति **गह्वरम्**—गहनम्, प्रत्यन्त-

देशश्च । कटयत इति **कट्वरम्**—व्यञ्जनम् । यमेरन्त्यस्य दः । संयच्छतीति **संयद्वरः**—वाग्यतः । ह्वेञो वकाराकारलोपौ । उपहूयत इति **उपह्वरम्**—रहस्यं सन्धिश्च ॥

**अशेः सरन् ॥५५॥**

अशेः सरन् । अश्नुते अश्नात्यश्यते वा **अक्षरम्**—वर्णः, मोक्षपदं च ॥

**वसेश्च ॥५६॥**

वसेः सरन् । वसन्त्यस्मिन् नक्षत्रग्रहदेवगणा इति **वत्सरः**—अब्दः ॥

**सपूर्वाच्चित् ॥५७॥**

सपूर्वात् वसेः सरन् चित्संज्ञः । समन्ताद् वसन्त्यस्मिन् क्षणलवमुहूर्त्तपक्षमासायनानीति **संवत्सरः** । एवं **परिवत्सरः** ॥

**कृधूमदिभ्यः कित् ॥५८॥**

एभ्यः सरन् किच्च । क्रियत इति **कृसरम्**—अन्नम् । धुनोति धुनाति धूयते वा **धूसरम्** । माद्यते परस्य व्यसनेष्विति **मत्सरः** ॥

**पतेरश्च लः ॥५९॥**

पतेः सरन् रेफस्य च लकारः । पतन्तीति **पत्सलः**—तोयधारा ॥

**तन्यृषिभ्यां क्सरन् ॥६०॥**

आभ्यां क्सरन् । तनोति तन्यते वा **तसरम्**—भाण्डम् । ऋषतीति **ऋक्षरा**—तोयधारा ॥

**अमिनक्षियजिवधिपतिभ्योऽत्रन् ॥६१॥**

एभ्योऽत्रन् प्रत्ययः । अमत्यस्मिन्नन्नपानमिति **अमत्रम्**—भाजनम् । नक्षतीति **नक्षत्रम्**—ज्योतिः । इज्यतेऽस्मिन्देवतेति **यजत्रम्**—यज्ञस्थानम् । हन्त्यनेनेति **वधत्रम्**—शस्त्रं विषं वा । पतन्त्यनेनेति **पतत्रम्**—वाहनम् ॥

**गडेरादेश्च कः ॥६२॥**

गडेरत्रन् आदेश्च कादेशः । गड सेचने । गडतीति **कडत्रम्**—दाराः ॥

**वृञश्चित् ॥६३॥**

वृञोऽत्रन् चित्संज्ञः । वृणोति व्रियते वा **वरत्रम्**—वर्म, रक्षा ॥

**सुविदेः कत्रन् ॥६४॥**

सावुपपदे विदेः कत्रन् । शोभनं वेत्तीति **सुविदत्रम्** ॥

**कृतेर्नुम् च ॥६५॥**

कृतेः कत्रन् नुमागमश्च । कृन्ततीति **कृन्तत्रम्**—छेदनं, वेष्टनं वा ॥

**ऋच्छेररन् ॥६६॥**

ऋच्छेररन् प्रत्ययः । **ऋच्छरा**—इन्द्रियप्रलयः ॥

**अर्त्तिकमिभ्रमिदेविवाशिभ्यश्चित् ॥६७॥**

एभ्योऽरन् चित्संज्ञः । ऋच्छत्यर्यते वा **अररः**—रणम् । काम्यतेऽसौ **कमरः**—कोमलो बालः । भ्राम्यतीति **भ्रमरः**—शिलीमुखः । देवत इति **देवरः**—पतिभ्राता कनीयान् । वाश्यत इति **वाशरः**—कोकिलः ।

बाहुलकात् चमतीति **चमरः**—श्वापदः । एवमन्येऽपि ॥

**कुवः क्ररन् ॥६८॥**

कु इत्येतस्मात् क्ररन् । कवते कौति कुवते वा **कुररः** ॥

**अङ्गिमदिमन्दिभ्यश्चारन् ॥६९॥**

एभ्यश्चारन् प्रत्ययः । अङ्गत्यसौ सुवर्णकारादिभिरिति **अङ्गारः**—दग्धं काष्ठम् । माद्यतीति **मदारः**—पानशौण्डः । मन्दतेऽनेनेति **मन्दारः**—देवकुसुमवृक्षः ॥

**गडेः कड च ॥७०॥**

गडेरारन् कड चादेशः । गडति गड्यते वा तदिति **कडारः**—कपिलः ॥

**शृङ्गारभृङ्गारौ ॥७१॥**

एतौ निपात्येते आरनि । श्रिञ् सेवायाम् । शृभावो गुणाभावश्च नुक्गुकौ चागमौ । श्रयति सौभाग्यं श्रीयते वा विद्वद्भिरिति **शृङ्गारः**—प्रथमरसः, विदग्धता वा । अथवा शृणातेर्ह्रस्वत्वं शेषं पूर्ववत् । शृणाति माधुर्येण श्रोतृमनांसीति **शृङ्गारः**—कामाश्रयसम्बन्धः, सुकमाराभिधानकाव्यविशेषः, प्रधानशोभनो दत्तार्थश्च । बिभर्त्तेरगुणत्वं नुक् गुक् एतावागमौ । बिभर्त्ति कलशं भ्रियते वा मङ्गलार्थिभिरिति **भृङ्गारः**—उदककलशः ॥

**कञ्जिमृजिभ्यां चित् ॥७२॥**

आभ्यामारन् चित्संज्ञः । कञ्जिः सौत्रः । कञ्जति कज्यते वा **कञ्जारः**—कुसूलजातिः, व्यजनं वा । मार्ष्टीति **मार्जारः**—ओतुः ॥

**कमेः किदुच्चोपधायाः ॥७३॥**

कमेरारन् किद् उच्चोपधायाः । काम्यतेऽसौ **कुमारः**—सेनानीः बालो वा ॥

**तुषारादयश्च ॥७४॥**

एते निपात्यन्ते । तुष अप्रीतौ । अगुणः । तुष्यन्त्यस्मिन् प्राणिन इति **तुषारः**—हिमम् । कसति तस्मादिति **कसारः**—हिंस्रः । एवमन्येऽपि ॥

**शृणातेः करन् ॥७५॥**

अस्मान् करन् । शृणाति पित्तं पादौ वा **शर्करा**—गुडविकारः शिलाचूर्णं च ॥

**पुषेः कित् ॥७६॥**

पुषेः करन् किच्च । पोषति पुष्यति पुष्णाति वा **पुष्करम्**—पद्मं तीर्थं च ॥

**कॄशॄपॄकटिकुटिशौटिभ्य ईरन् ॥७७॥**

एभ्य ईरन् प्रत्ययः । कीर्यत इति **करीरः**—वृक्षः । शीर्यते तत् **शरीरम्**—देहः । पुनातीति **पवीरम्**—पवित्रम् । कटचत इति **कटीरम्**—कार्मुकम् । कुटचत इति **कुटीरः** । शौटतीति **शौटीरः**—धीरः ॥

**वशेः कित् ॥७८॥**

वशेरीरन् कित्संज्ञः । उश्यत इति **उशीरम्** ।

बहुलवचनात् **कुटीरम्** ॥

**कशेर्मुट् च ॥७९॥**

कशेरीरन् मुडागमश्च । कशिः सौत्रो धातुः । कशतीति **कश्मीरः**—जनपदः ॥

**कृञ उच्च ॥८०॥**

कृञ ईरन् उच्चान्तादेशः । क्रियते तदिति **कुरीरम्**—मैथुनं वेश्म वा ॥

**घसेः शित् किच्च ॥८१॥**

घसेरीरन् प्रत्ययः शिच्च किच्च । अदन्ति तदिति **क्षीरम्**—दुग्धम् ॥

**गभीरगम्भीरौ ॥८२॥**

एतौ निपात्येते ईरन्प्रत्यये । गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च । अस्य ह्रस्वत्वं भश्चान्तादेशो नुम् वा । गाधत इति **गभीरः, गम्भीरः**—निम्नं चपलश्च ।

बाहुलकात् **कडीरम्**—हरीतकी ॥

### चतेरुरन् ॥८३॥

चतेरुरन् प्रत्ययः। चततीति **चतुरः**—पटुजनः ॥[1]

### ष्ट्रन् ॥८४॥

सर्वधातुभ्यः ष्ट्रन् प्रत्ययो भवति। छाद्यतेऽनेनेति **छत्रम्**—आतपत्रम्। वस्ते शरीरमिति **वस्त्रम्**—वासः। पतत्यनेनेति **पत्रम्**—यानम्। राजत इति **राष्ट्रम्**—जनपदसन्निवेशः॥

### भ्रस्जिगमिनमिहनिविष्यशां वृद्धिश्च ॥८५॥

एभ्यः ष्ट्रन् वृद्धिश्चैषाम्। भृज्जति तस्मिन्निति **भ्राष्ट्रम्**—अम्बरीषम्। गच्छतीति **गान्त्रम्**—वपुः। नमति नम्यते वा **नान्त्रम्**—शिरः। हन्तीति **हान्त्रम्**—रक्षो वधश्च। वेवेष्टीति **वैष्ट्रम्**—विष्णुः। अश्नुते अश्नाति वा **आष्ट्रः**—आकाशः॥

### दिवेर्द्यु च ॥८६॥

दिवेः ष्ट्रन् द्यु चादेशो वृद्धिश्च। दीव्यन्त्यस्मिन् सुकृतिन इति **द्यौत्रम्**—त्रिदिवः॥

### उषिखनिभ्यां कित् ॥८७॥

आभ्यां ष्ट्रन् किच्च। ओषति वनस्पतीनिति **उष्ट्रम्**—तिर्यग्जातिः। खन्यत इति **खात्रम्**—तडागम्॥

### सिवुमुचेष्टेरू च ॥८८॥

आभ्यां ष्ट्रन् टेरूकारादेशश्च। सीव्यतेऽनेनेति **सूत्रम्**—तन्तुः। मुच्यते तदिति **मूत्रम्**—प्रस्रावः॥

### हुयामाश्रुभसिभ्यस्त्रन् ॥८९॥

एभ्यः त्रन्। हूयत इति **होत्रम्**—हविः। याति यानमिति वा **यात्रा**—गमनम्। मीयत इति **मात्रा**—परिमाणम्। शृण्वन्त्यनेनेति **श्रोत्रम्**—कर्णम्। बभस्तीति **भस्त्रम्**—चर्म॥

### गमेरा च ॥९०॥

गमेः त्रन् आकारोऽन्तादेशश्च। गच्छतीति **गात्रम्**—शरीरम्॥

---

१. अयमपपाठः। 'चतुर'शब्दस्य पूर्वत्र [८।२१] सिद्धत्वात्। अत्र 'चतन्त इति चत्वारः—संख्या' इति पाठेन भाव्यम्।

## अमिचिमिदिशंसिभ्यः क्त्रः ॥६१॥

एभ्यः क्त्रः प्रत्ययः । अमत्यस्मिन् आहार इति **आन्त्रम्**—गुह्यम् । चीयत इति **चित्रम्**—नानाऽऽकारलेख्यम् । मेद्यतीति **मित्रम्**—सुहृत् । शंसतीति **शस्त्रम्**—प्रहरणम् ॥

## पुवो ह्रस्वश्च ॥६२॥

पुवः क्त्रो ह्रस्वश्च । पुनातीति **पुत्रः**—अपत्यम् ॥

## स्त्री ॥६३॥

अयं निपात्यते । स्त्यायतेर्यलोपो रुक् चागमः ।[1] स्त्यायत्यस्यां गर्भ इति **स्त्री**—योषित् ॥

## गुधृवीपचिवचियमिमनितनिसदिक्षदिभ्यस्त्रन् ॥६४॥

एभ्यस्त्रन् । गूयते मेरोः प्रजादीनां सर्वासां विशेष इति **गोत्रम्**—गिरिः, ऋषिवंशादि वा । ध्रियत इति **धर्त्रम्**—स्तम्भः । वीयतेऽनेनेति **वेत्रम्**—वीरुत् । पचतीति **पक्त्रम्**—अग्निः । उच्यतेऽनेनेति **वक्त्रम्**—मुखम् । यच्छतीति **यन्त्रम्**—शरीरं सन्धानं पीडनं वा । मन्यते मनुते वा **मन्त्रः**—छन्दः । तनोति तन्यते वा तदिति **तन्त्रम्**—विस्तीर्णम् । अथवा **तन्त्रम्**—शास्त्रसंग्रहः, कुविन्दभाण्डं च । सीदतीति **सत्रम्**—यज्ञः । क्षद संवरणे । क्षदतीति **क्षत्रम्**—जातिः ॥

## दादिभ्यश्छन्दसि ॥६५॥

एभ्यस्त्रन् छन्दसि विषये । दीयतेऽनेनेति **दात्रम्**—छेदनम् । पूयतेऽनेनेति **पोत्रम्**—हलसूकरयोर्मुखाग्रम् । पिबत्यनेनेति **पात्रम्**—भाजनम् । लूयतेऽनेनेति **लोत्रम्**—शरीरम् ॥

## भूवादिगृभ्यो णित्रन् ॥६६॥

एभ्यो णित्रन्प्रत्ययः । भवतीति **भावित्रम्**—विधानम् । वादयत इति **वादित्रम्** । गीर्यत इति **गारित्रम्**—अन्नपानम्, गुरुश्च ॥

## चरेर्वृत्ते ह्रस्वश्च वा ॥६७॥

चरेर्णित्रन् प्रत्ययो वृत्ते गम्यमाने ह्रस्वश्च वा भवति । चरन्त्यनेनानन्दमिति **चारित्रम्**, **चरित्रं** वा—शीलं, स्थित्यभेदो वा ॥

---

१. अशुद्धोऽयं पाठः । 'स्त्यायतेस्तकाराकारलोपौ निपात्येते' इति भाव्यम् । यकारस्य 'लोपो व्योर्वलि' [अ० ६।१।६४] इति लोपो भविष्यति ।

### अशित्रादिभ्य इत्रोत्रौ ॥९८॥

अशि तॄ इत्येवमादिभ्यः क्रमाद् इत्रोत्रप्रत्ययौ भवतः। अश्नुतेऽश्नाति वा तदिति **अशित्रम्**। तरन्ति तेनेति **तरुत्रम्** [—प्लवः। व्रियत इति **वरुत्रम्**—] अभिप्रेतम् ॥

### अमेर्द्विषि चित् ॥९९॥

अमेरित्रः चित्संज्ञो द्विषि वाच्ये। अमति मनोवाक्कायैरिति **अमित्रम्**—शत्रुः ॥

### मसेरूरन् ॥१००॥

मसेरूरन् प्रत्ययः। मसी परिमाणे। मस्यतेऽसौ **मसूरः**—सस्यम् ॥

### हिंसेरीरन्नीरचौ ॥१०१॥

हिंसेरीरन् ईरच् एतौ प्रत्ययौ। हिनस्तीति **हिंसीरः**—हिंस्रः। स्वरे विशेषः ॥

### उदि दृणातेररच् पूर्वपदान्त्यलोपो धातोष्टिलोपश्च ॥१०२॥

उदच्युपपदे दृणातेररच् प्रत्ययः पूर्वपदान्त्यलोपो धातोष्टिलोपश्च। उद्दीर्यते तद् वायुनाऽग्निसहितेनेति **उदरम्**—जठरम्। स्वरे विशेषः ॥

### जनेरर ठः ॥१०३॥

जनेररः प्रत्ययः ठश्चान्तादेशः। जायन्तेऽस्मिन् वातादिवैषम्याद् व्याधय इति **जठरम्**—उदरम् ॥

### वनिमनिभ्यां चिद् वा ॥१०४॥

आभ्यामरः चित् ठश्चान्तादेशः। वनति वनुते वा **वठरः**—गृहदेशः, मूर्खश्च। मन्यते मनुते वा **मठरः**—ज्ञानी गोत्रं च ॥

### कृदरादयश्च ॥१०५॥

एते निपात्यन्त अरप्रत्यये। करोतेरगुणत्वं दुगागमश्च। कुर्वन्ति तस्मिन् व्रीह्यादिद्रव्यमिति **कृदरः**—मूलः। करोति तावदशुभमिति वा **कृदरः**। दृणातीति **दृवरम्**—विषभयम्। शृणातीति **शृवरः** ॥

### अश्नोतेराशुकर्मणि वरडी चोपधायाः ॥१०६॥

अश्नोतेर्वरट् ईकारश्चोपधाया आशुकर्मण्यभिधेये। अश्नुतेऽसौ विश्वमाश्विति **ईश्वरः**—सर्वमतः ॥

### व्याङि घ्रातेर्जातौ कन् ॥१०७॥

वि आङ् इत्येतयोरुपपदयोर्घ्राधातोः कन् प्रत्ययो जातावभिधेयायाम् । व्याजिघ्रतीति **व्याघ्रः**—शार्दूलः ॥

**करोतेर्द्वे च ॥१०८॥**

करोतेः कन् द्वित्वं च । करोति क्रियते वा **चक्रम्**—आयुधम्, रथाङ्गं वा ॥

**हन्तेरन् घ च ॥१०९॥**

हन्तेरन् प्रत्ययो घश्चान्तादेशः । हन्ति हन्यते वा **घरः**—गृहम् ॥

॥ **इति रेफान्ताः** ॥

**कपिगडिपटिभ्य ओलः ॥११०॥**

एभ्य ओलः प्रत्ययो भवति । कम्यत इति **कपोलः**—गण्डः । गण्डत इति **गण्डोलः**—हर्षुलः । पटतीति **पटोलः**—द्रव्यजातिः ॥

**हृषेरूलच् ॥१११॥**

हृषेरूलच् प्रत्ययः । हृष्यति यत्र तत्रेति **हृषूलः**—रमणशीलः ॥

**कल तृपश्च ॥११२॥**

तृपेः कलप्रत्ययः कमेश्चानुवर्त्तनात् । तृप्यति तर्पयति चा **तृपला**—लता । काम्यते कामयते वा तदिति **कमलम्**—पद्मम् ।

प्राक्प्रत्ययनिर्देशो मण्डलादिप्रसिद्ध्यर्थः । मण्डयते मण्डयति तत् **मण्डलम्**—परिवारः । कुण्ड्यत इति **कुण्डलम्** । कुश्यत इति **कोशलः**—देशः । बाहुलकाद् गुणः । तोषतीति **तोषलः**—देशः ॥

**शपेर्बश्च ॥११३॥**

शपेः कलप्रत्ययो बश्चान्तादेशः । शप्यतेऽसौ **शबलः**—वर्णः ॥

**वृषादिभ्यश्चित् ॥११४॥**

वृषादिभ्यः कलप्रत्ययो भवति चित्संज्ञः । आकृतिगणः । वर्षतीति **वृषलः**—शूद्रः । देवति दीव्यतीति वा **देवलः**—ऋषिः । केवृ सेवने । केव्यत इति **केवलम्** । पट्यते तदिति **पटलम्**—घनसंघातः । कुशिः सौत्रः । कोशत इति **कुशलम्**—आकुशलो मेधावी ॥

**मृजेष्टिलोपश्च ॥११५॥**

मृजेः कलः टिलोपश्च । मृज्यतेऽसौ **मलः**—बाह्यं रजः ॥

**चुपेरच्चोपधायाः ॥११६॥**

चुपेः कलप्रत्यय उपधाया अच्च । चोपयति मुहुर्मुहुरिति **चपलम्**—अस्थिर-चेष्टः ॥

**शकिशम्योर्नित् ॥११७॥**

आभ्यां कलः प्रत्ययो निच्च । शक्यते तदिति **शकलम्**—अंशः । शमयति शम्यते वा प्रायश्चित्तैरिति **शमलम्**—दुरितम् ॥

**द्रमिमस्योरुच्चोपधायाः ॥११८॥**

आभ्यां कलप्रत्ययो निच्च उच्चोपधायाः । द्रम गतौ । द्रमतीति **द्रुमलम्**—जलम् । मस्यतेऽनेन धान्यमिति **मुसलम्**—प्रहरणम् ॥

**कम्बलादयश्च ॥११९॥**

एते निपात्यन्ते कलप्रत्यये । कमु कान्तौ ण्यन्तः । अस्य मुमागमो बश्चान्तादेशो ह्रस्वश्च । कामयते तमिति **कम्बलः** । काम्यतेऽसौ **कोमलः**—सुकुमारः । उमागमः । छादयतेऽसौ यज्ञकर्मणेति **छगलः**—अजः । पलति पल्यते वा **पललम्**—विकारः । पाटयन्तीति **पाटला**—पुष्पजातिः । एवमन्येऽपि ॥

**तमिविडिविलिमृणिकुलिकपिपलिविशिपञ्चिकुणिभ्यः कालच् ॥१२०॥**

एभ्यः कालच् । ताम्यतीति **तमालः**—व्यालवृक्षौ च । विड इति सौत्रो ण्यन्तः । वेडयति मूषकानिति **विडालः**—मार्जारः । वेलयतीति **विलालः**—भिदुरः । मृणति मृण्यते वा **मृणालम्**—बिसम् । कुल्यतेऽसौ **कुलालः** । कपतीति **कपालम्** । पालयति पाल्यते तदिति **पलालम्** । विशन्तीति **विशालम्** । पचि व्यक्तीकरणे । पञ्चयतीति **पञ्चालः** । कुणयति कुण्यते वा **कुणालम्**—नगरम् ॥

**पतिचण्डिभ्यामालञ् ॥१२१॥**

आभ्यामालञ् प्रत्ययः । पतन्ति तस्मिन्निति **पातालम्**—भूमेरधः । चण्डतीति **चण्डालः**—श्वपाकः ॥

**पीयुक्वणिभ्यां कालन् ह्रस्वः प्रसारणं च ॥१२२॥**

आभ्यां कालन् प्रत्ययो ह्रस्वः प्रसारणं च । पीयु इति सौत्रो धातुः । पीयत इति **पियालम्**—शब्दः । क्वणति क्वण्यते वा **कुणालम्**—नगरम् । कुणालशब्दस्य **तमि-विडि [८।१२०]** इति सिद्धे पुनः साधनं स्वरार्थम् ॥

**पुषेः कलन् ॥१२३॥**

पुषेः कलन् प्रत्ययः। पोषति पुष्यति पुष्णाति वा **पुष्कलम्**—समग्रम् ॥

**मूशक्यविभ्यः क्लः ॥१२४॥**

एभ्यः क्लः प्रत्ययः। मवत इति **मूलम्**। शक्लृ श०। शक्नोति हृदयमावर्जयितुमिति **शक्लम्**—मधुरम्। अव्यते तदिति **अलम्** ॥

**कुडिकुषिभ्यां क्मलन् ॥१२५॥**

आभ्यां क्मलन् प्रत्ययः।.........॥

**वृङ्लुठितनिताडिभ्य उलन् तण्ड च ॥१२६॥**

एभ्य उलन् प्रत्ययः तण्डादेशश्चैषाम्।.........॥

**मव्यतेर्यलोपो मश्च ॥१२७॥**

मव्यतेरुलन् यलोपो मश्च।.........॥

**मङ्गेरलच् ॥१२८॥**

मङ्गेरलच् प्रत्ययः।.........॥

॥ इति लान्ताः ॥

**प्रथेः षिवन् प्रसारणं च ॥१२९॥**

प्रथेः षिवन् प्रत्ययः प्रसारणं च।.........॥

**अशूप्रुषिलटिकटिखटिविशिभ्यः क्वन् ॥१३०॥**

एभ्यः क्वन्प्रत्ययः।.........॥

**इण्शीभ्यां वन् ॥१३१॥**

आभ्यां वन्।.........॥

**सर्वनिघृष्वरिष्वलिष्वशिवपट्वप्रह्वेष्वा अतन्त्रे ॥१३२॥**

एते निपात्यन्ते।.........॥

**शेवायह्वाजिह्वाग्रीवाप्वामीवाः ॥१३३॥**

एते निपात्यन्ते।.........। लिहेर्जकार आदेर्निपात्यते। लिहन्त्यनया रसानिति **जिह्वा**। गॄ निगरणे। अस्य ईगागमो गुणाभावश्च। गिरत्यनयाऽन्नपानमिति **ग्रीवा**—शिरोधरा। आप्नोति सर्वमिति **आप्वा**—वायुः। मीयत इति **मीवा**—वायुः ॥

**कॄगॄशॄदॄभ्यो वः ॥१३४॥**

कृणाति किरति वा कर्वः—आखुः । गृणाति गिरति वा गर्वः—मदः । शृणाति भक्तानां पापानीति शर्वः—ईशानः । दृणाति सर्वानिति दर्वः—हिंस्रः । प्रत्ययान्तरकरणं स्वरार्थम् ॥

**स्रुवः कित् ॥१३५॥**

स्रुवो वः किच्च । स्रवन्ति तस्माद् हवींषीति स्रुवः—स्रुक् ॥

**शपेर्वन् ॥१३६॥**

शपेर्वन् प्रत्ययः । शपति शप्यते वा शप्वः—आक्रोशः ॥

**उल्वादयश्च ॥१३७॥**

एते निपात्यन्ते वन्प्रत्यये । ली श्लेषणे दे०,ला आदाने आ०। उत्पूर्वयोरुपसर्गान्तलोपः । उल्लीयते उल्लाति वा उल्वः—बभ्रुः, जरायुर्वा । विदि अवयये । अस्य दलोपः । रूपयतेर्वा वि आदेशः । विन्दयते रूप्यते वा विम्बम् [?]—प्रतिसादृश्यम्, देहश्च । शलेरुपधाया उत्वमगुणत्वं च । शलति शल्यते वा शुल्वम् ॥

॥ इति वान्ताः ॥

॥ इत्यष्टमः पादः ॥

———

# ॥ अथ नवमः पादः ॥

**क्लिशेरीच्चोपधायाः कन् लोपश्च लो नाम् ॥१॥**

क्लिशेः कन् प्रत्ययः,ईकार उपधायाः;लकारस्य लोपो नाम् चागमः। क्लिश्यति क्लिश्नाति वा **कीनाशः**—कदर्यो जनः ॥

**क्लिशेरन् लोपश्च लः ॥२॥**

क्लिशेरन् प्रत्ययो भवति लकारस्य च लोपः। क्लिश्नाति क्लिश्यते वा **केशः**—कचः ॥

**कलेरशन् ॥३॥**

कलेरशन् प्रत्ययः। कलयत्युदकमिति **कलशः**—घटः ॥

**इणस्तुम् ॥४॥**

इण अशन् प्रत्ययः तुमागमश्च। एतीति **एतशः**—ऋषिः ॥

॥ इति शान्ताः ॥

**अविमह्योष्टिषच् ॥५॥**

आभ्यां टिषच् प्रत्ययः। अवतीति **अविषः**—तृणजातिः। **अविषी**—गङ्गा। मह्यतेऽसौ **महिषः**। **महिषी** ॥

**रुहेर्वृद्धिश्च ॥६॥**

रुहेष्टिषच् वृद्धिश्च। रुह्यतेऽसौ **रौहिषः**। **रौहिषी**—दूर्वा ॥

**तवेर्णिद्वा ॥७॥**

तवेष्टिषच् णित्संज्ञो वा। तव इति सौत्रः। तवतीति **ताविषः, तविषः**—स्वर्गलोकः। **ताविषी, तविषी**—गङ्गा ॥

**नञि व्यथेः ॥८॥**

नञ्युपपदे व्यथेष्टिषच्। न व्यथत इति **अव्यथिषः**—सूर्याग्निभू[म]यः ॥

**सहेः षष् लुक् च कन् ॥९॥**

सहेः कन् प्रत्ययः षष् इत्ययं चादेशो लुक् प्रत्ययस्य। सहत इति **षट्**—संख्या ॥

**परौ व्रजेः षः पदान्ते क्विप् दीर्घश्च ॥१०॥**

परावुपपदे व्रजेः क्विप् दीर्घश्च, पदान्ते वर्तमानस्य जकारस्य षकारः । परिव्रजति इति **परिव्राट्** । पदान्त इति किम् ? परिव्राजौ ॥

## कॄतॄभ्यामीषन् ॥११॥

आभ्यामीषन् प्रत्ययः । कीर्यते तदिति **करीषम्**—गोमयविकारः । तरतीति **तरीषः**—प्लवः ॥

## शॄपॄभ्यां कित् ॥१२॥

आभ्यामीषन् कित्संज्ञः । शृणाति शीर्यते वा **शिरीषम्** । पृणाति पूर्यते वा **पुरीषम्** ॥

## अर्जेर्ऋज च ॥१३॥

अर्जेरीषन् ऋज इत्ययं चादेशः । अर्ज्यते तदिति **ऋजीषम्**—धनम् ॥

## अम्बरीषम् ॥१४॥

अयं निपात्यत ईषनि । भवति तस्मिन्निति **अम्बरीषम्**—काष्ठम् । आप्नोतेर्वा अम्बादेशो रुगागमः । आप्यते तत् **अम्बरीषम्**—आकाशम् ॥

## ऋनहिभ्यामुषच् ॥१५॥

आभ्यामुषच् प्रत्ययः । ऋच्छत्यर्यते वा **अरुषः** । नह्यतीति **नहुषः**—राजा ॥

## पुरः कुषन् ॥१६॥

पॄ इत्येतस्मात् कुषन् प्रत्ययः । पृणाति पूर्यते वा **पुरुषः**—पुमान् ॥

## पॄकलिभ्यामुषच् ॥१७॥

आभ्यामुषच् प्रत्ययः । पृणातीति **परुषः**—अन्नदः । कलते कल्यते वा **कलुषः** ॥

## पीयेरूषन् ॥१८॥

पीयेरूषन् प्रत्ययः । पीय इति सौत्रः । पी........॥

**[ इतोऽग्रे हस्तलेखः खण्डितः ]**

———

# [ अज्ञातनाम्नो वृत्तिकारस्य वृत्तिः (२) ]

## ॥ प्रथमः पादः ॥

**महादेवं नमस्कृत्य प्रणिपत्य सरस्वतीम् ।**
**वक्ष्ये वृत्तिमुणादीनां यथावृत्ति यथाक्रमम् ॥**

**अशवतॄभ्योऽनिः ॥१॥**

एभ्यो धातुभ्योऽनिप्रत्ययो भवति । अशू व्याप्तौ सौ०, अश भोजने क्र्यै० । अश्नुते अश्नाति वा वनस्पतीनां तेज इति **अशनिः**—कुलिशम्, शिला, मेघश्च । कर्त्ता । अव रक्षणादिषु भ्वौ० । अवति भूतानीति **अवनिः**—क्षितिः । कर्त्ता । तॄ प्लवनतरणयोः भ्वौ० । तरन्त्यनेनेति **तरणिः**—नदीसंक्रमः, आदित्यश्च । करणम् ॥

**अर्त्तिसृधृधमिभ्यश्च ॥२॥**

एभ्योऽनिः स्यात् । ऋ गतौ भ्वौ० । ऋच्छति, इयर्त्ति, अर्यते वा **अरणिः**—अग्नियोनिः । कर्त्ता कर्म च । सृ गतौ भ्वौ०, जौ० । धावति सिसर्त्ति वा **सरणिः**—इष्टगतिः पन्थाः । कर्त्ता । धृङ् अनवस्थाने भ्वौ० । ध्रियन्तेऽस्यां प्राणिन इति **धरणिः**—भूः । अधिकरणम् । धमि इति सौत्रो धातुः । धमति धम्यते वा **धमनिः**—वक्त्रैकदेशः । कर्त्ता कर्म च ॥

**आङि शुषेः सनश्छन्दसि ॥३॥**

आङ्युपपदे शुषेर्धातोः सन्नन्ताच्छन्दसि अनिः स्यात् । शुष शोषणे दै० । आशुशुक्षतीति **आशुशुक्षणिः**—अग्निः वायुश्च । कर्त्ता ।

**उणादयः** [अ० ३।३।१] बहुलवचनाद् आचिकीर्षतीति **आचिकीर्षणिः**—ओम् । कर्त्ता ॥

**कृषेरादेश्च चः ॥४॥**

कृषेरनिः स्यादादेश्चकारादेशः । कृष विलेखने । कृषति कर्षति वा **चर्षणिः**—कर्षकः, वृषः । कर्त्ता ॥

**अदेर्मुट् च ॥५॥**

अदेरनिः स्यान्मुडागमश्च । अद भक्षणे अ० । अत्तीति अद्मनिः—अग्निरश्वो वा । कर्त्ता ॥

..........॥६॥

वृत्तेरनिः स्यात् । वृतु वर्तने । वर्तन्तेऽनयेति वर्त्तनिः—मार्गः । करणम् ॥

क्षिपेः कित् ॥७॥

क्षिपेरनिः किच्च । क्षिप प्रेरणे तौ० । क्षिप्यत इति क्षिपणिः—आयुधम्, दण्डश्च । कर्म ॥

जसिसहेरुरिन् ॥८॥

आभ्यामुरिन् स्यात् । जस क्षेपणे[1] दै० । जस्यति जासयतीति वा जसुरिः—समाप्तिः । कर्त्ता । सह मर्षणे भौ० । सहतेऽत्यर्थमिति सहुरिः—पृथिवी, अक्रोधश्च । कर्त्ता ॥

भुवोऽनिच् ॥९॥

भवतेरनिच् स्यात् । भू सत्तायां भौ० । भवन्त्यस्यां भूतानीति भवनिः—लोकस्थितिः । अधिकरणम् ॥

असिसजिभ्यां क्थिन् ॥१०॥

आभ्यां क्थिन् स्यात् । असु क्षेपणे । अस्यतीति अस्थि—शरीरांशम् । कर्त्ता । षञ्ज् सङ्गे भौ० । सजत इति सक्थि—शरीरावयवः । कर्त्ता ॥

प्लुषिशुषिकुषिभ्यः क्सिः ॥११॥

एभ्यः क्सिः स्यात् । प्लुष दाहे दै० । प्लुष्यति प्लुष्यत इति प्लुक्षिः—अग्निः, जठरम् । कर्त्ता कर्म । शुष शोषणे । शुष्यतेऽनेनेति शुक्षिः—तेजः । करणम् । कुष निष्कर्षे क्र्‌° । कुष्णाति कुष्यते वा कुक्षिः—उदरांशः । कर्त्ता कर्म ॥

अशेर्नित् ॥१२॥

अशेः क्सिः स निच्च । अश भोजने, अशू व्याप्तौ । अश्नाति अश्नुते वा तेन रूपमिति अक्षि—लोचनम् । कर्त्ता करणम् ॥

नियो मिः ॥१३॥

नियो धातोर्मिः स्यात् । णीञ् प्रापणे भौ० । नयतीति नेमिः—चक्रप्रान्तः । कर्त्ता ॥

---

१. अन्यत्र 'जसु मोक्षणे' इति पाठः ।

### अर्त्तेरू च ॥१४॥

अर्त्तेर्मिः ऊ इत्ययं चादेशः। ॠ गतौ भ्वा० जु०। ॠच्छति इयर्त्ति अर्यते वा ऊर्मिः—तरङ्गः॥

### अशेरश च ॥१५॥

अशेर्मिः स्याद् रश इत्ययं चादेशः। अश भोजने, अश व्याप्तौ क्र्या०। अश्नुते अश्नाति वा रश्मिः—मयूखः। कर्त्ता॥

### भुवः क्मिन् ॥१६॥

भुवः क्मिन् स्यात्। भू सत्तायां भ्वा०। भवन्त्यस्यां भावा इति भूमिः—क्षितिः। अधिकरणम्॥

### दल्मिः ॥१७॥

दल्मिरित्ययं शब्दो निपात्यते क्मिन्प्रत्यये निरूढः। दल विदारणे। इडागमाभावश्च निपात्यते। दल्यतेऽनेनेदं दलयति वा दल्मिः—आयुधम्। करणं कर्त्ता च॥

### वीज्याज्वरिभ्यो निः ॥१८॥

एभ्यो निः स्यात्। वी गतिप्रजनकान्त्यसनखादनेषु अ०। वीयते वेणिः—केशबन्धः। कर्म। बहुलत्वाण्णत्वम्। ज्या वयोहानौ क्र्या०। जिनातीति ज्यानिः—हानिः। कर्त्ता। ज्वर रोगे। ज्वरति ज्वरणं जूर्णिः—रोगः। कर्त्ता भावश्च॥

### सृवृषिभ्यां कित् ॥१९॥

आभ्यां निः स्यात् किच्च। सृ गतौ भ्वा० जु०। सरति सिसर्त्तीति वा सृणिः—अग्न्यनिलजलानि। कर्त्ता। वृषु सेचने भ्वा०। वर्षतीति वृष्णिः—वासुदेववंशः, मेघो वा। कर्त्ता कर्म च॥

### अङ्गेर्नलोपश्च ॥२०॥

अङ्गेर्धातोर्निः स्यान्नलोपश्च। अगि गत्यर्थः। अङ्ग्यतेऽसाविति अग्निः—हुताशनः। कर्म॥

### वहिश्रियुश्रुग्लाहात्वरिभ्यो नित् ॥२१॥

एभ्यो निः स्यात् निच्च। [वह प्रापणे] भ्वा०। वहति उह्यते वह्निः—अग्निः। कर्त्ता कर्म च। श्रिञ् सेवायां भ्वा०। श्रयन्ते तामिति श्रेणिः—सङ्घातः। कर्म। यु मिश्रणे अ०। युवन्त्यस्यामिति योनिः—आभ्यन्तरप्रकृतिः, उत्पत्तिस्थानम्। अधिकरणम्। श्रु श्रवणे भ्वा०। श्रूयतेऽसौ पुम्भिरिति श्रोणिः—जघनम्। कर्म। ग्लै हर्षक्षये।

ग्लायत्यनयेति **ग्लानिः**—दीनता, हर्षक्षयश्च । करणम् । ओहाङ् गतौ, ओहाक् त्यागे जौ० । हीयते जहाति वा **हानिः** । कर्त्ता । ञित्वरा सम्भ्रमे । त्वरते त्वरणं वा **तूर्णिः**—त्वरा । कर्त्ता भावश्च ॥

**घृणिः पृश्निः पार्ष्णिर्भूर्णिः ॥२२॥**

एते शब्दा निपात्यन्ते निरूढलोपागमवर्णविकाराः । घृ क्षरणदीप्त्योः जौ० । अस्य गुणाभावो निपात्यते । जिघर्त्ति **घृणिः**—अग्निः, रश्मिश्च । कर्त्ता । स्पृश संस्पर्शे । अस्य सकारलोपो गुणाभावो निपात्यते । संस्पर्शनमात्रं **पृश्निः**—त्वरितस्तोकं, जीवश्च। भावः। स्पृश संस्पर्शे। अस्य सकारलोपो वृद्धिरुपधायाः षकारभावो निपात्यते । स्पृशत्यनयेति **पार्ष्णिः**—पादैकदेशः । करणम् । भू सत्तायाम् । अस्य रुगागमो निपात्यतेऽगुणत्वं च । भवतीति **भूर्णिः**—भूमिः, कालः । कर्त्ता ॥

बाहुलकत्वादन्येऽपि निपात्यन्ते । धृ धारणे । अस्य उकारादेशो निपात्यते । धारणं **धूर्णिः**—धृतिः । भावः । श्यैङ् गतौ । अस्य सम्प्रसारणमगुणत्वं निपात्यते । श्यायत इति **शिनिः**—राजा, वर्णश्च । कर्म । कु शब्दे आ०, कुङ् अव्यक्ते शब्दे भौ० । अनयोरगुणत्वं निपात्यते णत्वं च प्रत्ययस्य । कौति कवते कूयते वा **कुणिः**—विकलपाणिः । कर्त्ता कर्म ॥

**वॄदॄभ्यां विन् ॥२३॥**

वृञ् वरणे । वृणोतीति **र्विः**—धात्री । कर्त्ता । दॄ विदारणे क्र्यै०। दीर्यतेऽनयौदनमिति **दर्विः**—साधनभाण्डम् । करणम् ॥

**जॄशॄस्तॄजागृभ्यः क्विन् ॥२४॥**

एभ्यः क्विन् स्यात् । जॄष् वयोहानौ दै० । जीर्यत इति **जीर्विः**—कार्यः । कर्त्ता । शॄ हिंसायां क्र्यै० । शृणातीति **शीर्विः**—हिंसा जातिर्वा । कर्त्ता । स्तॄञ् आच्छादने क्र्यै० । स्तृणातीति **स्तीर्विः**—अध्वर्युः तृणजातिर्वा । कर्त्ता । जागृ निद्राक्षये आ० । जागर्त्तीति **जागृविः**—अग्निः, राजा च । कर्त्ता ॥

**दिवो द्वे दीर्घश्चाभ्यासस्य ॥२५॥**

दिवः क्विन् स्याद् द्वे चास्य रूपे भवतो दीर्घश्चाभ्यासस्य । दिवु क्रीडादौ दै० । दीव्यतीति **दीदिविः**—अन्नम् । कर्त्ता ॥

**कृविघृष्विच्छविस्थविदविकिकिदीविः ॥२६॥**

एते शब्दा निपात्यन्ते क्विन्प्रत्यये निरूढाः । डुकृञ् करणे ता०, कृञ् हिंसायां सौ०, कृञ् कृतौ भौ० । करोति कृणोति करति वा **कृविः** । कर्त्ता । घृ क्षरणदीप्त्योः

जौ० । अस्य षुगागमो निपात्यते । घृष्विः—वायुः, अग्निश्च । कर्त्ता । छदि विदारणे[1] चौ० णिजन्तः । णिलोपो दलोपो ह्रस्वो निपात्यते । छाद्यतेऽनयेति छविः—त्वक् शोभा च । करणम् । ष्ठा गतिनिवृत्तौ भौ० । अस्य ह्रस्वत्वं निपात्यते । तिष्ठतीति स्थविः—भुजङ्गमः, अग्निश्च । कर्त्ता । डुदाञ् दाने जौ० । अस्य ह्रस्वत्वं निपात्यते । ददातीति दविः—दाता । कर्त्ता । कु शब्दे । अस्य इत्वं निपात्यते प्रत्ययस्य च किः । कौति कवते[2] किकिः—विड़ाल, शब्दाकरो वा । कर्त्ता । दिवु क्रीडादौ दै० । अस्य दीर्घत्वं निपात्यते । दीव्यतीति दीविः—कितवः। कर्त्ता ।

बाहुलकत्वादन्येऽपि निपात्यन्ते । अट गतौ भौ० । अडागमो निपात्यते । अटन्त्यस्यामिति अटविः—अरण्यम् । अधिकरणम् ॥

**पातेर्डतिः ॥२७॥**

पातेर्डतिः स्यात् । पा रक्षणे[3] । पातीति पतिः—भर्त्ता । कर्त्ता ॥

**[अमेरतिः ॥२८॥]**

अमेरतिः स्यात् । अमतीति अमतिः—व्याधिः, गतिर्वा । कर्त्ता ॥

**वहिवस्यर्त्तिभ्यश्चित् ॥२९॥**

एभ्योऽतिः स्यात् चिच्च । वह प्रापणे भौ० । वहतीति वहतिः—वायुः, अनड्वांश्च । कर्त्ता । वस निवासे भौ० । वसन्त्यस्यामिति वसतिः—आलयः । अधिकरणम् । ऋ गतौ भौ० जौ० । ऋच्छति इयर्त्ति अर्यते वा अरतिः—वायुः, मरणं च । कर्त्ता कर्म च ॥

**अञ्चेः को वा ॥३०॥**

अञ्चेरतिः स्यात् चित्संज्ञकः, ककारश्चान्त्यस्य वा । अञ्चु गतिपूजनयोः भौ० । अञ्चति अच्यते[4] वा अञ्चतिः, [अङ्कतिः]—ब्रह्माग्न्यनिलाः । कर्त्ता कर्म च ॥

**हन्तेरंह च ॥३१॥**

हन्तेरतिः स्यात् चित्संज्ञकः, अंह इत्ययमादेशः । हन हिंसागत्योः । हन्ति हन्यते वा अंहतिः—पन्थाः, कालः, रथश्च । कर्त्ता [कर्म] ॥

---

१. अन्यत्र 'छद संवरणे' पाठः । २. 'कुवते' इति हस्तलेखे।

३. 'पत् पतने' इत्यशुद्धः पाठो ह. ।

४. 'अंकच्यते' इत्यपपाठो ह. ।

## रमेर्नित् ॥३२॥

रमेरतिः स्यात् नित्संज्ञकश्च । रमु क्रीडायां भ्वा० । रमतेऽस्यामिति **रमतिः**—क्रीडा । अधिकरणम् ॥

## षुञोरिन् दीर्घश्च ॥३३॥

सुनोतेरिन् स्याद् दीर्घश्च । षुञ् अभिषवे स्वा० । सुनोति सूयते वा **सूरिः**—पण्डितः । कर्त्ता कर्म ॥

## अदिशदिभूशुभिभ्यः क्रिन् ॥३४॥

एभ्यः क्रिन् स्यात् । अद भक्षणे । अत्ति अद्यते वा **अद्रिः**—पर्वतः । कर्त्ता कर्म । शद्लृ शातने भ्वा० । शद्यत इति **शद्रिः**—वज्रः, गिरिश्च । कर्म । भू सत्तायां भ्वा० । भवतीति **भूरिः**—बहुः । कर्त्ता । शुभ दीप्तौ भ्वा० । शोभत इति **शुभ्रिः**—दर्शनीयः । कर्त्ता ॥

## वङ्क्र्यादयश्च ॥३५॥

वङ्क्र्यादयः शब्दा निपात्यन्ते क्रिन्प्रत्यये । वकि गतौ कौटिल्ये च । वञ्चतेः कुत्वम् [नलोपाभावश्च] । वञ्चते वञ्चतीति वा **वङ्क्रिः**—शिल्पम् । कर्त्ता । मकि मण्डने भ्वा० । मङ्कत इति **मङ्क्रिः**—शिवः । कर्त्ता । अकि लक्षणे । अङ्कत इति **अङ्क्रिः**—चिह्नम् । कर्त्ता ॥

## राशतिभ्यां त्रिप् ॥३६॥

[आभ्यां त्रिप् स्यात् ।] रा दाने अ०, रै शब्दे भ्वा० । राति रायतीति **रात्रिः**—क्षपा । कर्त्ता । शतिः सौत्रो धातुः । [शततीति] **शत्रिः**—हस्ती । कर्त्ता ॥

## अदेस्त्रिनिच्च ॥३७॥

अदेस्त्रिः स्यान्निच्च । अत्ति तपःस्वाध्यायौ **अत्रिः**—ऋषिः । स्वरे विशेषः ॥

## मृकणिभ्यामीचिः ॥३८॥

आभ्यामीचिः स्यात् । मृङ् प्राणत्यागे । म्रियत इति **मरीचिः**—रश्मिः । कर्त्ता । कण निमीलने । कणति कण्यते वा **कणीचिः**—चक्षुः प्राणश्च । कर्त्ता कर्म ॥

## वेञो डित् ॥३९॥

वेञ ईचिः स्यात् डित्संज्ञकः । वेञ् तन्तुसन्ताने । वयते ऊयते[1] **वीचिः**—ऊर्मिः । कर्त्ता कर्म ॥

---

१. 'वीयते वयति' इति ह. ।

### श्वयतेश्चित् ॥४०॥

श्वयतेरीचिः स्यात् चित्संज्ञकः। टुओश्वि गतिवृद्धचोः। श्वयतीति **श्वयीचिः**—चन्द्रमाः श्वयथुश्च। कर्त्ता॥

### नौ सञ्जेरथिन्[1] ॥४१॥

नावुपपदे सञ्जेरथिन् स्यात्। सञ्ज परिष्वङ्गे भौ०। निषजते निषज्यते वा **निषञ्जथिः**—रथकूबरः, कुणपश्च। कर्त्ता कर्म॥

### उद्यर्त्तेश्चित् ॥४२॥

उद्युपपदेऽर्त्तेर्धातोरथिन् स्यात् चित्संज्ञकः। ऋ गतौ भौ०। उदृच्छति अर्यते वा **उदरथिः**—वप्रः, समुद्रः, कायश्च। कर्त्ता [कर्म]॥[2]

### सर्त्तेर्णित् ॥४३॥

सर्त्तेरथिन् णिच्च। सृ गतौ भौ० जौ०। धावति[3] सिसर्त्ति[4] वा **सारथिः**—रथवाहः। कर्त्ता॥

### अमेर्गुरी रश्च लो वा ॥४४॥

[अमेर्धातोर्गुरिः प्रत्ययो भवति] रेफस्य च वा लकारः। अम गत्यादिषु भौ०। अमतीति **अङ्गुलिः, अङ्गुरिः** वा—करशाखा। कर्त्ता॥

### इन् सर्वधातुभ्यः ॥४५॥

इन् स्यात्। पद गतौ। पद्यत इति **पदिः**—मोक्षमार्गः। चिट पर प्रैष्ये भौ०। चेटतीति **चेटिः**—प्रेष्या[5]। कर्त्ता। वट वेष्टने भौ०। वटतीति **वटिः**—तन्तुः। कट गतौ। कटति कटचते वा **कटिः**—शरीराङ्गम्। कर्त्ता कर्म च। बल प्राणने। बलति बल्यते वा **बलिः**—असुरः दैत्यो वा। कर्त्ता कर्म च। रु शब्दे। रौति रूयते वा **रविः**—भानुः। कर्त्ता कर्म। पूञ् पवने क्र्यै०। पुनाति **पविः**—पवित्रं, वज्रं च। कर्त्ता॥

### हृपिषिरुहिवृतिविदिकीर्तिभ्यश्च ॥४६॥

---

१. अन्यत्र 'नौ षञ्जेर्घथिन्।··· ··निषङ्गथिः' इत्युपलभ्यते।

२. हस्तलेख इतोऽग्रे 'अमेर्गुरी······कर्त्ता।' इति सवृत्ति सूत्रमस्थाने पठ्यते, तदत्र यथास्थानमग्रे नीतम्।

३. 'सरति' इति ह.।

४. सर्वत्र 'सिसर्त्ति' इत्यपपाठ उपलभ्यते।

५. 'चिर प्रेष्ये भौ०। चरतीति चेरिः—प्रेष्यः' इति ह.।

एभ्य इन् । हृञ् हरणे भ्वा०, हृ प्रसह्यकरणे जो० । हरति जिहर्त्ति वा हरिः—विष्णुः, वानरभान्वादयः । पिश अवयवे[1] । पिशति पिश्यते वा पेशिः—केशोर्णमांसलवः पेशलश्च । कर्त्ता कर्म च । रुह बीजजन्मनि प्राविर्भावे [च] भ्वा० । रोहतीति रोहिः—जन्म । कर्त्ता । वृतु वर्तने भ्वा० । वर्तते वृत्यते वा वर्त्तिः—द्रव्यम्, चेलवेष्टनं वा । कर्त्ता कर्म च । विद ज्ञाने श्रा०, विद्लृ लाभे, विद विचारणे रौ०, विद सत्तायां दै० । वेत्ति विन्दति विनत्ति विद्यते वा वेदिः—त्रेताग्न्यधिष्ठानम् । कर्त्ता । कीर्त्तिः सौत्रो धातुः, कॄत संशब्दने । कीर्त्तनं कीर्त्यते कीर्त्तिः—ख्यातिः । भावः कर्म च ॥

## इगुपधात् कित् ॥४७॥

इगुपधाद् धातोरिन् प्रत्ययः स्यात् । भिदिर् विदारणे रौ०। भिनत्तीति भिदिः—वज्रं सूचकश्च । छिदिर् द्वैधीकरणे । छिनत्तीति छिदिः—परशुः । कर्त्ता । शुच शोके भ्वा० । अहरहः क्लिश्यमानं जनं शोचतीति शुचिः—विद्वान् । कर्त्ता । रुच दीप्तौ । रोचत इति रुचिः—भानुः काङ्क्षा च । कर्त्ता । ऋषी गतौ । ऋषतीति ऋषिः—मुनिः । कर्त्ता । कृष विलखने तौ०, भ्वा० । कृषति कर्षति [वा]तामिति कृषिः—वैश्यवृत्तिः । कर्म ॥

## भ्रमेः सम्प्रसारणं च ॥४८॥

भ्रमेः [इन्] सम्प्रसारणं किच्च । भ्रमु अनवस्थाने दै०, भ्रमु चलने भ्वा० । भ्राम्यति भ्रमति वा भृमिः[2]—वायुः । कर्त्ता ॥

## क्रमितमिस्तम्भामत इच्च ॥४९॥

एभ्य इन् स्यात् किच्च, इकारश्चैषां भवत्यकारस्य । क्रमु पादविक्षेपे भ्वा० । क्रामति क्रम्यते वा क्रिमिः—प्राणी । कर्त्ता कर्म च । तमु ग्लानौ[3]। ताम्यतीति तिमिः—मत्स्यः। कर्त्ता । [स्तभि प्रतिबन्धे भ्वा०,स्तम्भु सौत्रो धातुः । स्तम्भते स्तभ्नाति वा स्तिभिः—समुद्रः । कर्त्ता] ॥

## मनेरुच्च[4] ॥५०॥

मनेरिन् प्रत्ययः स्याद् अस्य चोकारः । मन ज्ञाने, मनु अवबोधने ता० । मन्यते मनुते वा मुनिः—ऋषिः । कर्त्ता ॥

---

१. 'अशू अवयवे' इत्यशुद्धः पाठो ह. ।
२. 'भ्रमिः' इति ह. । ३. अन्यत्र 'तमु काङ्क्षायाम्' इत्युपलभ्यते ।
४. 'मनेरुश्चास्य' इति ह. ।

### वल्लेर्वलिश्चाहिरण्ये ॥५१॥

वल्लेर्धातोरिन् स्याद् वलिरादेशोऽहिरण्यार्थे। वल्ल इति सौत्रो धातुः। वल्लति वल्ल्यते वा **वलिः**—त्वङ्मांससंकोचः। कर्त्ता कर्म च। अहिरण्य इति किम्? **वल्लिः**—हिरण्यशलाका॥

### वसिवपिवदिराजिव्रजि[ध्वजि]सदिहनिकमिकषिवाशिवारिभ्य इञ्[1] ॥५२॥

एभ्य इञ् स्यात्। वस निवासे भ्वा०। वसतीति **वासिः**—तक्ष्णो भाण्डम्। कर्त्ता। डुवप बीजसन्ताने। वपत्यस्यामिति **वापिः**—पुष्करिणी। अधिकरणम्। वद व्यक्तायां वाचि। वदन्त्यस्यामिति **वादिः**—वीणा। अधिकरणम्। राजृ दीप्तौ। राजतीति **राजिः**—लेखा तिलकादिश्च। व्रज गतौ भ्वा०। व्रजतीति **व्राजिः**—मनः। कर्त्ता। ध्वज गतौ। ध्वजतीति **ध्वाजिः**—अश्वः। कर्त्ता। षद्लृ विशरणगत्यवसादनेषु भ्वा०। सीदतीति **सादिः**—अश्वारोहः। कर्त्ता। हन हिंसागत्योः अ०। हन्तीति **हानिः**—सर्वनाशः। कर्त्ता। कमु कान्तौ। काम्यत इति **कामिः**—कामः। कर्म। कष हिंसायाम्। कषतीति **काषिः**—हिंसकः, उपकरणभाण्डं च। कर्त्ता। वाशृ शब्दे। वाश्यति वाश्यते वा **वाशिः**—जलदः। कर्त्ता कर्म च। वृञ् वरणे स्वा० णिजन्तः। वार्यते तदिति **वारि**—जलम्। कर्म॥

### नहो भश्च ॥५३॥

नह इञ् स्याद् भश्चान्तादेशः। णह बन्धने दि०। नह्यतीति **नाभिः**—चक्रमध्यं, प्राण्यवयवश्च। कर्त्ता॥

### कृषेर्वृद्धिश्छन्दसि ॥५४॥

कृषेरिञ् छन्दसि वृद्धिश्च। कृष विलेखने भ्वा०। कर्षति कृषति वा **कार्षिः**—कृषिकर्म। छन्दसीति किम्? **कृषिः**। अत्र इगुपधात् कित् [१।४७] [इति इन्]॥

### शॄ शकुनौ ॥५५॥

शॄ इत्यस्माद्धातोरिञ् स्यात् शकुनौ वाच्ये। शॄ हिंसायाम्। शृणातीति **शारिः**—शकुनिः। कर्त्ता। शकुनाविति किम्? **शरिः**—शूलम्। अच इः [१।६६]॥

### कृञ उदीचां [कारिषु] ॥५६॥

---

४. हस्तलेखे 'इण्' इति पठ्यते। अग्रे 'जनिघसिभ्यामिण्' इत्यत्र 'इण्' पाठादत्र 'इञ्' इति भाव्यम्।

कृञो धातोरिञ् स्याद् उदीचां मते कारिष्वभिधेयेषु । डुकृञ् करणे । करोतीति **कारिः**—शिल्पी । कर्त्ता । उदीचामिति किम् ? **करिः**—विष्णुः । **अच इः [१।६६]** ।।

**जनिघसिभ्यामिण् ।।५७।।**

आभ्यामिण् स्यात् । जनी प्रादुर्भावे दै०, जन जनने जौ० । जायते जजन्ति [जन्यते] वा **जनिः**—प्रादुर्भावः । कर्त्ता कर्म च । अद भक्षणे आ० । अत्ति अर्थमिति **घासिः**—अग्निः । कर्त्ता ।।

**अज्यतिभ्याम् ।।५८।।**

आभ्यामिण् स्यात् । अज गतिक्षेपणयोः भौ० । अजति अज्यते **आजिः**—युद्धम् । कर्त्ता कर्म च । अत सातत्यगमने । अततीति **आतिः**—पक्षी[1] । कर्त्ता ।।

**पादे च ।।५९।।**

पादशब्द उपपदेऽजातिभ्यामिण् । पादस्य पदाज्यातिगोपहतेषु [अ० ६।३।५२] इति पद्भावः । पादाभ्यामजतीति **पदाजिः**, [पादाभ्यामततीति] **पदातिः**—हस्त्यश्वरहितो योधः । कर्त्ता ।।

**अशिपणाय्यो रुड्लुकौ च ।।६०।।**

एतयोरिण् स्याद् यथासंख्यं रुड्लुकौ चागमादेशौ भवतः । अशू सौ०, अश क्रै० । [अश्नुते] अश्नाति वा **राशिः**—यवादिसंघातः, ग्रहनक्षत्रम् । पण व्यवहारे स्तुतौ । पणाय्यतेऽनेनेति **पाणिः**—हस्तः । अत्रायो लुक् । करणम् ।।

**वेञो डिच्च ।।६१।।**

वेञ इण् स्यात् डिच्च । वेञ् तन्तुसन्ताने । वयतीति **विः**—तन्तुवायः । कर्त्ता।।

**प्रे हरतेः कूपे ।।६२।।**

प्रशब्द उपपदे हरतेरिण् डिच्च कूपेऽभिधेये । हृञ् हरणे भौ० । प्रह्रियतेऽस्मादिति **प्रहिः**—कूपम् । अपादानम् ।।

**नौ व्येञो यलोपः पूर्वस्य च दीर्घः ।।६३।।**

नावुपपदे व्येञो धातोरिण् स्यात् डिच्च यलोपो भवति पूर्वस्य च दीर्घः । व्येञ् संवरणे भौ० । निवीयत इति **नीविः**—अधोवासः ।।

**समाने ख्यः[2] स चोदात्तः ।।६४।।**

---

१. 'पक्षिः' इति ह. । २. 'समानाख्य' इत्यपपाठो ह. ।

समान उपपदे ख्या इत्येतस्मादिण् डिच्च यलोपश्च धातोः, समानस्य सादेशः स चोदात्तः। ख्या प्रकथने अा०। समानं ख्यायते जनैरिति **सखा**[1]—वयस्यः। कर्म[2]॥

### आङि श्रिहनिभ्यां ह्रस्वश्च ॥६५॥

आङ्युपपद आभ्यामिण् स्यात् डिच्च ह्रस्वश्च पूर्वपदस्योदात्तः। श्रिञ् सेवायां भौ०। आश्रयन्ति तामिति[3] **अश्रिः**—कोणः। कर्म। हन हिंसागत्योः। आहन्तीति **अहिः**—सर्पः। कर्त्ता॥

### अच इः ॥६६॥

अजन्ताद् धातोरिः प्रत्ययः स्यात्। रु शब्दे। रौति रूयते वा **रविः**—भास्करः। कर्त्ता कर्म च। पूञ् पवने। पुनाति पूयते वा **पविः**—वायुः। कर्त्ता कर्म च। भू सत्तायाम्। भवतीति **भविः**—सर्गो विधिश्च। डुभृञ् धारणपोषणयोः। बिभर्त्ति भ्रियते वा **भरिः**—वसुधा। कर्त्ता कर्म च॥

### खनिकष्यज्यसिवसिध्वनिसनिग्रन्थिचरिभ्यश्च ॥६७॥

एभ्य इः। खन विदारणे[4] भौ०। खन्यत इति **खनिः**—तडागः। कर्म। कष हिंसार्थे भौ०। कष्यत इति **कषिः**। अज गतिक्षेपणयोः। अज्यत इति **अजिः**। कर्म। असु क्षेपणे। अस्यत इति **असिः**—खड्गः। कर्म। वस निवासे। वसति तस्यामिति **वसिः**—शय्या, रात्रिः। अधिकरणम्। ध्वन शब्दे भौ०। ध्वनतीति **ध्वनिः**। षण सम्भक्तौ भौ०, षण दाने ता०। सनति सनोतीति वा **सनिः**—भक्तिः दानं च। कर्त्ता। ग्रन्थ सन्दर्भे क्रै०। ग्रथ्नाति ग्रथ्यते वा **ग्रन्थिः**—सन्धिः। कर्त्ता कर्म च। चर गतिभक्षणयोः। चरतीति **चरिः**॥

### उभेर्द्वश्च ॥६८॥

उभेः [इः] द्वादेशश्च। उभ पूर्तौ[5]। उभति उभ्यते वा **द्वौ**॥

### वृतेश्छन्दसि ॥६९॥

वृतेरिप्रत्ययो वेदे। वृतु वर्तने। वर्तत इति **वर्तिः**—द्रव्यम्, दीपाङ्गं च। कर्त्ता॥

### भुजेः किच्च ॥७०॥

---

१. 'सखिः' इति ह.। २. 'कर्त्ता' इति ह.।

३. 'आश्रयति ताभ्यामिति' इति ह.।

४. 'खनु अवदारणे' इत्यन्यत्रोपलभ्यते।

५. अन्यत्र 'उभ पूरणे' इति पठ्यते।

भुजेरिः स्यात् किच्च । भुज पालनाभ्यवहारयोः रौ०, भुज कौटिल्ये तौ० । भुनक्ति भुजति भुज्यते वा भुजिः—राजा कुटिलश्च । कर्त्ता कर्म च ।।

**कॄगॄशॄपॄकुटिभिदिछिदिभ्यश्च ।।७१।।**

एभ्य इः किच्च । कॄ विक्षेपे तौ० । किरति कीर्यते वा किरिः—मूषिका, क्रोडः, गर्त्तः । कर्त्ता कर्म च । गॄ निगरणे क्र्यै०[1] । गृणाति गीर्यते वा गिरिः —पर्वतः । कर्त्ता कर्म च । शॄ हिंसायाम् । शृणाति शीर्यते वा शिरिः—शलभः शिला च । पॄ पालन-पूरणयोः क्र्यै० । पृणाति पूर्यते वा पुरिः —पूर्भूपश्च । कर्त्ता कर्म च । कुट कौटिल्ये । कुटतीति कुटिः—शरीरम् । कर्त्ता । भिदिर् विदारणे रौ० । भिनत्तीति भिदिः—प्रहरणम् । कर्त्ता । छिदिर् द्वैधीकरणे । छिनत्तीति छिदिः—अस्त्रम् । कर्त्ता ।।

**कुण्डिकम्प्योर्नलोपश्च ।।७२।।**

आभ्यामिः प्रत्ययः किच्च नलोपः । कुडि दाहे । कुण्डतीति कुडिः—देहः, आलयश्च । कर्त्ता । कपि चलने । कम्पते कपिः—कृशानुर्वानरश्च । कर्त्ता ।।

**वसेस्तिप् ।।७३।।**

वसेस्तिप् प्रत्ययः स्यात् । वस निवासे भौ० । वास्यते वास्यामाहार औषधमिति वस्तिः—अधःकायप्रदेशः, चर्ममयः पुटश्च[2] । अधिकरणम् ।।

**प्रथेर्नित् ।।७४।।**

प्रथेस्तिप् स्यात् निच्च । प्रथ प्रथने[3] भौ० । प्रथत इति प्रत्तिः—भागः । करणम् ।।

**वौ तसेः ।।७५।।**

वावुपपदे तसेस्तिप् स्यान्निच्च । तस उपक्षये । वितस्तिः—कर्त्ता ।।

**दृणातेः किद्ध्रस्वश्च ।।७६।।**

दृणातेस्तिप् किद् ह्रस्वश्च । दॄ भये । दीर्यत इति दृतिः—प्लवः । कर्म ।।

**पातेरतिः ।।७७।।**

पातेरतिः स्यात् । पा रक्षणे । पातीति पातिः—भर्त्ता ।।

**वातेर्नित् ।।७८।।**

---

१. अन्यत्र 'गॄ निगरणे तौ०' इति पाठः ।

२. 'चर्ममयवरश्च' इति ह. ।

३. 'प्रथ प्रख्यापने' इति ह. ।

वातेरतिः स्यान्नित्संज्ञकः। नित्करणमाद्युदात्तार्थम्। वा गतिगन्धनयोः आ०। वातीति वातिः—गन्धमिश्रः पवनः। कर्त्ता॥

**तनोतेर्डिः ॥७९॥**

[तनोतेर्डिः] स्यात्। तनु विस्तारे। तनोति तन्यते वा बुद्धिमिति तन्त्रिः—संख्या। कर्त्ता कर्म च॥

**जीर्यतेः क्रिन् रश्च वः ॥८०॥**

जीर्यतेः क्रिन् धातो रेफस्य वादेशः। जॄष् वयोहानौ क्र्य०। जृणाति जीर्यते वा जिव्रिः—शरीरम्। [कर्त्ता] कर्म॥

**ग्रहेरनिः ॥८१॥**

ग्रहेरनिः स्यात्। ग्रह उपादाने। गृह्णातीति गृह्यते वा ग्रहणिः—उदरान्तःस्थानम्, यत्राहारः पच्यते। कर्त्ता कर्म च॥

[॥ इतीदन्ताः ॥]

**अवितॄस्तृतन्त्रिभ्य ईः ॥८२॥**

एभ्य ईः स्यात्। अव रक्षणादिषु। अवति अव्यते वा अवीः—राजा, स्त्री। कर्त्ता कर्म। तॄ प्लवनतरणयोः भ्वा०। तरतीति तीर्यते वा तरीः—वायुः, प्लवनं च। कर्त्ता कर्म च। स्तॄञ् आच्छादने क्र्य०। स्तृणाति स्तीर्यते वा स्तरीः—मेघश्छादनं च। कर्ता कर्म च। तन्त्रि कुटुम्बधारणे। तन्त्र्यतेऽनयेति तन्त्रीः—शुष्कस्नायुः, वादित्रम्। करणम्॥

**यापोः किद् द्वे च ॥८३॥**

आभ्यामीः स्यात् किच्च, द्वे चानयो[१] रूपे भवतः। या प्रापणे अा०। यान्तीति [अनेन न] पुनरावृत्तिपदमिति ययीः—मोक्षमार्गः। करणम्। पा पाने भ्वा०, [पा रक्षणे] अा०। पिबति पाति वा पपीः—आदित्यः। कर्त्ता॥

**लक्षेर्मुट् च ॥८४॥**

लक्षेरीः स्यान् मुडागमः। लक्ष दर्शनाङ्कनयोः चु०। लक्षयति पुण्यकृतो लक्ष्यते वा पुण्यकृद्भिः लक्ष्मीः—श्रीः। कर्त्ता कर्म च॥

---

१. 'चास्य' इत्यशुद्धो ह.।

**वातप्रमीः ॥८५॥**

अयं शब्दो निपात्यते । डुमिञ् प्रक्षेपणे सौ० प्रपूर्वो वातशब्द उपपदे । वातं प्रमिणोतीति **वातप्रमीः**—वृक्षः, पक्षी च । कर्त्ता ॥

[॥ इति ईदन्ताः ॥]

**कृवापाजिमिस्वदिसाध्यशूभ्य उण्[१] ॥८६॥**

एभ्य उण् स्यात् । डुकृञ् करणे ता०, कृञ् हिंसायां सौ०, कृञ् करणे भौ० । निरनुबन्धग्रहणे [न सानुबन्धकस्य ग्रहणमिति] । करोति·········॥[२]

**[फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च ॥१०३॥]**

·········जनी प्रादुर्भावे दै० । जायते तदिति **जतु**—लाक्षानिर्यासः । कर्त्ता ॥

**वलेर्गुक् च ॥१०४॥**

वलेरुः स्याद् गुक्चागमः । वल संवरणे । वलतीति **वल्गुः**—सरसः, दर्शनीयः । कर्त्ता ॥

**शः कित् सन्वच्च ॥१०५॥**

शो इत्येतस्माद् उः स्यात् किच्च निच्च, सन्वच्चास्मिन् कार्यं स्यात् । शो तनूकरणे दै० । श्यति मातुः स्तनं प्राप्येति **शिशुः**—बालः । कर्त्ता ॥

**यो द्वे च[३] ॥१०६॥**

या इत्येतस्माद् उः स्यात् किच्च द्वे चास्य रूपे स्तः । या प्रापणे अ० । याति तेन सुकृतकर्माणीति **ययुः**—अश्वोऽश्वमेधीयः, स्वर्गमार्गश्च । करणम् ॥

**कुर्भ्रश्च ॥१०७॥**

भृ इत्यस्यात् कुः स्याद् द्वे चास्य रूपे स्तः । डुभृञ् धारणपोषणयोः जौ०, भृञ् भरणे भौ० । बिभर्त्ति भरति वा **बभ्रुः**—कपिलो वर्णः, नकुलः ।

प्राक्प्रत्ययनिर्देशश्चक्रवादीनां प्रसिद्ध्यर्थम् । डुकृञ् करणे ता० । करोत्यसाध्यान्यपि[४] कर्माणि **चक्रुः** । कर्त्ता । हन हिंसागत्योः अ० । हन्तीति **जघ्नुः**—इन्द्रः ।

---

१. 'कृविवाजिमिखादिसाध्युश्रूभ्य उण्' इत्यशुद्धः पाठो ह. ।

२. इतोऽग्रे त्र्युत्तरशतसूत्रपर्यन्तं पाठो हस्तलेखे नोपलभ्यते ।

३. 'यावद्वे च' इत्यशुद्धपाठो ह. ।

४. 'करोति सत्यान्यपि' इति ह. ।

कर्त्ता । तॄ प्लवनतरणयोः भ्वा० । तरतीति तत्रुः—पतङ्गः । कर्त्ता । पॄ पालनपूरणयोः क्र्या०। पृणातीति पप्रुः—चन्द्रः, समुद्रश्च । कर्त्ता । पूर्यते पूर्णमास्यामिति पप्रुः[1]। कर्म ॥

## पॄभिदिव्यधि[गृधि]हृषिभ्यः ॥१०८॥

एभ्यः कुः स्यात् । पॄ पालनपूरणयोः क्र्या० । पृणाति पूर्यते वा पुरुः—विस्तीर्णः, लोकश्च । कर्त्ता कर्म । भिदिर् विदारणे रौ० । भिनत्ति भिदुः—वज्रम् । कर्त्ता । व्यध ताडने दै० । विध्यतीति विधुः—विधुनामायुधः, शशिवाय्वग्नयो वा, विष्णुश्च । गृधु अभिकाङ्क्षायां दै० । गृध्यतीति गृधुः—अभिलाषः । कर्त्ता । हृष तुष्टौ[2] । हृष्यतीति हृषुः—हर्षणः, सूर्याग्निशशिनश्च ॥

## कृग्रोरुच्च[3] ॥१०९॥

आभ्यां कुः[4] स्यात् [उकारश्चान्तादेशः]। डुकृञ् करणे । करोति धर्म[विजय]-यशांसि कुरुः—राजर्षिः । कर्त्ता । गॄ निगरणे तौ०[5], गॄ शब्दे क्र्या० । गिरति गृणाति वा स्वानर्थानिति गुरुः—आचार्यः,पूज्यो जनश्च । कर्त्ता ॥

## अपदुः[सु]षु स्थः ॥११०॥

एषूपपदेषु स्था इत्येतस्माद् धातोः कुः स्यात् । ष्ठा गतिनिवृत्तौ । [अपतिष्ठतीति अपष्ठुः । दुस्तिष्ठतीति दुष्ठुः] । सुतिष्ठतीति सुष्ठुः । [कर्त्ता] भावेऽपि ॥

## रपेरिच्चोपधायाः ॥१११॥

रपेः कुः स्याद् इच्चोपधायाः । रप व्यक्तायां वाचि । रपतीति रिपुः—वैरी । कर्त्ता ॥

## अर्जिदृशिकम्यमिपंसिबाधामृजिपशितुग्बुग्दीर्घहकाराश्च ॥११२॥

एभ्यः कुः स्याद् यथासंख्यं ऋजिपशितुक्[बुक्]दीर्घहकाराश्च इत्येत आदेशाः स्युः । अर्ज अर्जने[6] भ्वा० ण्यन्तः । अर्जयति धर्मशीलयशांसि[7] ऋजुः—आर्जवयुक्तः ।

---

१. अन्यत्र 'ततिरुः······पपुरुः······पपुरुः' इत्युपलभ्यते ।

२. 'हृष्टौ' इति ह. । ३. 'कृग्रोरुः' इति ह. ।

४. 'उः' इति ह. । अग्रिमसूत्रे 'कुः' इत्येवानुवर्त्यते ।

५. 'गॄन् गरणे भ्वा०' इति ह. ।

६. इतोऽग्रे हस्तलेखे त्र्युत्तरशतसूत्रवृत्त्यं शाद् (दै० । जायते तदिति जतु······) आरभ्यात्र यावत् पाठः किञ्चिद् भेदेन पुनः पठ्यते ।

७. 'यशांसि धर्मशीलम्' इति ह. ।

कर्त्ता। दृशिर् प्रेक्षणे भ्वा०। पश्यतीति **पशुः**—मन्त्रबाह्यो जनः। कर्त्ता। कमु कान्तौ भ्वा० प्रकृत्यन्तरं, ण्यन्तो वा। कामयते काम्यते **कन्तुः**—कामी। [कर्त्ता] कर्म। अम गत्यादिषु भ्वा०। अमतीति **अम्बु**—नीरम्। कर्त्ता। अम्यते वा **अम्बुः**। कर्म। पंसिः सौत्रो धातुः। पंस्यते वासावल्पेनापि वायुनेति **पांसुः**—रेणुः। कर्म। बाधृ विलोडने भ्वा०। बाधते परानिति **बाहुः**—शरीराङ्गम्। कर्त्ता[1]॥

## प्रथिम्रदिभ्रस्जिभ्यः सम्प्रसारणं सलोपश्च ॥११३॥

एभ्यः कुः, सम्प्रसारणं, यथासम्भवं[2] सलोपश्च। प्रथ प्रथने[3] भ्वा०। प्रथतेऽसाविति **पृथुः**—राजा। कर्त्ता। प्रथनं वा **पृथुः**—विस्तीर्णं वा। भावः। म्रद मर्दने भ्वा०। म्रद्यतेऽसाविति **मृदुः**—अकठिनः। कर्म। भ्रस्ज पाके। भृज्जतेऽसावुत्पन्न इति **भृगुः**—ब्रह्मणः सुतः। न्यङ्क्वादित्वात् कुत्वम्॥

## लङ्घिबंह्योर्नलोपश्च ॥११४॥

आभ्यां कुर्नलोपश्च। लघि गत्यर्थः। लङ्घते वा लङ्घ्यते बालैः **लघुः**—गौरववर्जितः। कर्म। बहि वृद्धौ। बंहत इति **बहुः**—प्रभूतः। कर्त्ता। बंहनं **बहु**। भावः॥

## ऊर्णोतेर्णुलोपश्च[4] ॥११५॥

ऊर्णोतेः कुर्णुलोपश्च। ऊर्णुञ् आच्छादने अ०। ऊर्णोति **ऊरुः**—शरीराङ्गम्। कर्त्ता। ऊर्णूयते वा **ऊरुः**। कर्म॥

## महति ह्रस्वश्च ॥११६॥

महत्यर्थे अस्यैव कुः स्यात् [णुलोपश्च भवति ह्रस्वश्च]। ऊर्णोति ऊर्णूयते वा **उरुः**—महान्॥

## श्लिषः कश्च ॥११७॥

श्लिषः कुः स्यात् कश्चान्तादेशः। श्लिष आलिङ्गने दि०। श्लिष्यतीति **श्लिकुः**—सेवकः। कर्त्ता॥

## अङ्परयोः खनिशृभ्यां डिच्च ॥११८॥

---

१. 'कर्म कर्त्ता च' इति ह.।

२. 'यथासंख्यम्' इति ह.।

३. अन्यत्र 'प्रथ प्रख्याने' इत्युपलभ्यते। 'प्रथने' इत्येवार्थो युक्तः प्रतिभाति। 'प्रथनात् पृथिवी', 'पुरोडाशं प्रथयति' इत्यादिप्रयोगदर्शनात्।

४. 'ऊर्णोर्णुलोपश्च' इति ह.।

आङ्परयोरुपपदयोर्यथासङ्ख्यमाभ्यां कुः स्यात् डिच्च। खनु विदारणे[1] भ्वा॰ आङ्पूर्वः। आखनतीति **आखुः**। शॄ हिंसायां क्र्या॰ परशब्दपूर्वः। परान् शृणातीति **परशुः**—आयुधम्। कर्त्ता॥

## हरिमितयोर्द्रुवः॥११६॥

हरिमितशब्दयोरुपपदयोर्द्रुं इत्येतस्मात् कुः स्यात् डिच्च। द्रु गतौ भ्वा॰ हरिशब्दपूर्वः। हरिभिर्द्रूयत इति **हरिद्रुः**—वृक्षः। कर्म। हरयोऽस्मिन् वा द्रवन्तीति **हरिद्रुः**। अधिकरणम्। मितशब्दपूर्वः। मितं द्रवतीति **मितद्रुः**—समुद्रः। कर्त्ता।

बहुलवचनादन्यत्रापि कुः प्रत्ययो दृश्यते। शतधा द्रवतीति **शतद्रुः**—नदः, ह्रदः॥

## खरुशङ्कुपीयुनीलङ्गुलिगु[2]॥१२०॥

एते शब्दा निपात्यन्ते कुप्रत्ययान्ताः। खनु अवदारणे भ्वा॰। अस्य रेफो निपात्यते। खनतीति **खरुः**। कर्त्ता। खोर्ऋ गतिप्रतिघाते[3] भ्वा॰। अस्योपधाया अत्वं निपात्यते। खोरति **खरुः**। कर्त्ता[4]। शकि शङ्कायाम्। शङ्कतेऽस्माज्जन इति **शङ्कुः**—बाणः, कीलालपो वा। अपादानम्। शक्लृ शक्तौ स्वा॰। अस्य नुमागमो निपात्यते। शक्यतेऽनेन खनितुमिति **शङ्कुः**—कुक्कुरो मूर्खश्च। पा पाने। अस्य ईयत्वं निपात्यते[5]। पिबति तेज इति **पीयुः**—सुवर्णम्। कर्त्ता। गम्लृ गतौ भ्वा॰। अस्य नीलशब्द उपपदे टिलोपो निपात्यत उपपदस्य नुमागमः। [नीलं गच्छतीति] **नीलङ्गुः**—कृमिजातिः शृगालो वा। लगे सङ्गे भ्वा॰। अस्योपधाया इत्वं निपात्यते। श्लिषेर्वा शकारलोपो निपात्यते गश्चान्तादेशः। लगतीति **लिगुः**—मूर्खः। श्लिष आलिङ्गने दि॰। श्लिष्यतीति वा **लिगुः**। कर्त्ता॥

## मृगय्वादयश्च॥१२१॥

मृगयु इत्येवमादयः शब्दा निपात्यन्ते कुप्रत्ययान्ताः। या प्रापणे अ॰ [मृगशब्द उपपदे]। मृगं यातीति **मृगयुः**—लुब्धः। कर्त्ता। अस्यैव [अश्मानं] यातीति **अश्मयुः**—जिह्मः। कर्त्ता। अस्यैव भूशब्द उपपदे प्रत्ययस्य आयुजादेशो धातुलोपो रुगागमो

---

१. 'अवदारणे' इत्यन्यत्र पठ्यते।

२. 'रांकुरुशंकुपीयुलालीलगुलिगुलिवर्गः' इति भ्रष्टपाठो ह.।

३. 'गर्वप्रतीघाते' इति ह.।

४. 'खोर्ऋ·········कर्त्ता' इति पाठः 'कुक्कुरो मूर्खश्च' इत्यस्याग्रे स्थाने पठितः। अत्र उपयुक्तस्थाने धृतः।

५. 'ईत्वं निपात्यते युडागमश्च' इत्यन्यत्रोपलभ्यते।

निपात्यते ह्रस्वत्वमुपपदस्य । भुवं यातीति **भुरण्युः**—अग्निः । कर्त्ता । अस्यैव चरशब्द उपपदे [प्रत्ययस्य] अण्युजादेशो निपात्यते धातुलोप उपपदान्तलोपश्च । चरं यातीति **चरण्युः**—वायुः । कर्त्ता ॥

**सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् ॥१२२॥**

एभ्यस्तुन् स्यात् । षिञ् बन्धने सौ० । सिन्वन्ति तमिति **सेतुः**—नदीसंक्रमः । कर्म । तनु विस्तारे । तन्यत इति **तन्तुः**—सूत्रम् । कर्म । गम्लृ गतौ भौ० । गच्छतीति **गन्तुः**—पथिकः । कर्त्ता । मसी परिणामे दै० । मस्यतेऽनेनेदमिति **मस्तु**—दध्यवयवः । करणम् । षच सेचने भौ० । सच्यन्तेऽमीभिः प्राणिन इति **सक्तवः**—यवविकाराः । करणम् । अव रक्षणादिषु । अवतीति **ओतुः**—मार्जारः । कर्त्ता । बाहुलकत्वादूठ् क्वचिद् भवति । डुधाञ् धारणपोषणयोः जौ० । दधातीत्यर्थं धीयते वाऽस्मिन्नर्थमिति **धातुः**—शब्दप्रकृतिः,[1] पर्वतनिस्रावो वा । कर्त्ता अधिकरणम् । क्रुश आह्वाने रोदने च । क्रोशत्यत्यर्थमिति **क्रोष्टा**—शृगालः । कर्त्ता ॥

**[पः किच्च ॥१२३॥]**

पा इत्येतस्माद् धातोस्तुन् स्यात् किच्च । पा पाने भौ०, पा रक्षणे आ०, पै ओवै शोषणे भौ० । पिबति पाति पायति वा **पातुः**—आदित्यः, चक्षुश्च । कर्त्ता ॥

**अर्त्तेश्च [तुः] ॥१२४॥**

अर्त्तेस्तुः स्यात् किच्च । ऋ गतौ भौ० । ऋच्छत्यर्यते वा **ऋतुः**—कालो ग्रीष्मादिः, स्त्रीणां च पुष्पकालः । कर्त्ता कर्म च ॥

**कमिमनिजनिगापायाहिभ्यश्च ॥१२५॥**

एभ्यस्तुः स्यात् । कमु कान्तौ भौ० णिजन्तः[2] । कामयते काम्यते वा **कन्तुः**—कामी । कर्त्ता कर्म च । मन ज्ञाने दै०, मनु अवबोधने । मन्यते मनुते वा **मन्तुः**—कविपर्यायनाम । कर्त्ता । जनी प्रादुर्भावे, जन जनने जौ० । जायते [जजन्ति] जन्यते वा **जन्तुः**—प्राणी । कर्त्ता कर्म च । गै शब्दे भौ० । गायतीति **गातुः**—गायकः । कर्त्ता । पै शोषणे भौ०, पा रक्षणे आ० । पायति [पीयते] पातीति वा **पातुः**—रक्षिता । कर्त्ता कर्म । या प्रापणे आ० । यातीति **यातुः**—पावकः कर्त्ता । हि गतौ सौ० । हिनोतीति **हेतुः**—निमित्तम् । कर्त्ता । हीयते वाऽनेनार्थ इति **हेतुः** । करणम् ॥

**चायः की च ॥१२६॥**

---

१. 'शब्दः प्रवृत्तिः' इति ह. । २. 'णिजन्तः' इत्यधिकं ह. ।

चायस्तुः स्यात् की चास्यादेशः। चायृ पूजानिशामनयोः भ्वा०। चाय्यत इति केतुः—ध्वजः, ग्रहश्च। कर्म॥

### आप्नोतेर्ह्रस्वश्च ॥१२७॥

आप्नोतेस्तुः स्याद् ह्रस्वश्च। आप्लृ व्याप्तौ। आप्नोतीति अप्तुः—यज्ञियोऽग्निः। कर्त्ता।

बहुलवचनादन्यतोऽपि भवति। अम रोगे भ्वा०[1]। अमतीति अन्तुः—रक्षिता। कर्त्ता॥

### वसेस्तुन् ॥१२८॥

वसेस्तुन् स्यात्। वस निवासे। वसन्त्यस्मिन्नर्थविशेषा इति वस्तु—प्रकारविशेषः। अधिकरणम्॥

### अगारे णिच्च ॥१२९॥

अगारे वाच्येऽस्यैव तुन् स्याद् णिच्च। वस निवासे भ्वा०। वसन्ति तस्मिन् देवाः वास्तु—गृहम्। अधिकरणम्॥

### कृञः कतुः ॥१३१॥

कृञ् इत्येतस्मात् कतुः स्यात्। डुकृञ् करणे ता०। क्रियतेऽसौ धर्मार्थिभिरिति क्रतुः—यज्ञः। कर्म॥

### एधिवह्योश्चतुः ॥१३१॥

आभ्यां चतुः स्यात्। एध वृद्धौ। एधत इति एधतुः—पुरुषः। कर्त्ता। वह प्रापणे भ्वा०। वहतीति वहतुः—अग्निः, अनड्वांश्च। कर्त्ता॥

### जीवेरातुः ॥१३२॥

अस्मादातुः स्यात्। जीव प्राणधारणे भ्वा०। जीवन्त्यनेन प्राणिन इति जीवातुः—जीवनौषधम्, अन्नं वा। करणम्॥

### कृहृभ्यामेणुः ॥१३३॥

आभ्यामेणुः स्यात्। डुकृञ् करणे ता०, कृञ् हिंसायां सौ०, कृञ् करणे भ्वा०। करोति कृणोति करति वा करेणुः—करिणी। कर्त्ता। हृञ् हरणे भ्वा०, हृ प्रसह्यकरणे जौ०। हरति जिहर्ति वा हरेणुः—गन्धद्रव्यम्। कर्त्ता।

---

१. 'अम गतौ' इत्यपपाठो ह.।

बाहुलकत्वादन्यतोऽपि भवति । गमेण्वादीनां प्रसिद्धयर्थं कृतणत्वस्य [प्रत्ययस्य] निर्देशः । गम्लृ सृप्लृ गतौ भौ० । गच्छतीति **गमेणुः**—पन्थाः, अनादितश्चायं पथि वर्तमानः । कर्त्ता । यज देवपूजासंगतिकरणदानेषु भौ० । यजतीति **यजेणुः**—याजकः, ऋत्विक् । कर्त्ता ॥

**यजिमनिशुधिदसिजनिभ्यो युच् ॥१३४॥**

एभ्यो युच् स्यात् । यज देवपूजादिषु । यजतीति **यज्युः**—अध्वर्युः । कर्त्ता । मन ज्ञाने दै०, मनु अवबोधने ता० । मन्यते मनुते वा **मन्युः**—अन्तर्गतः कोपः । कर्त्ता । शुध शुद्धौ दै०[1] । शुध्यतीति **शुध्युः**—अग्निः । कर्त्ता । दसु उपक्षये दै० । दस्यतीति **दस्युः**—तस्करः । कर्त्ता । जनी प्रादुर्भावे दै० । जायते **जन्युः**—भूतग्रामः । कर्त्ता ।

बाहुलकत्वादादेशानित्यत्वाच्च योरनादेशो न भवति[2] ॥

**भुजिमृङ्भ्यां युक्त्युकौ ॥१३५॥**

आभ्यामेतौ यथासंख्यं स्तः । भुज पालनाभ्यवहारयोः रौ० । भोजनं **भुज्युः**—भोगः[3] । भावः । मृङ् प्राणत्यागे तौ० । मरणं **मृत्युः**—प्राणवियोगः । भावः ॥

**[सर्त्तेरयुः ॥१३६॥]**

सर्त्तेरयुः स्यात् । सृ गतौ० भौ० जौ० । सरति सिसर्त्ति वा **सरयुः**—नदी, वायुर्वा । कर्त्ता ॥

**कण्युच् क्षिपेश्च ॥१३७॥**

क्षिपेः कण्युच् स्यात् । क्षिप प्रेरणे । क्षिपति क्षिप्यते वा **क्षिपण्युः**—वायुः ॥

**भुवश्च ॥१३८॥**

भू इत्येतस्मात् कण्युच् स्यात् । भवतीति **भुवण्युः**—ईश्वरः । कर्त्ता ॥

**चनुक् नदेश्च ॥१३९॥**

क्षिपिनदिभ्यां चनुक् स्यात् । णद अव्यक्ते शब्दे भौ० । नदति **नदनुः**—मेघः, सिंहो वा । कर्त्ता । क्षिप प्रेरणे तौ० । क्षिपति क्षिप्यते वा **क्षिपणुः**[4]—बाहुः । कर्त्ता कर्म ॥

---

१. 'भौ०' इति ह. ।

२. 'बाहुलकत्वादेशान्नित्यमात्वमनयोर्भवति' इत्यपपाठो ह. ।

३. 'भागः' इति ह. ।

४. 'चरुन्नदेश्च ।......चरुद् स्यात् ।......नदरुः......क्षिपतुः' इति विसङ्गत-पाठ उपलभ्यते ह. ।

**स्तनिहृषिपुषिगदिमदिघुषिगन्धिमडिजनिनदिभ्यो णेरित्नुच् ॥१४०॥**

एभ्य इत्नुच् स्यात् णेः—ण्यन्तेभ्यः। स्तन शब्दे। ण्यन्तः। स्तनयतीति **स्तनयित्नुः**—मेघः। कर्त्ता। हृष तुष्टौ। सर्वे एव ण्यन्ताः। हर्षयतीति **हर्षयित्नुः**—आनन्दः। कर्त्ता। पुष पुष्टौ दि० क्र्या०। पोषयतीति **पोषयित्नुः**—भर्त्ता। कर्त्ता। गद व्यक्तायां वाचि भ्वा०। गदयतीति **गदयित्नुः**—भ्रमरः, कामश्च। कर्त्ता। मदी हर्षे दि०। मदयतीति **मदयित्नुः**—मदिरा। कर्त्ता। घुषिर् अविशब्दने भ्वा०। घोषयतीति **घोषयित्नुः**—शब्दः। कर्त्ता। गन्ध सेचने। गन्धयतीति **गन्धयित्नुः**—वलाहकः। कर्त्ता। मडि भूषायां भ्वा०। मण्डयतीति **मण्डयित्नुः**—मण्डयिता। कर्त्ता। जनी प्रादुर्भावे दि०। जनयतीति **जनयित्नुः**—पिता। कर्त्ता। टुनदि समृद्धौ। नन्दयतीति **नन्दयित्नुः**—प्रमुदितः। कर्त्ता॥

**कृहनिभ्यां क्नुः ॥१४१॥**

आभ्यां क्नुः स्यात्। डुकृञ् [करणे ता०, कृञ्] हिंसायां स्वा०, कृञ् करणे[1] भ्वा०। करोति कृणोति करतीति वा **कृणुः**—कारुः। कर्त्ता। हन हिंसागत्योः अ०। हन्त्याहारमिति **हनुः**—वक्त्रैकदेशः। कर्त्ता। बाहुलकत्वान्नलोपः॥

**गमेः सन्वच्च ॥१४२॥**

गमेः क्नुः स्यात् सन्वच्चास्य कार्यं भवति। गम्लृ गतौ भ्वा०। गच्छत्याश्विति **जिगनुः**—प्राणः, मीनो वा। कर्त्ता॥

**दाभाभ्यां नुः ॥१४३॥**

आभ्यां नुः स्यात्। डुदाञ् दाने जु०। दीयत इति **दानुः**—रक्षणीयं[2] धनम्। कर्म। भा दीप्तौ अ०। भातीति **भानुः**—आदित्यः। कर्त्ता।

बहुलवचनादुपपदेऽपि नुप्रत्ययो भवति। चित्रं भातीति **चित्रभानुः**। कर्त्ता। स्वर्भातीति **स्वर्भानुः**—राहुः। कर्त्ता। विश्वं भातीति **विश्वभानुः**—आदित्यः। कर्त्ता॥

**वचेर्गश्च ॥१४४॥**

वचेर्नुः स्याद् गश्चान्तादेशः। वच परिभाषणे अ०, [ब्रूञ् व्यक्तायां वाचि अ०]। वक्ति ब्रवीति शोभनमिति **वग्नुः**—वाचकः॥

---

१. 'कृञ् कृतौ' इति ह.। २. अन्यत्र 'दक्षिणार्थम्' इत्युपलभ्यते।

## धेट इच्च ॥१४५॥

धेटो नुः स्याद् इच्चान्तादेशः । धेट् पाने भ्वौ० । धयति तामिति **धेनुः**—प्रत्यग्रप्रसूता गौः । कर्म ॥

## षूङः किच्च[1] ॥१४६॥

षूङो[2] नुः स्यात् किच्च । षूङ्[2] प्राणिगर्भविमोचने अ० । सूयत इति **सूनुः** ॥

## स्थो णुः ॥१४७॥

तिष्ठतेर्णुः स्यात् । ष्ठा गतिनिवृत्तौ भ्वौ० । तिष्ठतीति **स्थाणुः**—ईश्वरः, अचलद्रव्यं च । कर्त्ता ॥

## अजिवृरीभ्यो निच्च ॥१४८॥

एभ्यो णुः स्यान्निच्च । अज गतिक्षेपणयोः भ्वौ० । अजतीति [वीयते वा] **वेणुः**[3] । कर्त्ता कर्म च । वृञ् वरणे । वृणोति व्रियते वा **वर्णुः**—देशविशेषः । कर्त्ता कर्म च । रीङ् स्रवणे दै०, री गतिक्षेपणयोः क्र्यै० । रीयते रिणाति वा **रेणुः**—पांसुः । कर्त्ता कर्म च ॥

## विषेः किच्च ॥१४९॥

[विषेर्णुः स्यात् किच्च निच्च ।] विष्लृ व्याप्तौ जौ० । वेवेष्टि **विष्णुः** । कर्त्ता ॥

## कुडि[4]कुषिभ्यां काकुः ॥१५०॥

आभ्यां काकुः स्यात् । कुड इति सौत्रो धातुः । कुडतीति **कुडाकुः**—दुर्गतः । कुष निष्कर्षे । कुष्णातीति **कुषाकुः**—मूषकः । कर्त्ता ॥

## सर्त्तेर्मुक् च ॥१५१॥

सर्त्तेः काकुः मुक् चागमः स्यात् । सृ गतौ । धावत्यत्यर्थमिति **सृमाकुः**—मृगजातिः । कर्त्ता ॥

## पर्देर्नित् सम्प्रसारणमलोपश्च ॥१५२॥

पर्देः काकुः स्यात् नित्संज्ञकः सम्प्रसारणं चास्य धातोरलोपश्च । पर्द कुत्सिते

---

१. 'क्षत्रः कित्' इत्यपपाठो ह. ।

२. 'षूञ्' इति ह. ।

३. 'अज्णुः' इत्यपपाठो ह. । ४. 'कुण्डि···कुडि···कुण्डतीति' इति ह. ।

शब्दे[1] भौ० । पर्दत इति पृदाकुः—सर्पः, कुत्सितशब्दकृच्च[2] । कर्त्ता ॥

**ह्रियः कू रश्च लो वा ॥१५३॥**

ह्रियः कुः रेफस्य लो वा स्यात् । ह्री लज्जायां जौ० । जिह्रेति ह्रेकुः, ह्लेकुः ॥

**इषेः क्सुः ॥१५४॥**

इषेः क्सुः स्यात् । इषु इच्छायां तौ० । इच्छति तम् इक्षुः—गुडादिप्रकृतिः । कर्म ॥

**अर्त्तेररुः ॥१५५॥**

अर्त्तेररुः स्यात् । ऋच्छत्यर्यते वा अररुः—आयुधम्[3] । कर्त्ता कर्म ॥

**कुटः कित् ॥१५६॥**

अस्मादरुः स्यात् किच्च । कुट कौटिल्ये तौ० । कुटतीति कुटरुः—मर्कटः । कर्त्ता ॥

**मापो रुरी च ॥१५७॥**

मापाभ्यां रुः स्याद् ई चान्तादेशः । मा माने आ०, माङ् शब्दे जौ० । माति [मिमीते] मीयते वा मेरुः—सुरगिरिः । [कर्त्ता] कर्म । पा रक्षणे आ०, पा पाने भौ० । पाति पिबति पीयते वा पेरुः—वायुः,आदित्यो वा । [कर्त्ता] कर्म ॥

**जत्र्वादयश्च[4] ॥१५८॥**

एते शब्दा निपात्यन्ते रुप्रत्यये निरूढाः । जनी प्रादुर्भावे, जन जनने जौ० । अस्य तकारान्तता निपात्यते । जायते जजन्ति जन्यते वा जत्रुः—प्राणिग्रीवाधःप्रदेशः[5] । कर्त्ता कर्म । [शॄ हिंसायां क्र्यै० । शृणातेरकारोऽन्त्यस्य निपात्यते तकारश्चागमः । शृणातीति शत्रुः—अरिः । कर्त्ता ।] अस्यैव गकारागमो निपात्यते । शृणातीति शग्रुः[6] —वृक्षः । कर्त्ता । अर्त्तेस्तान्तत्वं निपात्यते । ऋच्छति इयर्त्तीति[7] अत्रुः—क्षुद्रजन्तुः । कर्त्ता । हन्तेस्तकारश्च निपात्यते । हन्तीति हत्रुः—हिंस्रः । कर्त्ता ॥

**रुशादिभ्यां क्रुन्[8] ॥१५९॥**

---

१. 'पर्दङ् पाने । ऋगे ।' इति भ्रष्टपाठो ह. ।

२. 'कुत्सितशब्दश्च' इति ह. । ३. 'आररुः । आररुयुधम्' इत्यपपाठो ह. ।

४. 'जनन्यादयश्च' इति ह. । ५. 'प्राणीग्रीवाधा । प्रदेशश्च' इति ह. ।

६. अन्यत्र इकारादेशं विधाय 'शिग्रुः' इति पठ्यते ।

७. 'अत्तीति' इत्यपपाठो ह. । ८. 'रुन्' इति ह. ।

आभ्यां क्रुन्[1] स्यात। रु शब्दे। रौति रूयते वा **रुरुः**—मृगः। कर्त्ता कर्म च। शद्लृ शातने। शीयते **शत्रुः**। जत्वादित्वादेव सिद्धे पुनर्वचनं नित्स्वरार्थम् ॥

**तनोतेर्डउः सन्वच्च[2] ॥१६०॥**

तनोतेर्डउः स्यात् सन्वच्च। तनु विस्तारे। तनोति पिष्टद्रव्याणि **तितउः**—चालनी। कर्त्ता। पृथक् प्रत्ययसामर्थ्याद् आद्गुणो न ॥

**श्मनि श्रयतेर्डुः ॥१६१॥**

श्मन्युपपदे श्रयतेर्डुः स्यात्। श्रिञ् सेवायाम्। श्मनि श्रयत इति **श्मश्रुः**—पुरु[ष]मुखजो रोमसंघातः। कर्त्ता ॥

**अश्र्वादयश्च ॥१६२॥**

अश्र्वादयः शब्दा निपात्यन्ते डुप्रत्यये निरूढाः। श्रिञ् सेवायां भ्वा० नञ्-पूर्वः। न श्रयति श्रीयते वा सम्बन्धिभिरिति **अश्रु**—शोकानन्दसमुत्पन्नं नेत्रजलम्। [कर्त्ता] कर्म। अशू व्याप्तौ, अश भोजने क्र्या०। अश्नुते चक्षुरश्नाति वा[3] **अश्रु**। अनयोरुगागमः। कर्त्ता ॥

[॥ इत्युदन्ताः ॥]

**कृषिचमितनिधनिसर्जि[4]खर्जिभ्य ऊः ॥१६३॥**

एभ्यो धातुभ्य ऊः। कृष विलेखने भ्वा० तु०। कर्षति कृषति कृष्यते वा **कर्षूः**—गोमयाग्निसंघातः। कर्त्ता कर्म च। चमु अदने[5] भ्वा०। चमति [परान्] चम्यते परैः सा **चमूः**—सेना। कर्त्ता कर्म च। तनु विस्तारे। तनोति तन्यते वा **तनूः**—शरीरम्। कर्त्ता कर्म च। धन धान्ये जु०। दधन्तीति[6] **धनूः**—धान्यनिचयः, स्त्री, वाराही[7]। कर्त्ता। षर्ज अर्जने भ्वा०। सर्जतीति **सर्जूः**। खर्ज व्यथने भ्वा०। खर्जतीति **खर्जूः**—कण्डूः, विद्युत्। कर्त्ता ॥

**मृजेर्गुणश्च ॥१६४॥**

मृजेरूः स्याद् गुणश्च। मृजूष् शुद्धौ अ०। मार्जनं **मर्जूः**—शुद्धिः। भावः[8]। गुणवचनं वृद्धिप्रतिषेधार्थम् ॥

---

१. 'रुन्' इति ह.। २. 'सन्वच्च तनोतेर्डउः' इति ह.।
३. 'अश्नुते अश्नुति चक्षुर्वा' इति ह.।
४. 'सनि' इत्यपपाठो ह.। ५. 'अदमने' इत्यशुद्धो ह.।
६. 'धनतीति' इति ह.। ७. 'धान्यनिचयः, अवयवी स्त्री वराहः' इति ह.।
८. 'मर्जूः। आदिभावः' इति ह.।

वहेर्धश्च ॥१६५॥

अस्माद्रूः स्याद् धश्चान्तादेशः । वह प्रापणे भ्वौ० । वहतीति वधूः—कर्त्ता ॥

कषेश्छश्च ॥१६६॥

अस्माद्रूः स्यात् छकारान्तादेशश्च । कष हिंसायां भ्वौ० । कषति शरीरमिति कच्छूः—कुष्ठविकारः । कर्त्ता ॥

णिच्च कसिपद्यर्त्तेः ॥१६७॥

एभ्य ऊः स्याद् णिच्च । कस गतौ । कसतीति कासूः । कर्त्ता । पद गतौ । पद्यत इति पादूः—पादुका । कर्त्ता । ऋ गतौ । ऋच्छत्यर्यते [वा] आरूः—फलवृक्षजातिः । कर्त्ता कर्म च ॥

अणो डश्च ॥१६८॥

अस्माद्रूः स्याद् णिच्च डश्चान्तादेशः । अण शब्दार्थः[1] । अण्यतेऽनेनोदकमिति आडूः—भृङ्गारः । करणम् ॥

नञि लम्बेर्नलोपश्च ॥१६९॥

नञ्युपपदे लम्बेरूः स्याद् णिच्च नलोपश्च । लबि अवस्रंसने भ्वौ० । न लम्बत इति अलाबूः—तुम्बी । कर्त्ता ॥

के शृ एरङ् चास्य ॥१७०॥

क उपपदे शृधातोरूः प्रत्ययः स्याद् एरङ् चास्य । शॄ हिंसायां क्र्यौ० । कं शृणातीति कशेरूः—वीरुत्प्रकारः[2] । कर्त्ता ॥

त्रो द्रुट्[3] च ॥१७१॥

तॄधातोरूः स्याद् द्रुट्[3] चागमः। तॄ प्लवनतरणयोः भ्वौ० । तरति तीर्यते वा तद्रूः[4]—नौका[5] । कर्त्ता करणम् ॥

दरिद्रातेर्यालोपश्च ॥१७२॥

दरिद्राधातोरूः स्याद् इकाराकारयोर्लोपश्च । दरिद्रा दुर्गतौ अ्दा० । दरिद्रयतेऽनया शरीरमिति दद्रूः—कुष्ठविकारः । करणम् ॥

---

१. 'अणु शब्दार्थः । अस्माद्रूः·········।' इति ह. ।
२. 'चारुः प्रकारः' इति ह. ।
३. 'दुक्' इति ह. ।
४. 'तरूः' इत्यशुद्धो ह. ।
५. 'नौ०' इति ह. ।

## नृतिशृध्यो कूः ॥१७३॥

आभ्यां कूः स्यात् । नृती गात्रविक्षेपे । नृत्यतीति **नृतूः**—नर्तकः, कृमिजातिर्वा । कर्त्ता । शृधु उन्दे, शृधु कुत्सायां भौ०[1] । शर्धति शर्धते वा **शृधूः**—बुद्धिः । कर्त्ता ॥

## ऋतेरम् च[2] ॥१७४॥

ऋतेः कूः[3] स्याद् अम्[4] चागमः । ऋतिः सौत्रो धातुः । ऋतीयत इति **रतूः**—नदी, सत्यवाक् च । कर्त्ता ॥

## अन्दूदृन्भूजम्बूकफेलूकर्कन्धूदिधिषूः ॥१७५॥

एते शब्दाः कूप्रत्ययान्ता निपात्यन्ते । अम इत्यादिषु भौ० । अस्य दुगागमो निपात्यते । अमति अम्यते वानयेति **अन्दूः**—बुद्धिः । कर्त्ता करणम् । दृभी ग्रन्थे । अस्य नुमागमो निपात्यते, निपातनाच्चाननुस्वारः । दृभतीति[5] **दृन्भूः**—कथकः । कर्त्ता । दर्भणं वा **दृन्भूः** । भावः । जनी प्रादुर्भावे । अस्य बुगागमो निपात्यते । जायत इति **जम्बूः**—वृक्षः । कर्त्ता । फल निष्पत्तौ भौ०,ञिफला विशरणे । अनयोः किंशब्द उपपदे उपधाया इत्वं गुणश्च निपात्यते कादेशश्च किमः[6] । किञ्चित् किंविधां वा[7] फलतीति **कफेलूः**—श्लेष्मातकः, यवलाजा, मधुशर्कश्च । कर्त्ता । डुधाञ् धारणपोषणयोः जौ० । अस्य कर्कशब्द उपपदे आकारलोपो निपात्यते, [उपपदस्य च नुक्] । कर्कं दधातीति **कर्कन्धूः**— बदरवृक्षः । कर्त्ता । धिष शब्दे । अस्य द्विर्वचनं निपात्यते । देधेष्टीति **दिधिषूः** । कर्म ॥

## भ्रमेश्च डूः ॥१७६॥

[भ्रमे] डूः स्यात् चाद् गमेश्च । भ्रमु चलने भौ०, भ्रमु अनवस्थाने दै० । भ्रमति भ्राम्यतीति वा[8] **भ्रूः**—अक्षणोरुपरि रोमराजिः । कर्त्ता । गम्लृ गतौ भौ० अग्रशब्द उपपदे । अग्रे गच्छतीति **अग्रेगूः** —पुरःसरः । कर्त्ता ॥

[॥ **इत्यूदन्ताः** ॥]

॥ इत्युणादिवृत्तौ प्रथमश्चरणः ॥

———

१. 'शृध उदे । शृधि कुश्यायां भौ०' इति ह. । २. 'ऋतश्च' इति ह. ।
३. 'ऊः' इति ह. । ४. 'अश्' इति ह. ।
५. 'दर्भतीति' इति ह. ।
६. 'अनयोः किंशब्द उपपदे एव उपधाया निपात्यते अदन्तत्वं च किमः' इति भ्रष्टपाठो ह. । ७. 'किञ्चिद्द्विधा' इति ह. । ८. 'भ्रमति भ्राम्यते' इति ह. ।

# [॥ द्वितीयः पादः ॥]

**तृन्तृचौ[1] शंसिक्षदादिभ्यः संज्ञायां चानिटौ ॥१॥**

तृन् च तृच् च तृन्तृचौ तौ प्रत्ययौ भवतः शसेः क्षदादिभ्यः क्षदप्रकारेभ्यश्च संज्ञायां गम्यमानायामनिटौ भवतः। शंसु स्तुतौ भ्वा०। शंसतीति **शंस्ता—यज्ञकर्मवित्**। कर्त्ता। [क्षद गतौ भ्वा०।] क्षदतीति **क्षत्ता**—विदुरः[2]। कर्त्ता। शासु अनुशिष्टौ प्रपूर्वः। प्रशास्तीति **प्रशास्ता**—राजा, गुरुर्वा॥

**बहुलमन्यत्रापि ॥२॥**

अन्येभ्योऽपि तृन्तृचौ स्तः, अनिटौ च संज्ञायां विषये। ष्टुञ् स्तुतौ अ०[प्रपूर्वः]। प्रस्तौतीति **प्रस्तोता**—ऋत्विक्। कर्त्ता। हृञ् हरणे भ्वा० प्रतिपूर्वः। [प्रतिहरतीति] **प्रतिहर्त्ता**। हन हिंसागत्योः अ० प्रतिपूर्वः। प्रतिहन्तीति **प्रतिहन्ता**। दृशिर् प्रेक्षणे भ्वा० उपपूर्वः। उपपश्यतीति **उपद्रष्टा**। गै शब्दे उत्पूर्वः। उद्गायतीति **उद्गाता**। हु दानादनयोः जु०। जुहोतीति **होता**। णीञ् प्रापणे उत्पूर्वः। उन्नयतीति **उन्नेता**। ऋत्विज एते[3]। कर्त्ता॥

**नप्तृनेष्टृत्वष्टृक्षत्तृ[होतृ]पोतृमातृभ्रातृजामातृपितृदुहितरः ॥३॥**

एते शब्दा निपात्यन्ते तृन्तृचोः प्रत्यययोर्निरूढाः। णीञ् प्रापणे। नयतेरीकारस्य अकारो निपात्यते पुगागमश्च। नयति नीयते वा **नप्ता**—पौत्रः। कर्त्ता [कर्म]। णीञ् प्रापणे। अस्य षुगागमो निपात्यते। **नेष्टा**—ऋत्विक् सारथी च। त्विष दीप्तौ। अस्योपधाया अत्वं निपात्यते। त्वेषतीति **त्वष्टा**—आदित्यः। कर्त्ता। क्षद गतौ भ्वा०। क्षदतीति **क्षत्ता**—विदुरः, वियोनिजः। हु दानादनयोः। [जुहोतीति **होता**—याजकः। कर्त्ता]। पूञ् पवने क्र्या०। पुनातीति **पोता**—पवित्रम्। कर्त्ता। मान पूजायां भ्वा०। [अस्य नकारलोपो निपात्यते]। मान्यत इति **माता**[4]—जननी। कर्म। भ्राजृ दीप्तौ भ्वा०। अस्य जकारलोपो[5] निपात्यते। भ्राजत इति **भ्राता**—सहजः। कर्त्ता। डुमिञ् प्रक्षेपणे स्वा०। जायाशब्दपूर्वः। अस्य आकारान्तादेशो निपात्यते जायाशब्दस्य जादेशः। जायां मिनोति **जामाता**—दुहितुः पतिः। कर्त्ता। पा रक्षणे अ०। अस्य

१. 'तृनृचौ' इत्यशुद्धो ह.। २. 'विदुरवियोनिः' इति ह.।
३. 'ऋत्विगे वा' इति ह.।
४. 'मानता' इत्यशुद्धो ह.। ५. 'अस्याकारः' इति ह.।

इत्वं निपात्यते । पातीति **पिता**—जनकः । टुदु[1] उपतापे सौ०, दुह प्रपूरणे अा० । दुनोतेरिटि कृते हुमागमो निपात्यतेऽगुणत्वं च, दुहेरिट् निपात्यतेऽगुणत्वं च । दुनोति पितरं दुःखेन, दोग्धिपितृकुलमिति **दुहिता** । कर्त्ता ॥

**सुञ्यसेर्ऋन् ॥४॥**

सुञ्युपपदेऽसेर्ऋन् स्यात् । असु क्षेपणे दै० सुञ्पूर्वः । स्वस्यति **स्वसा**—भगिनी॥

**यतेर्वृद्धिश्च ॥५॥**

यतेर्ऋन्[2] स्याद् वृद्धिश्च । यती प्रयत्ने । यतत इति[3] **याता**—पत्युर्भगिनी भ्रातृपत्नी वा । कर्त्ता ॥

**नञि च नन्देः ॥६॥**

नञि उपपदे नन्देर्ऋन् स्याद् वृद्धिश्च । टुनदि समृद्धौ [नञ्पूर्वः] । [न] नन्दतीति[4] **ननान्दा**—पत्युर्भगिनी[5] । कर्त्ता ॥

**दिवेर्ऋः[6] ॥७॥**

अस्माद् ऋः[7] स्यात् । दिवु क्रीडायाम् । दीव्यतीति **देवा**, देवरौ, देवरः ॥

**नयतेर्डिच्च ॥८॥**

नयतेर्ऋः[2] स्यात् डिच्च । णीञ्[8] [प्रापणे भौ० । नयतीति **ना**—मनुष्यः । कर्त्ता॥

**सव्ये स्थश्छन्दसि ॥९॥**

सव्यशब्द उदपदे स्था इत्येतस्माद्धातो]र्ऋः[2] स्यात् डिच्च छन्दसि विषये । ष्ठा गतिनिवृत्तौ भौ० । सव्ये तिष्ठतीति **सव्येष्ठा**—सारथिः । कर्त्ता ॥

[॥ इत्यृदन्ताः ॥]

**रातेर्डैः ॥१०॥**

रातेर्डैः स्यात् । रा दाने अा० । रान्ति पात्रेभ्यः श्रेयोऽर्थमिति **राः**—धनम् । कर्म ॥

[ ॥ इत्यैकारान्तः ॥]

---

१. 'दु' इत्येव ह. ।
२. 'यते उपन्' इत्यशुद्धो ह. ।
३. 'यततीति' इति ह. ।
४. 'नन्दयतीति' इति ह, ।
५. 'पत्युर्भगिनी वा माता' इति ह. ।
६. 'दिवेर्ऋन्' इति ह. ।
७. 'ऋन्' इति ह. ।
८. इतोऽग्रे कोष्ठान्तर्गतः पाठो नोपलभ्यते ह. ।

गमेर्डोः ॥११॥

अस्मात् डोः स्यात् । गम्लृ गतौ भ्वा० । गच्छत्यालोमभ्य उपयोगमिति गौः—बहुला । कर्त्ता ॥

वाग्दिग्भूरश्मिवज्रेषु पश्वक्षिस्वर्गवाजिषु[1] ।
नवस्वर्थेषु मेधावी गोशब्दमुपयुज्यते ॥

[॥ इत्योकारान्तः ॥]

ग्लानुदिभ्यां डौः ॥१२॥

आभ्यां डौः स्यात् । ग्लै हर्षक्षये । ग्लायतीति ग्लौः—चन्द्रमाः, व्याधियुक्तश्च । कर्त्ता । णुद प्रेरणे तौ० । नुदति नुद्यते वा नौः—प्लवः । कर्त्ता कर्म च ॥

च्विरव्ययम् ॥१३॥

च्विप्रत्ययोऽव्ययसंज्ञः स्यात् । स च 'अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः' [अ० ५।४।५०] इति । अग्लौर्ग्लौः भवतीति ग्लौ भवति, ग्लौ स्यात् । अनौर्नौः क्रियते नौ भवति, नौ स्यात् । च्विरिति किम् ? ग्लौः, ग्लावौ, ग्लावः, नौः, नावौ, नावः ।

नियमार्थमिदम् । च्विप्रत्ययान्तानामेवैजन्तानाम्, न केवलानाम् । तेन राः, रायौ, रायः, गौः, गावौ, गावः, इति सिद्धम् ॥

[॥ इत्यौकारान्ताः ॥]

॥ इत्यजन्ताः ॥

॥ इत्युणादिवृत्तौ द्वितीयः पादः ॥

———

१. '० स्वर्गरात्रिषु' इति ह. ।

# [॥ अथ तृतीयः पादः ॥]

## जीवेरातृकन् वृद्धिश्च ॥१॥

जीवेरातृकन् स्याद् वृद्धिश्च । जीव प्राणधारणे भ्वा० प्रकृत्यन्तरो ण्यन्तो वा । जीवयतीति **जैवातृकः**—चन्द्रमाः, आयुष्मान् । कर्त्ता[1] ॥

## समि कसेरुकन् ॥२॥

सम्युपपदे कसेर्धातोरुकन् । कस गतौ भ्वा० । समन्तात् कसति **सङ्कसुकः**—सुकुमारः । अपादानम्[2] ॥

## पचिणश्योर्णुकन् कनुमौ च ॥३॥

आभ्यां णुकन् स्याद् यथासंख्यं चानयोः कनुमौ चादेशागमौ स्तः[3] । डुपचष् पाके । पचतीति **पाकुकः**—सूपकारः, अध्वर्युश्च । कर्त्ता । णश अदर्शने दि० । नश्यन्त्यल्पेनापि वायुनेति **नंशुकाः**—पांशवः[4] । कर्त्ता ॥

## भियः क्रुकन् ॥४॥

ञिभी भये । अस्मात् क्रुकन् स्यात् । [बिभेतीति **भीरुकः**—कातरः । कर्त्ता ।

## क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि ॥५॥

धातोः क्वुन् स्यात्][5] शिल्पिन्यभिधेये संज्ञायां विषये,धातोरपूर्वस्यापि नास्मात् पूर्व इत्यपूर्वः, अपिशब्दात् [स]पूर्वस्यापि । शिल्पिन्यपूर्वस्य तावत्—रञ्ज रागे । रज्यते रजतीति वा **रजकः** । कर्त्ता । तक्ष त्वक्ष तनूकरणे स्वा० भ्वा० । तक्ष्णोति [तक्षतीति] वा **तक्षकः** । खनु अवदारणे । खनतीति **खनकः** । कर्त्ता । सपूर्वस्यापि—पीड अवगाहने[6] चु० तिलशब्दपूर्वः । तिलान् पीडयतीति **तिलपीडकः** । कर्त्ता । धावु गतिशुद्ध्योः[7] वस्त्रपूर्वः । वस्त्राणि धावतीति **वस्त्रधावकः** । कर्त्ता । कुट्ट छेदने इक्षुपूर्वः ।

---

१. 'जैवातृको मृगांकः । आयुष्मान् । करणम्' इति ह. ।

२. व्युत्पत्त्यनुसारमत्र 'कर्त्ता' इति युक्तः स्यात् ।

३. 'पातितु शोकन् । मौ च । आभ्यामुकन् स्यात् । यथासंख्यं चानयोः कन्मो चागमौ स्तः ।' इत्यत्यन्तभ्रष्टपाठो ह. ।

४. 'सवर्पा' इति ह. ।

५. कोष्ठान्तर्गतपाठो नोपलभ्यते ह. ।

६. 'गहने' इति ह. ।

७. 'शुद्धौ' इति ह. ।

इक्षून् कुट्टयतीति[1] **इक्षुकुट्टकः**। कर्त्ता। सर्वे एते शिल्पिवाचकाः। एवमन्येऽपि। संज्ञायां खल्वप्यपूर्वस्य—जनी प्रादुर्भावे ण्यन्तः। जनयतीति **जनकः**—पिता। कर्त्ता। क्षिप प्रेरणे तौ०। क्षिपतीति **क्षिपकः**—योद्धा। कर्त्ता। ध्रुव स्थैर्ये तौ०। ध्रुवतीति **ध्रुवकः**—स्थिरः। कर्त्ता। धूञ् कम्पने सौ०, क्र्यै०, धू विधूनने भौ०। धुनोति धुनाति धवतीति वा **धुवकः**—प्रधानम्, स्त्रीक्षिपकः। कर्त्ता। सपूर्वस्य—पा पाने भौ० आङ्पूर्वकः, कलापूर्वः। वृहत्तन्त्रात् कला आपिबतीति **कलापक**.[2]—शास्त्रम्। कर्त्ता। एवमन्येऽपि शिल्पिनि संज्ञायां च पूर्ववद् वेदितव्याः॥

## जहातेर्द्वे च ॥६॥

जहातेः क्वुन् स्याद् द्वे चास्य रूपे भवतः। ओहाक् त्यागे। जहातीति **जहकः**—कालः। कर्त्ता॥

## ध्मो धम च ॥७॥

ध्मा इत्येतस्माद् धातोः क्वुन् स्याद् धम इत्ययं चादेशः। ध्मा शब्दाग्निसंयोगयोः भौ०। धमतीति **धमकः**—अग्निध्मापकः। कर्त्ता॥

## हनो वध च ॥८॥

हनो वधादेशः क्वुन् स्यात्। हन हिंसागत्योः आ०। हन्तीति **वधकः**—चण्डालः। कर्त्ता॥

## बहुलमन्यत्रापि ॥९॥

अन्यस्माद् धातोः क्वुन् स्याद् बहुलम्। कथ वाक्यप्रबन्धे चौ०। कथयतीति **कथकः**—तोटकाख्यायिकादीनां वर्णयिता। रुच दीप्तौ। रोचत इति **रुचकः**—अलङ्कारः। कर्त्ता।

अपरा वृत्तिः—बहुलमन्यत्रापि। अन्येष्वपि परतो हनो वधादेशो भवति। तेन वत्रपूर्वस्य हनः **'उदि दृणातेरलचौ'** [द० उ० ८।९३] इति बाहुलकत्वाद् अच् स्याद् वधादेशश्च। तेन वृत्रं हन्तीति **वृत्रवधः**—इन्द्रः। कर्त्ता। तृन्तृचोर्लुटः प्रथमैकवचने वा **वधिता**। कृत्ये—हन्तव्योऽसाविति **वध्यः**। ल्युटि—**वधनम्**।

तथा अन्यत्रापि [ध्मः] धमादेशो न भवति निष्ठायाम्। **ध्मातः काञ्चनस्येव राशिः**[3]' इत्येवमादिसिद्धम्॥

---

१. 'इक्षु कुट्टतीति' इति ह.।

२. 'कालः पूर्वः। बृहत्तरी कल्पना पिबन्तीति कालापकाः' इत्यशुद्धपाठो ह.।

३. अनुपलब्धमूलमिदम्।

## कृषेर्वृद्धिश्चोदीचाम् ॥१०॥

कृषेः क्वुन् स्याद् वृद्धिश्चोदीचां मते। कृष विलेखने भ्वा० तौ०। कर्षति कषतीति वा **कार्षकः**—क्षेत्रोपजीवी। अन्यत्र कृषकः[1]। कर्त्ता॥

## उदकम् ॥११॥

उदकमित्ययं शब्दो निपात्यते क्वुन्प्रत्यये निरूढः। खनतेरञ्चतेर्वा उत्पूर्वस्य धातुलोपो निपात्यते। उत्खायते उदच्यते वा तद् वायुना विभज्यमानमिति **उदकम्**। कर्म॥

## पणिकषः किकन् ॥१२॥

आभ्यां किकन् स्यात्। पण व्यवहारे स्तुतौ च प्राङ्पूर्वः। प्रापणायतीति **प्रापणिकः**—वणिक्। कर्त्ता। कष हिंसायां प्राङ्पूर्वः। **प्राकषिकः**—हिंस्रः। कर्त्ता॥

## मुषेर्दीर्घश्च ॥१३॥

मुषेः किकन्[2] स्याद् धातोर्दीर्घश्च। मुष स्तेये। मुष्णातीति **मूषिकः**—आखुः। कर्त्ता॥

## स्यमेः सम्प्रसारणं च ॥१४॥

स्यमेः किकन् स्यात्, सम्प्रसारणं दीर्घश्च। स्यमु शब्दे भ्वा०। स्यमतीति **सिमीका**[3]—सूक्ष्मा कृमिजातिः। कर्त्ता॥

## [क्रिय इकन् ॥१५॥]

क्रिय इकन् स्यात्। डुक्रीञ् द्रव्यविनिमये। क्रीणातीति **क्रयिकः**॥

## आङि पणिपनि[पति]खनिभ्यः ॥१६॥

आङ्युपपद एभ्य इकन् स्यात्। पण व्यवहारे स्तुतौ च। आपणायतीति **आपणिकः**—वणिक्। कर्त्ता। पन च भ्वा०। अस्याप्युक्तप्रकारः। पत्लृ गतौ भ्वा०। आपततीति **आपतिकः**—पथि वर्तमानः। कर्त्ता। खनु अवदारणे। आखनतीति **आखनिकः**—वराहः। कर्त्ता॥

## कृदाधाराचिकलिभ्यः कः ॥१७॥

एभ्यः कः स्यात्। डुकृञ् करणे ता०, कृञ् हिंसायां सौ०, कृञ् करणे भ्वा०।

१. 'क्षेत्रोपजीवीनामगम्। कृषकः' इति ह.।
२. 'क्वुन्' इत्यपपाठो ह.। उदाहरणमपि 'मूषकः' इत्युपलभ्यते।
३. 'सिमीकः' इति ह.।

करोति कृणोति करतीति वा **कर्कः**—अग्निः, सारङ्गश्च[1]। कर्त्ता। क्रियत इति **कर्कः**
—**दर्भः**। कर्म। दा दाने जौ०। ददातीति **दाकः**—यजमानः। कर्त्ता। डुधाञ् धारण-
पोषणयोः जौ०। दधातीति **धाकः**—स्तम्भः। कर्त्ता। रा दाने आ०। रातीति **राकः**
—दाता। कर्त्ता। रायते वा **राकः**—**अर्थः**। कर्म। **अर्च** पूजायाम्। अर्च्यतेऽसावर्च-
यति[2] वा तमिति **अर्कः**—भास्करः, पुष्पजातिश्च। कर्म कर्त्ता। कल क्षेपे[3] भौ०।
कलयतीति **कल्कः**।

उत्तरत्र कित्करणात् ककारस्येत्संज्ञा नास्ति ॥

### सृवृभूशुषिमुषिभ्यः किच्च ॥१८॥

एभ्यः कः स्यात् किच्च। सृ गतौ भौ०, जौ०। धावति सिसर्त्तीति वा **सृकः**—
वायुः, वाणो वा। कर्त्ता। वृञ् वरणे सौ०। वृणोति व्रियते वा **वृकः**—क्षुद्रः, श्वा-
पदश्च। कर्त्ता कर्म च। भू सत्तायाम्। भवति भूयते वा **भूकः**—कालः। कर्त्ता भावः।
शुष शोषणे दै०। शुष्यति **शुष्कम्**। मुष स्तेये। मुष्णातीति **मुष्कः**—चौरो, मांसलो
वा; **मुष्कः**—वृषणः। कर्त्ता॥

### शुकवल्कोल्काः ॥१९॥

एते शब्दा निपात्यन्ते कप्रत्यये निरूढाः। शुभ शुम्भ शोभार्थे[4] तौ०, शुभ दीप्तौ[5]
भौ०। अनयोर्भलोपो निपात्यते। शुभति शोभते[6] वा **शुकः**—पक्षी। कर्त्ता। वल
संवरणे भौ०। वलत इति **वल्कः**। उष दाहे भौ०। [अस्य षकारस्य लत्वं निपा-
त्यते।] ओषतीति[7] **उल्काः**—अग्निज्वाला, उत्पातश्च। कर्त्ता॥

### इण्भीकापाशल्यतिमर्चिभ्यः कन् ॥२०॥

एभ्यः कन् स्यात्। इण् गतौ अ०। एतीति **एकः**—संख्यावाची, केवलार्थः,
प्रधानवाची च। कर्त्ता। ञिभी भये। बिभेतीति **भेकः**। कै शब्दे भौ०। कायत इति
**काकः**। पा पाने भौ०। पिबतीति **पाकः**—बालः। कर्त्ता। बाहुलकात् **केऽणः** [अ०
७।४।१३] इति ह्रस्वो न। पा रक्षणे। पातीति **पाकः**—असुरः। कर्त्ता। शल गतौ
भौ०। शलति शल्यते वा **शल्कः**—काष्ठत्वक्। कर्त्ता कर्म च। अत सातत्यगमने
भौ०। अततीति **अत्कः**—वायुः, आत्मा। कर्त्ता। मर्च इति सौत्रो धातुः।[8] मर्चय-

---

१. 'सागरश्च' इति ह.।
२. 'अर्चयति' इत्येव ह.।
३. 'शब्दे' इति ह.।
४. 'शोभनार्थे' इति ह.।
५. 'उ दीप्तौ' इत्यशुद्धो ह.।
६. 'शोभति' इति ह.।
७. 'उषतीति' इति ह.।
८. 'मर्च गृहे' इत्यधिकं ह.।

तीति मर्कः—वायुः । कर्त्ता । निरनुनासिकत्वाद्वा प्रयोजनाभावाद्वा बाहुलकाद्वा ककारस्येत् संज्ञा नास्ति ॥

**नौ हः ॥२१॥**

नावुपपदे हाधातोः कन् स्यात् । ओहाक् त्यागे जौ० निपूर्वः । नियतं हीयते जहाति वा निहाकः । निहाका—गोधा । कर्त्ता कर्म च ॥

**स्यम इट् च ॥२२॥**

स्यमतेर्धातोः कन् स्याद् इट् चागमः । स्यमु शब्दे भौ० । स्यमतीति स्यमिका—कृमिजातिः । कर्त्ता ॥

**अजिसुयु[धू]ञां दीर्घश्च ॥२३॥**

एभ्यः कन् स्याद् दीर्घश्चैषाम् । अज गतिक्षेपणयोः भौ० । अजतीति वीकः । कर्त्ता । षुञ् अभिषवे सौ० । सुनोतीति सूकः। कर्त्ता । यु मिश्रणे आ० । यौति यूकः । कर्त्ता । धूञ् कम्पने । धुनोति धूकः । कर्त्ता । दीर्घश्चेति दीर्घकरणसामर्थ्यादगुणत्वं व्याख्यातम्[1] ।

बाहुलकत्वात्—नयतीति नीका—उदकहारिका । कर्त्ता ॥

**ह्रियो रश्च लो वा ॥२४॥**

ह्रियः कन् स्याद् रेफस्य लकारो वा दीर्घश्च । ह्री लज्जायां जौ० । जिह्रेतीति ह्रीकः, ह्लीकः—लज्जावान् । कर्त्ता ॥

**आनकः शीङ्भियः ॥२५॥**

आभ्यामानक[2]प्रत्ययः स्यात् । शीङ् स्वप्ने आ० । शेतेऽत्यर्थमिति शयानकः—अजगरः । कर्त्ता । ञिभी भये जौ० । बिभ्यत्यस्मादिति भयानकः—भीषणः । अपादानम् ॥

**आणकच् लूशिघिधाञ्भ्यः ॥२६॥**

एभ्य आणकच् स्यात् । लूञ् छेदने । लूयतेऽनेनेति लुनाति वा लवाणकम्—दात्रम् । करणं कर्त्ता च । शिघि आघ्राणे दै० । शिङ्घ्यत इति शिङ्घाणकः—नासा-

---

१. 'दीर्घकरणे इटो कौ गुणत्वं व्याख्यातम्' इत्यपपाठो ह. । अस्थाने चायं ('वीकः । कर्त्ता ।' इत्यस्याग्रे) पाठ उपलभ्यते ।

२. 'आनकच्' इत्यपपाठो ह. ।

स्रावः । कर्म । डुधाञ् जौ०। दधाति धीयते वा **धानकः, धानकी**— सुवर्णपरिमाणम् । कर्त्ता कर्म । बाहुलकत्वाण्णस्य नत्वम् ॥

## वृतेस्तिकन् ॥२७॥

अस्मात् तिकन् स्यात् । वृतु वर्तने । वर्तत इति **र्वात्तिका**—पक्षिजातिः । कर्त्ता । वृत्यत इति वा **र्वात्तिका**—द्रव्यगुलिका । कर्म ॥

## कृतिभिदिलतिभ्यः कित् ॥२८॥

एभ्यः तिकन् स्यात् किच्च । कृती वेष्टने रौ०। कृणत्तीति[1] **कृत्तिका**– नक्षत्रम् । कर्त्ता । भिदिर् विदारणे रौ० । भिनत्ति भिद्यते वा **भित्तिका**—कुडयस्थानम् । कर्त्ता कर्म । लत इति सौत्रो धातुः अवपूर्वः । अवलतति अवलत्यते वा **अवलत्तिका**—गन्धर्वभाण्डम् । कर्त्ता कर्म च ॥

## इष्यशिभ्यां तकन् ॥२९॥

आभ्यां तकन् स्यात् किच्च । इषु इच्छायाम् । इच्छति तामिष्यते श्रेयोऽर्थिभिरिति **इष्टका**—[महीमध्यश्चैत्यगृहसाधिन्यः । कर्म । अशु भोजने क्रै० । अश्नन्ति तस्यां पितर इति **अष्टका**—श्राद्धतिथिः ।] तिस्रोष्टकाः । अधिकरणम् ॥

## खजेराकः ॥३०॥

अस्मादाकः स्यात् । खज मन्थे भौ० । खजतीति **खजाकः**—पक्षी बन्धकी च[2] । कर्त्ता ॥

## बलाकादयश्च ॥३१॥

बलाकादयः शब्दा निपात्यन्त आकप्रत्यये निरूढाः । बल संवरणे भौ० । बलतीति **बलाका**—पक्षिजातिः। कर्त्ता । मन ज्ञाने दै०। मन्यत इति मनाका—**हस्तिनी**। कर्त्ता । पूञ् पवने भौ० । पवत इति **पवाका**– वात्या वातसंघातः । कर्त्ता । मव्य बन्धने भौ०[3] । अस्य यलोपो निपात्यते । मव्यति मव्यते वा **मवाका**--वाजिबन्धनं, करेणुबन्धनम्[4] । कर्त्ता कर्म च ॥

## शलिपटिपतिभ्यो निच्च ॥३२॥

एभ्य आकः स्यान्निच्च । शल गतौ भौ० । शलति शल्यते वा **शलाका**—लोहजावर्त्तिका । कर्त्ता कर्म च । पट गतौ । पटति पटयते वा **पटाका**—पक्षिजातिः । कर्त्ता

---

१. 'कृती वेष्टने तौ० । कृततीति' इति ह. ।

२. 'पक्षी । कर्त्ता । आयुधबन्धकी च' इति ह. ।

३. 'दै०' इति ह. । ४. 'करेणुर्वा' इति ह. ।

कर्म च । पत्लृ गतौ । पतति पत्यते वा वायुनेति **पताका**—प्रांशुयष्टयग्ररचित: प्रलम्ब: पट:[1] । कर्त्ता कर्म च ॥

**पिनाकादयश्च ॥३३॥**

पिनाकादय: शब्दा निपात्यन्त आकप्रत्यये निरूढा: । पिष्लृ संचूर्णने रौ०[2] । अस्य नकारोऽन्त्यस्य निपात्यतेऽगुणत्वं च । पिनष्टयनेन[3] शत्रून् इति **पिनाक:**—रौद्रं धनु:, शूलम् । करणम् । तड आघाते भौ० । तड्यते तद् गवादिभिरिति **तडाकम्**—पुष्करिणी । कर्म । भदि कल्याणे भौ० । अस्य रुगागमो निपात्यते नकारलोपश्च । भन्दत इति **भद्राक:**—अकुटिल: । कर्त्ता । भा दीप्तौ आ० नञ्पूर्व: । न भातीति **नभाक:**—तम: । कर्त्ता । पिष्लृ संचूर्णने । अस्य युगागमो निपात्यते णकारोऽन्त्यस्यागुणत्वं च । पिष्यत इति **पिण्याक:**—तिलपिष्टपीडित: कल्क: । कर्म । कु शब्दे आ० कुङ् अव्यक्ते शब्दे । कौति कवते कूयते वा **कवाक:**—पक्षी । कर्त्ता कर्म च । श्यैङ् गतौ भौ० । अस्य मुगागमो निपात्यते । श्यायत इति **श्यामाक:**—जघन्यो व्रीहि: । कर्म ॥

**कषिदुषिभ्यामीकन् ॥३४॥**

आभ्यामीकन् स्यात् । कष हिंसायाम् । कषन्त्यनयेति [**कषीका**—]खनित्रम् करणम् । दुष वैकृत्ये चौ० । दूषयति लोचनमिति **दूषीका**—अक्षिपातसंघात: कर्त्ता ॥

**चङ्क्वणे: किङ्किणश्च ॥३५॥**

चङ्क्वणेरीकन् स्यात् किङ्किण इत्ययञ्चादेश: । क्वण शब्दार्थ: भौ०, चङ्क्व इति यङ्लुगन्त: । पुन: पुन: भृशं वा क्वणतीति **किङ्किणीका**—सूक्ष्मघण्टिका कर्त्ता ॥

**शॄपॄवृङां द्वे रुक् चाभ्यासस्य ॥३६॥**

एभ्य ईकन् स्याद् द्वित्वम् अभ्यासस्य रुगागमश्च । शॄ हिंसायां क्र्° । शृणा रक्षांसि **शर्शरीका**— मङ्गलाचारकरणम् । कर्त्ता । पॄ पालनपूरणयो: क्र्° । पृण पूर्यते वा **पर्परीक:**—सूर्य:, जलाशयश्च । कर्त्ता कर्म च । वृङ् सम्भक्तौ क्र्° वृणीते[4] व्रियते वा **वर्वरीका**—संवरणम् । कर्त्ता कर्म च ॥

---

१. 'प्रांशुध्वजाग्ररचितप्रभंजपट:' इति ह. ।
२. 'भौ० तौ०' इति ह. । ३. 'पिष्यतेऽनेन' इत्यपपाठो ह. ।
४. 'वृञ् ......वृणाति' इति ह. ।

**फर्फरीकादयश्च ॥३७॥**

फर्फरीकादयः शब्दा निपात्यन्ते ईकन्प्रत्यये निरूढाः। द्वे रुक् चाभ्यासस्येत्यनुवर्तते। स्फुर संचलने तौ०। अस्य अभ्यासस्य फादेशोपधात्वसलोपा निपात्यन्ते। स्फुरतीति **फर्फरीका**—किसलयम्। कर्त्ता[1]। दॄ भये क्र्या०। अस्य द्वे रुक् चाभ्यासस्य। दीर्यत इति **दर्दरीकम्**—वादित्रम्। जॄष् वयोहानौ दै०। [अस्य द्वे] रुक् चाभ्यासस्य। जीर्यत इति **जर्जरीकम्**। कर्त्ता। तड आघाते भौ०। अत्राभ्यासस्येत्वनुमागमावुपधेत्वं च निपात्यते[2]। तडत इति **तिन्तिडीकम्**[3]—पक्षी, शाकजातिश्च। कर्त्ता॥

**ईषेः किद्ध्रस्वश्च ॥३८॥**

ईषेरीकन् स्यात् किच्च ह्रस्वश्च इकारः। ईष उञ्छे भौ०। ईषतीति **इषीका**—दर्भशलाका। कर्त्ता॥

**ऋजेश्च ॥३९॥**

ऋजे रीकन् स्यात् किच्च। ऋज गत्यादिषु[4]। अर्जति ऋज्यते वा **ऋजीकम्**—उपकृतम्। कर्त्ता कर्म च॥

**अनिदृशिभ्याञ्च ॥४०॥**

आभ्यामीकन् स्यात् किच्च। अन प्राणने। अन्यते तदिति **अनीकम्**—सेना। कर्म। दृशिर् प्रेक्षणे भौ०। पश्यन्ति तां विस्मिता **दृषीका**—पुष्पवती। कर्म॥

**सर्त्तेर्नुम् च ॥४१॥**

सर्त्तेरीकन् स्यात् किच्च नुमागमश्च। सृ गतौ भौ०। धावतीति **सृणीकः**—वायुः। कर्त्ता॥

---

१. 'पर्फरीकादयश्च। पर्फरीकादयः·········निरूढाः। पॄ पालनपू० क्र्या०। स्फर स्फूरणे तौ०। द्वे······वर्तते। आभ्यासस्य फकारादेशः। पवर्गे पकाराप्रथमः फकारात्। प्रथममादेशभावोयंगंधात्त्वंशलोपो निपात्यते। स्फुरतीति पफरीकं लिशलयं कर्त्ता' इत्यन्तभ्रष्टपाठो ह.।

२. 'अभ्यासस्य नुमागमो निपात्यते उपधायाश्च' इति ह.।

३. 'तन्तडीकम्' इति ह.।

४. 'गतिभीषणयोः। ऋज अर्जने भौ०' इति ह.।

## अलीकादयश्च ॥४२॥

अलीकादयः शब्दा निपात्यन्त ईकन्प्रत्यये निरूढाः । अत सातत्यगमने भौ० । अस्य लकारोऽन्त्यस्य निपात्यते । अतन्त्यनेनाधोगतिम् **अलीकम्** । वह प्रापणे । वहेर्लकारान्तत्वं युडागमश्चोपधायाः । वहन्ति हृदयेनेति **व्यलीकम्**—मनसो विकारः । कर्त्ता ॥

## मृकणिभ्यामूकोकणौ ॥४३॥

आभ्यामूक-ऊकणौ स्तः । मृङ् प्राणत्यागे । म्रियत इति **मरूकः**—प्राणी । कर्त्ता । कण निमीलने चौ० । कणयति कण्यते वा **काणूकः**—काकः । कर्त्ता कर्म च ॥

## वलूकः ॥४४॥

[वलूक] इत्येवं शब्दो निपात्यते ऊकप्रत्ययान्तः । वल प्राणने भौ० । वलति वल्यते वा **वलूकम्**—जलद्रव्यम् । कर्त्ता कर्म च ॥

## उलूकादयश्च ॥४५॥

उलूकादयः शब्दा निपात्यन्त ऊकप्रत्यये निरूढाः । लोकृ दर्शने [चौ० उत्पूर्वः । अस्य ककारौकारतकारलोपा निपात्यन्ते] । उत्क्रम्य दृष्टिमालोकयतीति **उलूकः**—कौशिकः । कर्त्ता । भल भल्ल परिभाषणे भौ० । भल्लत इति [**भल्लूकः**—]ऋक्षः । कर्त्ता[1] ॥

## शलिमण्डिभ्यामूकण् ॥४६॥

आभ्यामूकण् स्यात् । शल गतौ भौ० । शलति शल्यते वा **शालूकः**—जलम् । कर्त्ता कर्म च । मडि भूषायाम्, मडि च प्रकृत्यन्तरो ण्यन्तो वा । मण्डति मण्डते मण्डयते वा **मण्डूकः** । कर्त्ता ॥

## कृञादिभ्यः संज्ञायां वुन् ॥४७॥

कृञादिभ्यः संज्ञायां वुन् स्यात् । कृञ् करणे । क्रियते तस्मिन् [उदकम्] इति **करकः**—कमण्डलु । अधिकरणम् । सृ गतौ । स्रियतेऽसाविति **सरकः** । चर गत्यर्थः भौ० । चरति तानिति **चरकः**—भिषगाचार्यः । कर्त्ता । दृ विदारणे भौ०, दृ भये क्र्° । दरति दृणाति वा **दरकः**—भीरुः । कर्त्ता ॥

## ऋजः कीकन् ॥४८॥

अस्माद्धातोः कीकन् स्यात् । ऋजि भृजी भर्जने भौ० । अर्जति **ऋजीकम्**—वर्णस्थानम् । कर्त्ता ॥

---

१. 'कर्म' इति ह. ।

## अर्भकपृथुकपाका वयसि ॥४६॥

एते शब्दा निपात्यन्ते [अक उककप्रत्ययान्ता] वयस्यर्थे । ऋ गतौ भ्वा० । अस्य [अकप्रत्ययः] भुगागमो निपात्यते । ऋच्छत्यर्यते वा अर्भकः । कर्त्ता कर्म च । प्रथ प्रख्याने । अस्य उकप्रत्ययो[1] निपात्यते सम्प्रसारणमगुणत्वं च । प्रथत इति पृथुकः । कर्त्ता । डुपचष् पाके भ्वा० । अस्य कप्रत्ययो निपात्यते उपधाया दीर्घश्चकारलोपश्च । पचति पच्यते वा पाकः । कर्त्ता कर्म । सर्वमेते बालाः[2] प्रकीर्तिताः ॥

[॥ ककारः ॥]

## डस् खनेर्मुट् चोदात्तः ॥५०॥

खनेर्डस् स्यान् मुडागमश्च खनेरुदात्तो भवति । खनु अवदारणे भ्वा० । खन्यते तत् सुखार्थिभिरिति मुखम्—वक्त्रम् ॥

## मुहेः खन् मूर्च ॥५१॥

मुहेः खन् स्यात् [मूरित्ययं चादेशः । मुह वैचित्त्ये दै० । मुह्यतीति मूर्खः—अज्ञो जनः । कर्त्ता ॥

## नहेर्हलोपश्च ॥५२॥

नहेः खन् स्याद्][3] हलोपश्च । णह बन्धने दै० । नह्यतीति नखः करुहः, द्रव्यं च । कर्त्ता ॥

## महश्च ॥५३॥

पूर्ववत् । मह पूजायाम् । महतीति मखः ॥

## शीङो निद्ध्रस्वश्च ॥५४॥

शीङः खन् स्यात् निच्च ह्रस्वश्च धातोः ।[4] [शीङ् स्वप्ने अ॰ । शेत इति शिखा —केशबन्धः । कर्त्ता ॥

## वृक्षावयव आ च ॥५५॥

वृक्षावयवे गम्यमाने शीङो धातोः खप्रत्ययो भवति निच्च,] आकारान्तादेशश्च ।

---

१. 'उकारः' इति ह. । २. 'सर्वे एते शब्दाः कोताः' इति ह. ।

३. कोष्ठान्तर्गतः पाठस्त्रुटितः प्रतिभाति ह. ।

४. 'शिङः कित् ह्रस्वश्च । शिङः खन् । किन् कित् ह्रस्वश्च धातोः । खन् स्यात् किच्च ।' इत्यन्तभ्रष्टपाठो ह. । अग्रे कोष्ठान्तर्गतपाठोऽपि नोपलभ्यते ।

[शीङ् स्वप्ने आ० ।] शेरतेऽस्यां पक्षिण इति **शाखा**—वृक्षावयवः । अधिकरणम् ॥

**माङ उखा ॥५६॥**

[अयं] शब्दो निपात्यते । माङ् माने शब्दे च जौ० । मीयतेऽसाविति **उखा**—स्थाली, ऊर्ध्वक्रिया वा । कर्म ॥

**मिनातेरूखः ॥५७॥**

मिनातेरूखः स्यात् । मीञ् हिंसायाम् । मिनातीति **मयूखः**—किरणः । कर्त्ता ॥

॥ खकारः ॥

**पतेरङ्गच् पक्षिणि ॥५८॥**

पतेरङ्गच् स्यात् पक्षिण्यभिधेये । पत्लृ गतौ । पतत्यत्यर्थमिति **पतङ्गः**—पक्षी, आदित्यश्च । कर्त्ता ॥

**त्रादिभ्यश्च ॥५९॥**

तॄ एवमादिभ्योऽङ्गच् स्यात् । आदिशब्दः प्रकारे बोद्धव्यः । तॄ प्लवनतरणयोः । तरन्त्यनेनेति **तरङ्गः**[1]—ऊर्मिः । करणम् । एवमन्येऽपि ॥

**विडादिभ्यः कित् ॥६०॥**

विडादिभ्योऽङ्गच् स्यात् स किच्च । विड इति सौत्रो धातुः । वेडयतीति **विडङ्गः**—द्रव्यजातिः । कर्त्ता । एवमन्येऽपि ॥

**गन् गम्यदेः ॥६१॥**

आभ्यां गन् स्यात् । गम्लृ गतौ । गम्यतेऽसौ पुण्यार्थिभिरिति **गङ्गा**—जाह्नवी । कर्म । अद भक्षणे । अत्तीति **अद्गः**—समुद्रः, आदित्यश्च ।

प्राक्प्रत्ययनिर्देशो वर्गादीनां प्रसिद्ध्यर्थः । वृञ् वरणे सौ० । वृणोति **वर्गः**—संघातः । कर्त्ता ॥

**भृञः किन्नुट् च ॥६२॥**

भृञो धातोर्गन् स्यात् किच्च नुडागमश्च । भृञ् भरणे भौ०, डुभृञ् धारण-पोषणयोः जौ० । भरति बिभर्त्ति वा **भृङ्गः**—पक्षी, भ्रमरश्च । कर्त्ता ॥

**शृणातेर्ह्रस्वश्च ॥६३॥**

अस्माद् गन् स्यात् किच्च नुडागमश्च ह्रस्वश्च । शॄ हिंसायां क्रै० । शृणाति शीर्यते

१. 'तरणिः' इत्यशुद्धो ह. ।

वा शृङ्गम्—विषाणं, गिरिप्रान्तश्च । कर्त्ता कर्म च ॥

**गण् शकुनौ ॥६४॥**

शॄणातेर्गण् स्यात् शकुनौ गम्यमाने नुडागमश्च । शॄ हिंसायाम् । शृणाति **शार्ङ्गः**—शकुनिः, धर्मपालः, ऋषिसुतः[1] । कर्त्ता ॥

**मुदिग्रोर्गग्गौ ॥६५॥**

आभ्यामेतौ यथासंख्यं स्तः । इदमेव[2] गक्करणज्ञापकात् पूर्वसूत्रे गकारस्येत्संज्ञाप्रतिषेधः । मुद हर्षे भ्वा० । मोदत्यनेनेति **मुद्गः**—सस्यजातिः । करणम् । गॄ गरणे । गिरति गृणाति गीर्यते वा **गर्गः**—ऋषिः । कर्त्ता कर्म च । बाहुलकत्वाद् गकारस्येत्संज्ञा नास्ति ॥

**दहेर्हलोपो दश्च नः ॥६६॥**

दहेर्गो हकारलोपश्च दस्य नः । दह भस्मी करणे भ्वा० । दह्यतेऽसावनलैरिति **नगः**—वृक्षः, पर्वतश्च । कर्म ॥

**छापूञ्खण्डिभ्यो गक् ॥६७॥**

एभ्यो गक् स्यात् । छो छेदने दि० । छ्यतीति **छागः**—अजः । कर्त्ता । पूञ् पवने भ्वा० । पवते पूयते वा **पूगः**—संघातः । कर्त्ता कर्म च । खडि भेदे । खण्डयतीति **खड्गः** ॥

॥ गान्ताः ॥

**जनेः को जङ्घ च ॥६८॥**

जनेः कः स्याद् जङ्घ इत्ययं चादेशः । जनी प्रादुर्भावे दि०, जन जनने जु० । जायन्तेऽस्यां [जजनति वा] अतिशयेन रोमाणीति **जङ्घा**—शरीराङ्गम् । अधिकरणम् ॥

**दृणातेर्घक् ॥६९॥**

अस्माद् घक् स्यात् । [दॄ भये] क्र्या० । दृणातीति **दीर्घः** । कर्त्ता ॥

॥ घकारान्तश्च ॥

॥ इत्युणादिवृत्तौ तृतीयः पादः ॥

———

1. 'भद्रपालः, सुतः' इति ह. ।
2. 'अत एव' इति ह. ।

# [॥ अथ चतुर्थः पादः ॥]

**स्रुवश्चिक् ॥१॥**

स्रुधातोश्चिक् स्यात् । स्रु गतौ भ्वा० । स्रवत्यस्मिन् हविरिति **स्रुक्**—अग्निहोत्रभाण्डम् । अधिकरणम् ॥

**तनोतेरनश्च वः ॥२॥**

तनोतेश्चिक्, अकारनकारयोश्च वकारादेशः । तनु विस्तारे । तनोति तन्यते वा **त्वक्**—त्वचा । कर्त्ता कर्म च ॥

**कुवश्चट् दीर्घश्च ॥३॥**

कुधातोश्चट् स्याद् दीर्घश्च । कु शब्दे भ्वा० । कौति कूयते वा **कूची**—चित्रभाण्डम् । कर्त्ता कर्म च ॥

**समीणः ॥४॥**

सम्युपपद इणश्चट् स्याद् दीर्घश्च । इण् गतौ । संयन्ति तस्मिन्निति **समीचः**। अधिकरणम् । संयन्ति तामिति **समीची**—भूमिः, स्त्री वा । [1]कर्म ॥

**सिवेष्टेरू च[2] ॥५॥**

सिवेश्चट् स्याद् दीर्घश्च टेश्च ऊकारादेशः[3] । षिवु तन्तुसन्ताने दि० । सीव्यतीति **सूचः**—पिशुनः । कर्त्ता । सीव्यत्यनयेति **सूची**—सन्धानकरणी[4] । करणम् ॥

॥ **चकारः** ॥

**[कचेश्छः ॥६॥]**

कचः छः स्यात् । कच दीप्तिबन्धनयोः भ्वा० । कचत्यनेनेति **कच्छः**—शरीरैकदेशः । करणम् ॥

॥ **छकारान्तः** ॥

**पारेरजिक्[5] ॥७॥**

---

१. 'कर्त्ता' इत्यधिकं पूर्वं ह. ।
२. 'शिवेष्टेरुश्च' इत्यपपाठो ह. ।
३. 'उकारादेशः' इति ह. ।
४. 'सन्धानकराणि' इति ह. ।
५. 'पारेरजिः' इत्यन्यत्रोपलभ्यते ।

पारेरजिक् स्यात् । पॄ पालनपूरणयोः क्र्या० ण्यन्तः । पारयतीति **पारक्**—सुवर्णमन्नं वा ।।

**पणेरिच्चादेश्च वः**[1] ।।८।।

पणेरजिक् स्यात् प्रत्ययादेरिच्च धात्वादेश्च वः । पण व्यवहारे स्तुतौ च । पणत इति **वणिक्**--वाणिजः । कर्त्ता ।।

**वशेः किच्च**[2] ।।९।।

वशेरजिक् स्यात् प्रत्ययादेरिच्च[3] । वश कान्तौ अ्रा० । वष्टि उश्यतेऽसौ श्रेयोऽर्थिभिरिति **उशिक्**—अग्निः । कर्त्ता कर्म च ।।

**भृञ उच्च** ।।१०।।

भृञोऽजिक् स्यात् प्रत्ययादेरिच्च उच्च । डुभृञ् धारणपोषणयोः जौ०, भृञ् [भरणे भौ०] । बिभर्त्ति भरति मर्त्यान् इति **भुरिक्**—गायत्रीविशेषः ।।

।। **जकारान्ताः** ।।

।। इत्युणादिवृत्तौ चतुर्थः पादः ।।

---

१. 'पणेरिज्यादेश्च वः' इत्यन्यत्रोपलभ्यते ।

२. प्रत्ययस्य कित्त्वात् पुनः कित्करणमनर्थकम् । अन्ये तु पूर्वसूत्रे 'इजि' प्रत्ययं मत्वा तमनुवर्तयन्ति । तेषां मते कित्करणमुचितम् ।

३. वृत्तौ 'किच्च' इति नोपलभ्यते ।

# [॥ अथ पञ्चमः पादः ॥]

**लङ्घेरटिर्नलोपश्च ॥१॥**

लङ्घेरटिः स्यान्नलोपश्च । लघि गत्यर्थः । लङ्घत इति **लघट्**—वायुः । कर्त्ता ॥

**शकादिभ्योऽटन्**[1] ॥२॥

शकादिभ्योऽटन्[1] स्यात् । शक्लृ गतौ सौ० । शक्नोति शक्यते वाऽनेन गन्तुमिति **शकटम्**—यानम् । कर्त्ता करणम् । अव रक्षणादिषु । अवति ऊयते[2] वा **अवटम्**—छत्रम् । कर्त्ता कर्म च । दिवु क्रीडादिषु । दीव्यतीति **देवटः**—शिल्पी । कर्त्ता । मृक[3] इति सौत्रो धातुः । मर्कतीति **मर्कटः** । वय समवाये । वयतीति **वयटः**[4]—रसः । कर्त्ता । चमु अदने भौ० । चमतीति **चमटः**—घस्मरः । कर्त्ता । डुभृञ् धारणपोषणयोः जौ० । बिभर्त्ति भ्रियते वा **भरटः**—भृत्यः । कर्त्ता कर्म च ॥

**कृतॄकम्पिभ्यः कीटन् ॥३॥**

एभ्यः कीटन् स्यात् । कॄ विक्षिपे तौ० । कीर्यत इति **किरीटः**—मुकुटम् । कर्त्ता । तॄ प्लवनतरणयोः । तरति तीर्यते वा **तिरीटः**—कूलवृक्षः । कर्त्ता कर्म च । कपि चलने । कम्पत इति **कम्पीटः**—कम्पः । कर्त्ता ॥

**जनेष्टो लोपश्च ॥४॥**

जनेष्टः स्याद् अन्त्यस्य च लोपः । जनी प्रादुर्भावे, जन जनने जौ० । जायन्ते जजन्ति जन्यन्ते वा **जटा**—उद्ग्रथिताः केशाः । कर्त्ता कर्म च ॥

॥ इति टकारः ॥

**कमेरठः ॥५॥**

अस्मादठः स्यात् । कमु कान्तौ भौ० ण्यन्तः । काम्यतेऽसाविति **कमठः**—भिक्षाभाजनम् । कर्म ॥

**कणेष्ठः ॥६॥**

---

१. 'अनट्' इत्यपपाठो ह. ।

२. 'अव्यते' इति ह. ।

३. 'कर्म' इत्यपपाठो ह. ।

४. 'षंच समवाये । षचतीति षचटः' इति ह. ।

अस्मात् ठः स्यात् । कण निमीलने ण्यन्तः, प्रकृत्यन्तरं वा । कणयति कण्यते वा **कण्ठः**[1]—गलः । कर्त्ता कर्म च ।

बहुलग्रहणादन्येभ्योऽपि ठः । कुण शब्दोपकरणयोः, कुण गुण चामन्त्रणे चौ० । कुणति कुणयति वा **कुण्ठः**—अपटुविन्द्रियः । कर्त्ता ॥

॥ इति ठकारः ॥

## ञमन्ताड्डः ॥७॥

'ञम्' इति प्रत्याहारः 'ञमङणनम्' [अ० प्र० सू० ७]इति । ञमन्ताद्[2] धातोर्डः स्यात् । ङकारसतोर्नास्त्युदाहरणम् । दमु उपशमे । दम्यन्तेऽनेनोद्धता जना इति **दण्डः**, दमनं वा **दण्डः**—चतुर्थ उपायः, यष्टिर्वा । करणं भावश्च । मन ज्ञाने दै० । मन्यतेऽसौ जनैरिति **मण्डः**—अन्नमुच्यते । कर्म । वन षण सम्भक्तौ भौ०, वनु याचने । वनति वनुते वा **वण्डः**—अल्पः शेषः, दुश्चर्मा च । कर्त्ता[3] । रण शब्दे भौ०, रमु क्रीडायाम् । रण्यतेऽसौ, रमतेऽनयेति **रण्डा**—पुनर्भू भार्या । कर्म करणं च । बहुलमेव बाहुलकम्—

**"क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ।**
**विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥"**[4]

इति बाहुलकवचनात् सत्यनुबन्धप्रयोजने डकारस्यानुबन्धसंज्ञा नास्ति, उत्तरत्र कित्करणाद्वा । यद्वक्ष्यति "**क्वादिभ्यः कित्**" [५।८] इति, तत्र गुणप्रतिषेधार्थं कित्करणमनर्थकं स्यात् । तस्मादेव डस्य न लोपः । अन्तग्रहणं नियमार्थम्, अवसाने यत्र ञमिति तत्र प्रत्ययविधिः । यत्र मध्ये ञमिति तत्र मा भूत् ॥

## क्वादिभ्यः कित् ॥८॥

कु आदिर्येषां ते क्वादयः कवर्गादय इत्यर्थः ।[5] "**अणुदित् सवर्णस्य चाप्रत्ययः**" [अ० १।१।६९] इति । तत्रेष्टिः—"**अण् च उदिच्च सवर्णान् गृह्णातीति**" [म० भा० १।१।६९] । कवर्गादिभ्यो ञमन्तेभ्यो डः स्यात् किच्च । कुण शब्दोपकरणयोः तौ० । कुणति कुण्यते वा तदिति **कुण्डम्**—उपकरणभाण्डम्, जारजातं[6] च । कर्त्ता

---

१. 'कपाटः' इत्यपपाठो ह. ।
२. 'ञमान्तो' इत्यशुद्धपाठो ह. ।
३. 'कर्म' इति ह. ।
४. अनुपलब्धमूलमिदम् ।
५. 'अणुदिति प्रत्याहारग्रहणम्' इत्यधिकं ह. ।
६. 'परज्ञातं' इति ह. ।

कर्म च । कण निमीलने भौ० ण्यन्तः, प्रकृत्यन्तरो वा । कणयति परान् कण्यते वाऽनेन रिपुवर्ग इति **काण्डः**—क्रूरः, श्वा, बलसंघातश्च । कर्त्ता करणं च । गम्लृ गतौ भौ०। गच्छत्युपधानमिति **गण्डः**—वक्त्रैकदेशः । कर्त्ता । खनु अवदारणे । खन्यतेऽसौ[1] **खण्डः**, अपूर्णः, इक्षुविकारश्च । कर्म। अण शब्दे भौ० । अणतीति **अण्डम्**—गर्भनिलयम् । कर्त्ता ।

बाहुलकत्वादञमन्तादपि डः स्यात् । कु शब्दे अा०, कुङ् अव्यक्ते शब्दे भौ० । कौति असौ कवते वा **कुडः**—बालः । कर्त्ता । गुङ् अव्यक्ते शब्दे । गवते गूयते वा **गुडः**—इक्षुविकारः । [कर्त्ता] कर्म च । एवमादयोऽन्ये द्रष्टव्याः ॥

## अण्डन् कृसृभृवृञः ॥९॥

एभ्योऽण्डन् स्यात् । डुकृञ् करणे ता० । क्रियन्तेऽस्मिन् द्रव्याणीति[2] **करण्डः**—भाण्डजातिः । अधिकरणम् । सृ गतौ जौ० [भौ०] । सिसर्त्ति धावति वा **सरण्डः**—वायुः, भूतसंघातश्च । कर्त्ता । डुभृञ् धारणपोषणयोः जौ०, भृञ् भरणे भौ० । बिभर्त्ति भरति भ्रियते वा **भरण्डः**—भाण्डजातिः । कर्त्ता कर्म च । वृञ् वरणे सौ० । वृणोति व्रियते वा **वरण्डः**—काष्ठादिसंघातः । कर्त्ता कर्म च । सानुबन्धकरणं सामान्य[3]धातुनिवृत्त्यर्थम् ।

प्राक्प्रत्ययनिर्देशः शरण्डादीनां प्रसिद्ध्यर्थः । शॄ हिंसार्थः क्र्यै० । शृणाति **शरण्डः**—वायुः । कर्त्ता । तॄ प्लवनतरणयोः । तरतीति **तरण्डः**—वायुः । कर्त्ता । इण् गतौ । अस्य बाहुलकत्वान्नुमागमः । एतीति **एरण्डः**—वायुः । कर्त्ता । धृञ् धारणे । ध्रियन्तेऽस्मिन् लोका इति **धरण्डः**—भूलोकः । अधिकरणम् ॥

## सर्त्तेरडिः ॥१०॥

सर्तेरडिः स्यात् । सृ गतौ [भौ०] जौ० । सरति सिसर्त्ति वा **सरट्**—वायुः । कर्त्ता ॥

[॥ डकारान्ताः ॥]

## शमेर्ढः ॥११॥

---

१. 'खन्यते खातमिति' इति ह. ।

२. 'क्रियतेऽस्मिन् सामान्यदेशत्वात्तत्रोपरि द्रव्याणि गृह्यन्त इति' इति ह. ।

३. 'समान०' इति ह. ।

शमेर्ढः स्यात् । शमु उपशमे दै० । शान्तमस्य स्पर्शनेन्द्रियमिति[1] **शण्ढः**—नपुंसकः ॥[2]

[॥ ढान्तः ॥]

## श्यास्त्याहृञविभ्य इनच् ॥१२॥

एभ्य इनच् स्यात् । श्यैङ् गतौ । श्यायत इति **श्येनः**—गृध्रः । कर्त्ता । स्त्यै शब्दे भौ० । स्त्यायत इति **स्तेनः**—बाहुलकाद्यलोपः । हृञ् हरणे भौ०, हृ प्रसह्यहरणे जौ० । हरत्याश्वध्वानं जिहर्त्ति वा **हरिणः**—मृगः । कर्त्ता । अव रक्षणादिषु । अवतीति **अविनः**—राजा, अध्वर्युश्च । कर्त्ता ॥

## वृजेः किच्च ॥१३॥

वृजेरिनच् स्यात् किच्च । वृजी वर्जने रौ० । वृणक्ति वृज्यते वा **वृजिनम्**—कुटिलम् । कर्त्ता कर्म च ॥

## अजेरज च ॥१४॥

अजेरिनच् स्यात्, अज इत्ययं चादेशः । अज गतिक्षेपणयोः भौ० । अजति वीयते वा **अजिनम्**—चर्म । कर्त्ता कर्म च । अजेरजादेशकरणं वी-आदेश-निवृत्त्यर्थम् ॥

## बहुलमन्यत्रापि ॥१५॥

इनच् स्यात् । कठ कृच्छ्रजीवने । कठति **कठिनम्**—अमृदु । एवमन्येऽपि ।

अपरा वृत्तिः—बहुलमन्यत्रापि । बहुलमन्येभ्योऽपि अन्यस्मिन्नपि प्रत्यये परतोऽजेरजादेशो भवति । तृन्तृचोः वा, लुटः प्रथमैकवचने वा । अजतीति **अजिता**—गन्ता । [अचि अलि वा ।] समजतीति **समजः**—समूहः । **"संज्ञायां समज"** [अ० ३।३।९९] इति क्यप् । **समज्या** ॥

## द्रुदक्षिभ्यामिनन् ॥१६॥

आभ्यामिनन् स्यात् । द्रु गतौ भौ० । द्रवति द्रूयते वा तदर्थिभिरिति **द्रविणम्**—धनम् । दक्ष वृद्धौ । दक्षत इति **दक्षिणः**—परचित्तानुरञ्जिता, अनुकूलः । कर्त्ता॥

## [अर्त्तेः] किदिरिश्च ॥१७॥

अर्त्तेरिनन् स्यात्, किच्च, इरित्ययं चादेशः । ऋ गतौ । ऋच्छत्यर्यते वा **इरिणम्**—अल्पोदकतृणस्थानम् । कर्त्ता कर्म च ॥

## वेपितुह्योर्ह्रस्वश्च ॥१८॥

---

१. 'सर्वेन्द्रियमिति' इति ह. । २. 'बाहुलकत्वात् षठः' इत्यधिकं ह. ।

आभ्यामिनन् स्यात् किर्त्वं ह्रस्वश्च । टुवेपृ कम्पने भ्वा० । वेपत इति **विपिनम्**-गहनम् । कर्त्ता । तुहिर् अर्दने भ्वा० । तोहति तुह्यते वा अर्केणेति[1] **तुहिनम्**—हिमम्, अन्धकारश्च । कर्त्ता कर्म च ॥

**महेरिणच् ॥१९॥**

महेरिणच् प्रत्ययो भवति चकारादिनन् च । मह पूजायाम् । मह्यतेऽस्मिन्निति **महिणम्, महिनम्**— राज्यम् । अधिकरणम् ॥

**सुयुरुवृभ्यो युच् ॥२०॥**

एभ्यो युच् स्यात् । षुञ् अभिषवे सौ०, षु प्रसवैश्वर्ययोः भ्वा० । सुनोति [सवति] सूयते वा **सवनम्**—पूर्वाह्णापराह्णमध्याह्नादिकालः, त्रिषवणम् । कर्त्ता कर्म च । यु मिश्रणे । यौति यूयते च **यवनः**—देशः । कर्त्ता कर्म च । रु शब्दे अ० । रौतीति **रवणः**—वायुः, भ्रमरश्च । कर्त्ता । वृञ् वरणे सौ० । वृणोति व्रियते वा **वरणम्**—कन्याप्रदानम्[2] । कर्त्ता कर्म च ॥

**अशे रश च ॥२१॥**

अशेर्युच् स्याद् रश इत्ययं चादेशः । अशूङ् व्याप्तौ, अश भोजने क्र्या० । अश्नुते वा करिणम्, अश्नाति वा त्रिकसंस्पर्शमिति **रशना** । कर्त्ता ॥

**उन्देर्नलोपश्च ॥२२॥**

उन्देर्युच् स्याद् नकारलोपश्च । उन्दी क्लेदने रौ० । उनत्तीति **ओदनः**—शाल्यन्नम् । कर्त्ता ॥

**बहुलमन्यत्रापि ॥२३॥**

बहुलमन्येभ्योऽपि युच् स्यात् । स्यन्दू प्रस्रवणे । स्यन्दत इति **स्यन्दनः**—रथः । कर्त्ता । टुमस्जो शुद्धौ । मज्जन्त्यनेनेति **मज्जनम्**—रोमम् । करणम् अधिकरणं वा । दिवु क्रीडादिषु । दीव्यतीति **देवनः**—कितवः । कर्त्ता ॥

**रजः क्युन् ॥२४॥**

रजः क्युन् स्यात् । रञ्ज रागे । रजति रज्यते वाऽनेनेति **रजनः**—रागः । कर्त्ता करणं च । बाहुलकाद् ङीप्, तेन **रजनी** इति सिद्ध्यति । कृपेः **कृपणः** इति ॥

**भूसूधूभ्रस्जिभ्यश्छन्दसि ॥२५॥**

एभ्यः क्युन् स्यात् छन्दसि विषये । भू सत्तायाम् । भवन्ति तस्माद् भूतानीति

१. 'कर्णेति' इति ह. । २. 'अन्याप्रतिपादनम्' इति ह. ।

भुवनम्—अन्तरिक्षम्, लोकश्च । अपादानम् । षूङ् प्राणिगर्भविमोचने आ०, षूङ् प्राणिप्रसवे । [सूते] सूयते वा सुवनम्—आदित्यः, अङ्कुरः, प्रादुर्भावश्च । कर्त्ता । धूञ् कम्पने सौ० क्रै० । धुनोति धुनाति वा धुवनः—वायुः, अग्निश्च । कर्त्ता । भ्रस्ज पाके । भृज्जति तस्मिन्निति भृज्जनः—अम्बरीषम् । अधिकरणम् । छन्दसीति किम् ? भवनम्, भर्ज्जनम् । युच् [५।२३] भवतीति भवनम् । एवमन्येऽपि ॥

## कॄपॄवृजिमन्दिनिधाञ्भ्यः क्युः ॥२६॥

एभ्यः क्युः स्यात् छन्दसि । कॄ विक्षेपे तौ० । किरतीति[1] किरणः—रश्मिः । कर्त्ता । पॄ पालनपूरणयोः क्रै० । पृणाति पूर्यते वा पुरणः—समुद्रः । कर्त्ता कर्म च । वृजी वर्जने रौ० । वृणक्ति वृज्यते वा वृजनम्—वारणम्, अन्तरिक्षं वा । मदि स्तुत्यदिषु भौ० । मन्दतेऽनेनेति मन्दनम्—स्तोत्रम् । करणम् । डुधाञ् धारणपोषणयोः जौ० निपूर्वः । निदधातीति निधनम्—विनाशः । संज्ञायाम् । कर्त्ता । छन्दसीत्येव—करणम्, परणम्, वर्जनम्, मन्दनम्, निधानम्[2] । युच् [५।२३] किरतीति करणम्[3] । एवमन्येऽपि ॥

## धृषेर्धिष च संज्ञायाम् ॥२७॥

धृषेः क्युः स्यात्, धिष इत्ययं चादेशः संज्ञार्थे विषये । ञिधृषा प्रागल्भ्ये । धृष्णात्यनयेति धिषणा—प्रज्ञा । करणम् । संज्ञायां किम् ? धर्षणम् । युच् [५।२३] । संज्ञायामिति वर्त्तमाने पुनः संज्ञाग्रहणं छन्दोऽधिकारनिवृत्त्यर्थम् ॥

## हनो जघ च ॥२८॥

हन्तेः क्युः स्याद् जघ इत्ययं चादेशः । हन हिंसागत्योः अ० । हन्ति हन्यते वा जघनम्—कटिः । कर्त्ता कर्म च ॥

## छन्दस्ययानच् शुजॄभ्याम् ॥२९॥

आभ्यामयानच् स्यात् [छन्दसि]।[4] शु गतौ । शवते [शूयते वा] इति शवयानः। कर्त्ता कर्म च । जॄष् वयोहानौ । जीर्यत इति जरयाणः । कर्त्ता ।

प्राक्प्रत्ययनिर्देशः शरयादीनां प्रसिद्ध्यर्थः । शॄ हिंसायां क्रै० । शृणातीति शरयाणः—अहिः, हिंस्रश्च । कर्त्ता । तॄ प्लवनतरणयोः भौ० । तरतीति तरयाणः ।

---

१. 'किरति तम् इति' इति ह. ।

२. 'निधनम्' इति ह. । ३. 'किरणा' इति ह. ।

४. इतोऽग्रे 'दिवु क्रीडादौ । दीव्यतीति देवयानः । हरयाणः । चौ कर्त्ता कर्म च ।' इत्यधिकमुपलभ्यते ह. ।

**शशाङ्के भास्करे चैव वायावग्नौ प्रजापतौ ।**
**इन्द्रे मनोरथे प्रश्ने तरयाणं स्मरेद् बुधः ।।**[1]

कर्त्ता । वृञ् वरणे सौ० । वृणोति व्रियते वा **वरयाणः**—मनोरथः । कर्त्ता कर्म च ।।

**ऋजिवृधिमन्दिसहिभ्यः कित् ।।३०।।**

एभ्योऽयानच् स्यात् किच्च । ऋजि इति सौत्रो धातुः । ऋञ्जतीति **ऋञ्जयानः**—मेघः । कर्त्ता । वृधु वृद्धौ । वर्धत इति **वर्धयानः**—गर्भः, मृत्युश्च । कर्त्ता । मदि स्तुत्यादिषु । मन्दते इति **मन्दयानः**—स्वप्नः । कर्त्ता ।

**जीवेऽग्नौ भास्करे चैव शशाङ्के हंसके तथा ।**
**मन्दयानं स्मरेद् धीमान् पञ्चस्वर्थेषु संस्थितम् ।।**[2]

षह मर्षणे भौ० । सहते **सहयानः**—क्षमावान् । कर्त्ता ।।

**अर्त्तेर्गुणः शुट् च ।।३१।।**

अर्त्तेरयानच्, गुणश्च शुट् चागमः । ऋ गतौ भौ० । ऋच्छत्यर्यते वा **अर्शयानः**—पन्थाः, इषुर्वा । कर्त्ता कर्म च ।।

**सम्यानच् स्तौतेः ।।३२।।**

सम्युपपदे स्तौतेरानच् स्यात् । ष्टुञ् स्तुतौ आ० । संपूर्वः । संस्तौतीति **संस्तवानः**—वाग्मी । कर्त्ता ।।

**युधिबुधिदृशेः किच्च ।।३३।।**

एभ्य आनच् स्यात् किच्च । युध सम्प्रहारे दै० । युध्यन्त इति **युधानाः**—रिपवः[3] । कर्त्ता । बुध अवगमने भौ० । बोधयन्ति बुध्यन्ते वा **बुधानाः**—आचार्याः । कर्त्ता । दृशिर् प्रेक्षणे । पश्यन्तीति **दृशानाः**—लोकपालाः । कर्त्ता । बहुलकत्वात् **कृपाणः** ।।

**हुर्च्छेः सनो लुक् छलोपश्च ।।३४।।**

हूर्च्छेः सन्नन्तादानच् स्यात्, सनश्च लुग् भवति छकारलोपश्च । हूर्च्छा कौटिल्ये । हूर्च्छितुमिच्छति जुहूर्च्छिषति **जुहुराणः**—कठिनहृदयः । कर्त्ता ।।

**इण्सिञ्दीङुष्यविभ्यो नक् ।।३५।।**

---

१. अनुपलब्धमूलमिदम् । 'शशांक भास्करे चेवणन्यवेनौ प्रजापतौ । इणारथे-प्रश्नेतरश्राणं स्मरेद् बुधः ।।' इत्यन्तभ्रष्टपाठ उपलभ्यते ह. ।

२. अनुपलब्धमूलमिदम् ।

३. 'परिवारः' इति ह. ।

एभ्यो नक् स्यात् । इण् गतौ श्र० । यन्ति तमर्थिन इति इनः—ईश्वरः, कर्म[1]। षिञ् बन्धने सौ० । सिनोति सीयते वा सिनः—कायः, बन्धो वा । कर्त्ता कर्म । दीङ् क्षये दै० । दीयत इति दीनः—दुर्गतिः खिन्नश्च[2] । कर्त्ता । उष दाहे तौ० । उषति उष्यते वाऽनेन शरीरमिति उष्णम्—घर्मः[3]। कर्त्ता करणम् । अव रक्षणादिषु । ऊयत इति ऊनः— असम्पूर्णः । कर्म ॥

## फेनमीनौ ॥३६॥

एतौ नक्प्रत्ययान्तौ निपात्येते । स्फायी वृद्धौ । अस्य फीभावो गुणश्च निपात्यते । स्फायत इति फेनः—बुद्बुद्संघातः । कर्म । मीञ् हिंसायां क्र्यै० । मिनातीति मीनः—जलचरः । कर्त्ता ॥

## कृषेर्वर्णे ॥३७॥

कृषेर्नक् स्याद् वर्णेऽभिधेये । कृष विलेखने भ्वौ० । कृष्यत इति कृष्णः— वर्णः । कर्म ॥

## बन्धेर्ब्रधि बुधि ॥३८॥

बन्धेर्नक् स्यात्, ब्रधि बुधि इत्येतावादेशौ स्तः । बन्ध बन्धने क्र्यै० । बध्नाति बध्यत इति ब्रध्नः—सूर्यः । [बुध्नः—] सङ्कल्पः, मदनो वा । कर्त्ता कर्म च ॥

## [धा]पॄवस्यज्यतिभ्यो नः ॥३९॥

एभ्यो नः स्यात् । डुधाञ् धारणपोषणयोः । धीयन्ते यासां विकारैः प्राणिन इति धानाः—यवविकाराः । कर्त्ता । पॄ पालनपूरणयोः क्र्यै० । पृणाति पूर्यते वा तदिति पर्णम्—पलाशम् । कर्त्ता कर्म च । वस आच्छादने अ० । वस्तेऽनेनेति वस्नम्—वासः । करणम् । अज गतिक्षेपणयोः भ्वौ० । अजतीति वेनः । अत सातत्यगमने भ्वौ० । अततीति अत्नः—आत्मा, वायुः । कर्त्ता ॥

## लक्षेरट् च ॥४०॥

लक्षेर्नः स्यात्, प्रत्ययस्याडागमः । लक्ष दर्शनाङ्कनयोः चौ० । लक्ष्यतेऽनेनार्थ इति लक्षणम्—व्याकरणम् । लक्ष्यतेऽनेन शुभाशुभमिति लक्षणम्— रेखातिलकादिकं च ॥

## सिवेष्टेर्यु च ॥४१॥

सिवेर्नः स्यात् टेश्च 'यु' आदेशः । षिवु तन्तुसन्ताने । सीव्यत्यनेनेति स्योनः—

---

१. 'कर्त्ता' इति ह. । २. 'दुर्गमतिः खनिश्च' इत्यपपाठो ह. ।
३. 'उषति उष्यते वा शरीरनेनेतफलम् । कर्म ।' इत्यशुद्धपाठो ह. ।

रश्मिः[1], आस्तरणम् । करणम्॥

## कॄवृजॄसिद्रुपन्यनिस्वपिभ्यो नित् ॥४२॥

एभ्यो नः स्याद् निच्च । कॄ विक्षेपे । कीर्यत इति **कर्णः**—श्रोत्रम्। वृञ् वरणे सौ० । वृणोति व्रियते वा **वर्णः**—अकारादिः, ब्राह्मणादिः, श्वेतादिः, वर्ण उच्यते । कर्त्ता कर्म च। जॄष् वयोहानौ । जीर्यत इति **जीर्णः**—क्षयधर्मा । कर्म । षिञ् बन्धने सौ० । सिनोतीति **सेना**—बलसंघातः । द्रु गतौ भौ० । द्रवतीति **द्रोणः** । पन इति सौत्रो धातुः। पनोतीति **पन्नः**—नीचैःकरणम् । अन प्राणने । अन्यते तदिति **अन्नम्** । ञिष्वप् शये आ० । स्वपन्त्यनेनाविष्टा इति **स्वप्नः**—निद्रा । करणम् ॥

## धेट ई च ॥४३॥

धेटोर्नः स्यात्, [निच्च, ई चास्यादेशः] । धेट् पाने भौ० । धयन्ति तामिति **धेना**—सरस्वती, माता च ॥

## तृषिशुषिरसिभ्यः किच्च ॥४४॥

एभ्यो नः किच्च । ञितृषा पिपासायाम् । तृष्यतेऽनयेति **तृष्णा**—पिपासा, रागबन्धनं च[2] । करणम् । शुष शोषे दै० । शुष्यतीति **शुष्णम्** । कर्त्ता । रस श्लेषणे भौ० । रसतीति **रस्नम्**—द्रव्यजातिः । कर्त्ता ॥

## सुञो दीर्घश्च ॥४५॥

सुञो नः स्यात् किच्च दीर्घश्च । षुञ् अभिषवे सौ० । सुन्वन्त्यस्यां प्राणिनां शरीराणीति **सूना**—मांसविक्रयद्रोणिः । अधिकरणम् ॥

## रमेस्त च ॥४६॥

रमेर्नः स्यात्, तकारान्तादेशश्च । रमु क्रीडायां भौ० । रमतेऽस्मिन्निति **रत्नम्**—वज्रवैडूर्यादिः । अधिकरणम् ॥

## रास्नासास्नास्थूणावीणाः ॥४७॥

एते शब्दा निपात्यन्ते नप्रत्ययान्ता आद्युदात्ताः । रा दाने, रस श्लेषणे भौ०[3]। रातेः सुडागमो निपात्यते, रसतेर्दीर्घत्वम् । [राति रसति रस्यते वा **रास्ना**—ओषधिः । कर्त्ता कर्म च । षस स्वप्ने आ० । अस्योपधाया दीर्घत्वं निपात्यते । सस्तीति **सास्ना**—गोगलचर्म निद्रा च । कर्त्ता । ष्ठा गतिनिवृत्तौ भौ० । अस्य

---

१. 'राशिः' इति ह. । २. 'गर्ववचनं पिपासा' इति ह. ।
३. 'रा आदाने, रस शब्दे' इति ह. ।

ऊकारादेशो][1] निपात्यते, अगुणत्वं च, णत्वं प्रत्ययस्य । तिष्ठति **स्थूणा**—स्तम्भः । कर्त्ता। अज गतिक्षेपणयोः[2] । अस्य वीभावोऽगुणत्वं च निपात्यते [णत्वं च] । अजति वीयते वा **वीणा** । अथवा वी गत्यादिषु । अस्यागुणत्वं च निपात्यते [णत्वं च]। वेति वीयते वा **वीणा**—वल्लकी । कर्त्ता कर्म च ॥

## गादाभ्यां चेष्णक्[3] ॥४८॥

आभ्यां चेष्णक् स्यात् । गै शब्दे भ्वा० । गायति तस्मिन्निति **गेष्णः**—मखः । कर्म अधिकरणं च । डुदाञ् दाने जौ० । ददातीति **देष्णः**—दानशीलः । कर्त्ता ॥

## कृत्यशूभ्यां क्स्नः[4] ॥४९॥

आभ्यां क्स्नः[4] स्यात् । कृती वेष्टने रौ० । कृणत्ति कृत्यते वा **कृत्स्नम्**—निःशेषम् । कर्त्ता कर्म । अशू व्याप्तौ सौ० । अश्नुत इति **अक्ष्णम्**—तेजनम् । कर्त्ता ॥

## तिजेर्दीर्घश्च ॥५०॥

तिजेः क्स्नः स्याद् दीर्घश्च धातोः । तिज निशाने । तेजनं[5] तितिक्षते वा **तीक्ष्णम्**—निशितम् । भावः कर्त्ता कर्म च ॥

## श्लिषेरच्चोपधायाः ॥५१॥

[श्लिषेः क्स्नः स्याद्, अच्च भवत्युपधायाः ।] श्लिष आलिङ्गने दै० । श्लिष्यत इति **श्लक्ष्णम्**—मृदुः । कर्त्ता ॥

## कृवृतृदारिभ्य उनन् ॥५२॥

एभ्य उनन् स्यात् । कॄ विक्षेपे । किरति मनांसीति **करुणः**—शोचनीयः[6] । कर्त्ता। वृञ् वरणे सौ०। वृणोति व्रियते वा **वरुणः**—अपां पतिः। कर्त्ता कर्म च । तॄ प्लवनतरणयोः भौ० । तरत्यनेनेति **तरुणः**—वायुः । कर्त्ता कर्म । दॄ भये क्रै० ण्यन्तः । दारयतीति दार्यते वा **दारुणः** ॥

---

१. कोष्ठान्तर्गतपाठो नोपलभ्यते ह. ।
२. 'गतौ क्षेपणे च' इति ह. ।
३. 'चेष्णुः' इति ह. । उदाहरणे अपि 'गेष्णुः देष्णुः' इत्युपलभ्येते ।
४. 'स्नः' इति ह. । ५. 'तेजयति' इति ह. ।
६. 'शोभनीयः' इति ह. ।

**पिशेः किच्च ॥५३॥**

पिशेरुनन् स्यात् किच्च । पिश अवयवे । पिशतीति **पिशुनः**—सूचकः । कर्त्ता ॥

**फलेर्गुक् च ॥५४॥**

फलेरुरन् स्याद् गुक् चागमः। फल निष्पत्तौ भ्वा० । फलतीति **फल्गुनः**—पार्थः । कर्त्ता ॥

**लपेः शश्च ॥५५॥**

लपेरुनन् स्यात् शकारान्तादेशश्च । लप व्यक्ते वचसि भ्वा० । लपति लप्यते वा **लशुनम्**—पलाण्डुजातिः । कर्त्ता कर्म च ॥

**त्रो रश्च लः ॥५६॥**

तॄधातोरुनन् स्याद् रेफस्य च लादेशः । तॄ प्लवनतरणयोः । तरति सर्वमिति **तलुनः**—वायुः ।

बहुलकत्वात् **तरुण** एव भवति ॥

**[अर्जेर्णिलुक् च ॥५७॥]**

अर्जेरुनन् स्यात्, णिलुक् च । अर्ज सर्ज अर्जने ण्यन्तः[1] । अर्जयतीति **अर्जुनः**—वृक्षः । कर्त्ता ॥

**तृणाख्यायां चित् ॥५८॥**

तृणाख्यायां गम्यमानायामर्जेरुनन् स्यात्,चित्संज्ञको णिलुक् । अर्जयतीति **अर्जुनम्**। कर्त्ता ॥

**अर्त्तेश्च ॥५९॥**

अर्त्तेरुनन् स्यात् चित्संज्ञकः । ऋ गतौ भ्वा० । ऋच्छत्यर्यते वा **अरुणः**—वैनतेयः। कर्त्ता [कर्म] च ॥

**अजियमिशीङ्भ्यश्च ॥६०॥**

एभ्य उनन् स्यात्, चित्संज्ञकः। अज गत्यादिषु । अजति वीयते वा **वयुनः**—चन्द्रमाः । **वयुनानि**—अङ्गानि[2] । कर्त्ता कर्म च । यम उपरमे । यच्छति भक्तानां पापमिति **यमुना**—नदी । कर्त्ता । शीङ् स्वप्ने । अत्यर्थं शेत इति **शयुनः**—अजगरः । कर्त्ता ॥

---

१. 'पण्यः' इति ह. । २. 'वयुनः—चन्द्रो वायुरङ्गानि' इति ह. ॥

### तृहेः क्नन् हलोपश्च ॥६१॥

तृहेः क्नन् स्याद् हलोपश्च । तृह हिंसायाम् । तृह्यते तद् गवादिभिरिति **तृणम्**—वृक्षः । कर्म ॥

### अर्त्तेर्युच्च ॥६२॥

अर्त्तेर्युच् स्याद् उच्चास्यादेशः । ऋ गतौ । ऋच्छत्यर्यते वा **उरणः**—पशुः, मेषः, उलूको वा । कर्त्ता कर्म च ॥

### ऊर्णोतेर्डः ॥६३॥

ऊर्णोतेर्डः स्यात् । ऊर्णुञ् आच्छादने आ० । ऊर्णोतीति **ऊर्णा**—अविलोमानि । कर्त्ता ॥

॥ इति णकारो नसहितः ॥

॥ इत्युणादिवृत्तौ पञ्चमः पादः ॥

---

# [॥ अथ षष्ठः पादः ॥]

## मृग्रोरुतिः ॥१॥

आभ्यामुतिः स्यात् । मृङ् प्राणत्यागे । म्रियतेऽसौ न कदाचिदिति **मरुत्**— वायुः, **मरुतः**—देवाः । कर्त्ता । गॄ निगरणे, गॄ शब्दे तौ० । गणाति गिरति वा **गरुत्**— अजगरः[1] । कर्त्ता । गृणाति गीर्यते वा **गरुत्**—मरकतमणिः । कर्त्ता कर्म च ॥

## गर्मुत् ॥२॥

'गर्मुत्' इत्ययं शब्दो निपात्यते उतिप्रत्यये निरुद्धः[2] । गॄ शब्दे, गॄ निगरणे । अनयोरुतिप्रत्यये मुमागमो निपात्यते । गिरति [गृणाति] गीर्यते वा **गर्मुत्**—आदित्यः, सुवर्णो वा । कर्त्ता कर्म च ॥

## हृसृरुहियुषिभ्य इतिः ॥३॥

एभ्य इतिः स्यात् । हृञ् हरणे, [हृ] प्रसह्यकरणे । हरति जिहर्त्ति ह्रियते[3] असाविति **हरित्**— वायुः, मृगजातिश्च । कर्त्ता कर्म च । सृ गतौ भ्वौ० जौ० । धावति सिसर्त्तीति वा **सरित्**— नदी । कर्त्ता । [रुह बीजजन्मनि भ्वौ० । रोहतीति **रोहित्**—वीरुत्प्रकारः, सूर्यः, अग्निश्च । कर्त्ता ।] युष सौत्रो धातुः । योषति[4] युष्यते वा **योषित्**—प्रमदा । कर्त्ता कर्म च ॥

## ताडेर्णिलुक् च[5] ॥४॥

ताडेरितिः स्यात् [णिलुक् च] । तड आघाते चौ० ण्यन्तः । ताडयति मेघान् ताड्यते वा **तडित्**—शतह्रदा । कर्त्ता कर्म च ॥

## वर्तमाने पृषद्बृहन्महज्[6] [जगच्] छतृवच्च ॥५॥

वर्तमाने काले पृषदादयो निपात्यन्ते, शतृवच्चैषां कार्यं भवति । पृषु सेचने भ्वौ० । अस्य कर्तरि निपात्यते । पर्षतीति **पृषत्** । अथवा पॄ पालनपूरणयोः, अस्य ह्रस्वत्वं षुक् [च] । पृणाति पिपर्त्तीति वा **पृषत्**—चित्रमृगजातिः, सीकरश्च । कर्त्ता कर्म च । बृह बृहि

---

१. 'अजराजः' इति ह. ।  २. 'निपात्यते निगृहारणे' इति ह. ।
३. 'हृदये' इति ह. ।  ४. 'धातुः । युष् भजने । योषयति' इति ह. ।
५. 'तडेनिलुका' इत्यपपाठो ह. ।  ६. '०रुहत्०' इति ह. ।

वृद्धौ। अस्य नकारलोपो निपात्यते। बृंहतीति **बृहत्**—विस्तीर्णम्। कर्त्ता। मह पूजायां चौ० ण्यन्तः, प्रकृत्यन्तरं वा। महति महयतीति **महत्**—पूजितम्, विस्तीर्णं च। गम्लृ गतौ भौ०। अस्य द्विर्वचनं टिलोपश्च। अहरहः क्षयं गच्छतीति **जगत्**—स्थावरजङ्गमो लोकः। कर्त्ता।

सर्व एते कतिप्रत्ययान्ताः। शतृवदतिदेशान्नुमादिकं कार्यम्। **पृषती**—मृगी। **बृहती** छन्दसीत्येव वा। **महती**। [**जगती**—] पृथिवी।

वर्तमानग्रहणाधिकारे पुनर्वर्तमानग्रहणं नियमार्थम्। वर्तमान एव पृषदादयः शब्दाः साधवो भवन्ति नान्यस्मिन्निति॥

**संश्चत्तृपद्वेहत्॥६॥**

एते शब्दा निपात्यन्ते कतिप्रत्यये निरूढाः। चिञ् चयने सौ० सम्पूर्वः। धातोरिलोपो निपात्यते उपसर्गस्य सकारादेशोऽनुस्वारागमश्च। संचिनोतीति **संश्चत्**—कुहकः[1]। कर्त्ता। तृप प्रीतौ दै० तौ०, तृह हिंसायां रौ०, तृहू[2] हिंसार्थः तौ०। अनयोः पकारादेशो निपात्यते। तृप्यति तृपति तृणेढि तृहतीति **तृपत्**—चन्द्रमाः। कर्त्ता। हन हिंसागत्योः विपूर्वः। अस्य टिलोपो निपात्यते उपसर्गस्य गुणः। विहन्ति गर्भमिति **वेहत्**—अप्रजा स्त्री मृतापत्या वा अनड्वांश्च। कर्त्ता॥

**हसिमृग्रिण्वामिदमितमिलूपूधूर्विभ्यस्तन्[3]॥७॥**

एभ्यस्तन् स्यात्। हस हसने भौ०। हसतीति **हस्तः**—पाणिः। कर्त्ता। मृङ् प्राणत्यागे तौ०। म्रियत इति **मर्तः**—प्राणी। कर्त्ता। गॄ निगरणे, गॄ शब्दे क्रै०। गिरति गृणाति वा **गर्त्तः**—अवटः। कर्त्ता। इण् गतौ अा०। एतीति **एतः**—वायुः, पथिकश्च। कर्त्ता। वा गतिगन्धनयोः अा०। वातीति **वातः**—मातरिश्वा। कर्त्ता। अम गत्यादिषु। अम्यतेऽसाविति **अन्तः**—अस्य पूर्वोऽस्ति न परः सः। कर्म। दमु उपशमे दै०। दाम्यति स्थविरत्वादिति **दन्तः**—रदनः। कर्त्ता। तमु ग्लानौ दै०। ताम्यतीति **तन्तः**—वीणावाद्यम्। कर्त्ता। लूञ् छेदने क्रै०। लुनाति लूयते वा **लोतम्**—अश्रु, लवणञ्च। कर्त्ता कर्म च। पूञ् पवने क्रै०। पुनाति पूयते वा **पोतः**—अग्निः, समुद्रयानम्, बडिम्भः[4]। कर्त्ता कर्म च। धुर्वि हिंसायां भौ०। धूर्वतीति **धूर्तः**—शठः। कर्त्ता॥

**तनिमृङ्भ्यां किच्च॥८॥**

---

१. 'कुशकः' इति ह.।
२. 'तृन्हू' इति ह.।
३. '०भ्यह्यहन्' इत्यपपाठो ह.।
४. 'समुद्रयानडिम्भः' इति ह.।

आभ्यां तन् स्यात् किच्च । तनु विस्तारे । तनोति तन्यते वा **ततम्**—विस्तीर्णम् । कर्त्ता कर्म च । मूङ् बन्धने भौ० । मवते मूयते[1] वा **मूतः**—आलानपाशः, अन्यद्वा बन्धनम् । कर्त्ता कर्म च ॥

**अञ्जिघृसिभ्यः क्तः ॥९॥**

अञ्जिघृसिभ्यः क्तः प्रत्ययो भवति । अञ्जू अक्षणकान्तिगतिषु रौ० । अनक्ति अज्यते वा **अक्तम्**—अक्षितम् । कर्त्ता कर्म च । घृ क्षरणदीप्त्योः जौ० । जिघर्त्तीति **घृतम्** । षिञ् बन्धने सौ० । सिनोतीति **सितम्**—शुक्लम्, बन्धश्च । कर्त्ता ॥

**दुतनिभ्यां दीर्घश्च ॥१०॥**

आभ्यां क्तः स्याद् दीर्घश्चानयोः । टुदु उपतापे सौ० । दुनोति **दूतः**—सन्धानकृत् । कर्त्ता । [तनु विस्तारे ता०] । तनोतीति **तातः**—पिता । कर्त्ता ॥

**जेर्मुट् चोदात्तः ॥११॥**

जेः क्तः स्यात्, मुडागमश्चोदात्तः, दीर्घश्च धातोः । जि जये । जयतीति **जीमूतः**—मेघः । कर्त्ता ॥

**हृश्याभ्यामितच् ॥१२॥**

आभ्यामितच् स्यात् । हृञ् हरणे, [हृ प्रसह्यकरणे जौ०] । हरति जिहर्त्ति वा **हरितः**—वर्णः । श्यैङ् गतौ भौ० । श्यायत इति **श्येतः**—वर्णः ॥

**रुहे रश्च लो वा ॥१३॥**

अस्मादितच् स्यात् [रेफस्य लकारो वा । रुह बीजजन्मनि भौ० । रोहतीति **रोहितः, लोहितः**—वर्णः । कर्त्ता ॥

**भृदृशीङ्यजिपर्वपच्यमिनमिहर्यिभ्योऽतच् ॥१४॥]**[2]

एभ्योऽतच् स्यात् । डुभृञ् धारणपोषणयोः । बिभर्त्ति[3] **भरतः**—राजा । कर्त्ता । दृङ् आदरे तौ० । द्रियत इति **दरतः**—आदरी । कर्त्ता । शीङ् स्वप्ने । शेतेऽत्यर्थमिति **शयतः**—निद्रालुः । कर्त्ता । यज देवपूजादिषु भौ० । यजति **यजतः**[4]—अग्निः, यजमानो वा । कर्त्ता । पर्व पूरणे भौ० । पर्वति **पर्वतः**—गिरिः । कर्त्ता । डुपचष् पाके । पचतीति **पचतः**—अग्निरादित्यो वा । कर्त्ता । अम गत्यादिषु । अमतीति **अमतः**—आतङ्को

---

१. 'मवति' इति ह. ।
२. कोष्ठान्तर्गतपाठोऽस्पष्टो ह. । ३. 'भरति' इति ह. ।
४. 'जयति जयतः' इत्यशुद्धो ह. ।

मृत्युर्वा । कर्त्ता । णम प्रह्वत्वे शब्दे च । नमति नम्यते वा नमतः—नटो देवो वा । कर्त्ता कर्म च । तमु काङ्क्षायां दे० । ताम्यतीति तमतः[1] । हर्य गतिकान्त्योः भ्वा० । हर्यतीति हर्यतः—वायुः, अश्वो वा, अग्निः, कान्तिश्च । कर्त्ता ॥

## पृषिरञ्जिभ्यां कित् ॥१५॥

आभ्यामतच् स्यात् स च कित् । पृषु सेचने । पर्षतीति[2] पृषतः—मृगः । कर्त्ता । रञ्ज रागे । रजन्तेऽस्मिन् जना इति रजतम्—रूप्यम् । अधिकरणम् ॥

## खलतः ॥१६॥

खलत इत्ययं शब्दो निपात्यतेऽतच्प्रत्यये । स्खल स्खलने भ्वा० । अस्य सकार-लोपो निपात्यते । स्खलिताः केशा यस्यासाविति खलतः—विकीर्णकेशः । कर्त्ता । भूतकालः ॥

## जॄविशिभ्यां झच् ॥१७॥

आभ्यां झच् । जॄष् वयोहानौ । जीर्यत इति जरन्तः—भूतग्रामः । कर्त्ता । विश प्रवेशने । विशतीति वेशन्तः—अप्राप्तवर्गः, कान्तश्च[3] ॥

## रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि ॥१८॥

एभ्यो झच् स्याद् आशिषि षिच्च । रुह बीजजन्मनि । रुह्यादिति रोहन्तः—वीरुत् । रोहन्ती स्त्री । कर्त्ता । टुनदि समृद्धौ । नन्द्याद् नन्दन्तः, नन्दन्ती[4] स्त्री । जीव प्राणधारणे । जीव्यात् [जीवन्तः] । जीवन्ती—ओषधिः । अन प्राणने प्रपूर्वः । प्राण्यात् प्राणन्तः—वायुः, रसायनं च । प्राणन्ती स्त्री । षित्करणं ङीषर्थम् । भविष्यत्कालः ॥

## तॄभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च ॥१९॥

एभ्यो झच् स्याद् आशिषि षिच्च । तॄ प्लवनतरणयोः । तीर्यात् तरन्तः—आदित्यः । भू सत्तायाम् । भवन्तः—कालः । भवन्ती स्त्री । वह प्रापणे भ्वा० । उह्याद् वहन्तः—वायुः । वस निवासे । उष्याद् वसन्तः—ऋतुः[5] । [भासृ दीप्तौ भ्वा० ।] भासिषीष्ट भासन्तः—सूर्यः । साध संसिद्धौ स्वा० । साध्यात् साधन्त—भिक्षुः । गड सेचने भ्वा० । गड्यात् गडन्तः—जलदः । मडि भूषायाम् । मण्ड्यात् मण्डन्तः—अलङ्कारः । जि

१. 'ताम्यतीति तमः । तमा दीर्घश्च' इत्यपपाठो ह. ।
२. 'पृषतीति' इति ह. ।
३. 'आप्तवर्गः, खातं च' इति ह. ।
४. 'नन्दयन्तः, नन्दयन्ती' इति ह. ।
५. 'रासत् ऋतुः' इति ह. ।

अभिभवे। जीयात् जयन्तः—राजा। जयन्ती -पुष्पजातिः। टुनदि समृद्धौ भ्वा०। नन्द्यात् नन्दयन्तः—आनन्दः। कर्त्ता। भविष्यत्कालः। केचिद् वर्णयन्ति वर्तमानेऽपि वाशिषि॥

### हन्तेर्मुक् [हि] च ॥२०॥

हन्तेर्झच् स्यात्,मुक् चागमो हिरादेशश्च। हन हिंसागत्योः। हन्ति तांस्तान् दुर्गतान् सत्त्वानिति हेमन्तः—ऋतुः। कर्त्ता॥

### उचिकुत्सि[1]कुषिभ्यः कितच् ॥२१॥

एभ्यः कितच् स्यात्। उच समवाये दै०। उच्यतीति उचितम्—वंशागतम्[2]; श्रेष्ठम्। कर्त्ता। कुत्स[3] श्लेषणे। कुत्स्यते कुत्स्यति वा कुत्सितम्—श्लिष्टम्। कर्म कर्त्ता। कुष निःकर्षणे। कुष्यत इति कुषितम्—निःकृतम्। कर्त्ता॥

### अदि भुवो डुतच् ॥२२॥

अद्युपपदे भुवो डुतच् स्यात्। भू सत्तायाम् अत्पूर्वः। अद्भूयते अद्भवतीति अद्भुतम्—आश्चर्यम्। भावः कर्त्ता कर्म च॥

### सौ रमेः क्तो दमे पूर्वपदस्य च दीर्घः ॥२३॥

सावुपपदे रमेः क्तः स्याद् दमे गम्यमाने पूर्वपदस्य च दीर्घः। रमु क्रीडायां [सूपूर्वः]। सुष्ठु रमते सूरतः—दमितो हस्ती, अन्यो वा दान्तः[4]। कर्त्ता॥

### फलेरितजादेश्च पः ॥२४॥

फलेरितच् स्याद् आदेश्च पः। ञिफला विशरणे भ्वा०। फलतीति पलितम्—केशविकारः। कर्त्ता॥

### जनेस्तो रश्च ॥२५॥

जनेस्तः स्याद् रश्चान्तादेशः। जनी प्रादुर्भावे दै०। जायत इति जर्तः—वस्त्रलोम। कर्त्ता॥

### शकेर्ऋतिन्[5] ॥२६॥

---

१. 'कुशि०' इति ह.। परन्तूदाहरणं 'कुत्सितम्' इत्येव वर्त्तते।
२. 'वशंगतम्' इति ह.।
३. 'कुश' इति ह.।
४. 'अन्ये च दीनाः' इति ह.।
५. 'कृतिन्' इति ह.।

ऋतिन्[1] प्रत्ययः शकेर्धातोर्भवति । शक्लृ शक्तौ । शक्नोतीति **शकृत्**—विष्ठा । कर्त्ता ॥

॥ इति तकारः ॥

## हनिकुषिनीरमिकाशिभ्यः क्थन् ॥२७॥

एभ्यः क्थन् स्यात् । हन हिंसागत्योः आ० । हन्तीति **हथः**—कालः । कर्त्ता । कुष निःकर्षे । कुष्णातीति[2] **कुष्ठम्**—व्याधिः । कर्त्ता । णीञ् प्रापणे भौ० सुपूर्वः । शोभनं नयतीति **सुनीथः**—नीतिमान्, धर्मज्ञश्च[3] । कर्त्ता । रमु क्रीडायां भौ० । रमन्तेऽस्मिन् प्राणिन इति **रथः**—स्यन्दनः । अधिकरणम् । काशृ दीप्तौ । काश्यतेऽनेनाग्निरिति **काष्ठम्**—इन्धनम् । करणम् ॥

## अवे भृञः ॥२८॥

अवे उपपदे भृञो धातोः क्थन् स्यात् । डुभृञ् धारणपोषणयोः जौ० । अवबिभ्रति जना अस्मादिति **अवभृथः** । अपादानम् ॥

## उषिकुषिगार्त्तिभ्यस्थन् ॥२९॥

एभ्यस्थन् स्यात् । उष दाहे । उष्यतेऽसौ कदुष्णैर्व्यञ्जनैरिति **ओष्ठः** । उष्यते वा वास्तुनोत्पन्नेनोष्मणा इति **ओष्ठः**—दन्तच्छदः । कर्म । कुष निःकर्षे । कुष्णाति कुष्यते वा तस्मिन्नाहारमिति **कोष्ठम्**—उदरम् । कर्त्ता अधिकरणम् । गै शब्दे भौ० । गायन्ति तामिति **गाथा**—वृत्तजातिः । कर्म । ऋ गतिप्रापणयोः । ऋच्छत्यर्यते वासाविति **अर्थः**—धनम्, वाङ्मयवृत्तिश्च । [कर्त्ता] कर्म ॥

## सर्त्तेर्णित् ॥३०॥

सर्त्तेस्थन् स्याद् णिच्च । सृ गतौ भौ०, जौ० । स्रियते धावति सिसर्त्तीति **सार्थः**—पथिकसंघातः । कर्त्ता कर्म च ॥

## जॄवृभ्यामूथन् ॥३१॥

आभ्यामूथन् स्यात् । जॄ वयोहानौ दि० । जीर्यते **जरूथम्**—कश्मलम्, अन्यद्वा । वृञ् वरणे सौ० । वृणोति व्रियते वा **वरूथम्**—रथगुप्तिः । कर्त्ता कर्म च ॥

## पातृतुदिवचिरिचिसिचिभ्यस्थक् ॥३२॥

---

१. 'कृतिन्' इति ह. ।

२. 'कुष्यती' इति ह. ।

३. 'धर्मश्च' इति ह. ।

एभ्यस्थक् स्यात् । पा पाने । पिबति तेजांसि **पीथः**—आदित्यः, मकरश्च । कर्त्ता । तॄ प्लवनतरणयोः । तरति तीर्यते वा [अनेन] **तीर्थम्**—पुण्यनदीजलविशेषः । कर्त्ता करणम् । तुद व्यथने । तुदति [तेन] तस्मिन्निति **तुत्थम्**—द्रव्यम् । करणमधिकरणं च । वच परिभाषणे । उच्यते तदिति **उक्थम्**—साम । कर्म । रिचिर् विरेचने । रिच्यते तदिति **रिक्थम्**—गृहधनम्, मैत्रद्रव्यं च । सिच क्षरणे[1] । सिच्यते तदिति **सिक्थम्**—मधूत्थम् । कर्म ॥

**अर्त्तेर्निरि ॥३३॥**

अर्त्तेर्निरुपपदे थक् स्यात् । ऋ गतौ भ्वा० । नियतं निश्चितमृच्छत्यर्यते वा **निरृथम्**—स्थानम् । कर्त्ता कर्म च ॥

**निशीथगोपीथावगथाः ॥३४॥**

एते निपात्यन्ते थक्प्रत्यये निरूढाः । शीङ् स्वप्ने अ० निपूर्वः । नितरां शेरतेऽस्मिन् प्राणिन इति **निशीथः**—अर्धरात्रः । अधिकरणम् । पा पाने गोशब्दपूर्वः । गावः पिबन्ति तस्मिन्निति **गोपीथः**—जलद्रोणिः । अधिकरणम् । गम्लृ गतौ अवपूर्वः । गमेर्लोपो निपात्यते । अवगच्छत्यस्मिन्निति **अवगथः**—प्रातःसवनम् । अधिकरणम् । गायतेर्ह्रस्वत्वं निपात्यते । अवगायन्ति तदिति[2] **अवगथम्**—साम । कर्म ॥

**गश्चोदि ॥३५॥**

गाधातोस्थक् स्याद् उद्युपपदे । गै शब्दे । उद्गायतीति उद्गीयते वा **उद्गीथः**—साम । कर्त्ता [कर्म च] ॥

**समीणः ॥३६॥**

सम्युपपद इणस्थक् स्यात् । इण् गतौ अ० । समेति समीयते वा **समिथः**—सङ्गमः । कर्त्ता कर्म च ॥

**तिथपृष्ठगूथयूथप्रोथाः ॥३७॥**

एते शब्दा निपात्यन्ते थक्प्रत्यये निरूढाः । ष्ठा गतिनिवृत्तौ, तिम आर्द्रीभावे । तिष्ठतेस्ति आदेशो निपात्यते, तिम्यतेरन्तलोपो निपात्यते । तिष्ठतीति **तिथः**—कालस्थितिः । कर्त्ता । तिम्यतीति **तिथः**—प्रावृट्कालः । कर्त्ता । स्पृश[3] संस्पर्शने । अस्य सलोपो निपात्यते । स्पृशति स्पृश्यते वा **पृष्ठम्**—शरीरैकदेशः । कर्त्ता कर्म च । गुङ् अव्यक्ते शब्दे । अस्य दीर्घत्वम् । गवते गूयते वा **गूथम्**—अमेध्यम् । कर्त्ता कर्म च ।

१. 'षिचि प्रक्षेपणे' इति ह. । २. 'तस्मिन्निति' इति ह. ।
३. 'स्पर्श' इति ह. ।

यु मिश्रणे । अस्य दीर्घत्वं निपात्यते । युवन्ति तस्मिन्निति **यूथः**—गजादिसंघातः । अधिकरणम् । यवनं **यूथः** । भावः । प्रुङ् गतौ । अस्य गुणो निपात्यते । प्रवत इति **प्रोथः**—वराहमुखम् । कर्त्ता ॥

**शीङ्शपिरुगमिवन्दिजीविप्राणिभ्योऽथः ॥३८॥**

एभ्योऽथः स्यात् । शीङ् स्वप्ने आ० । शेतेऽत्यर्थमिति **शयथः**—अजगरः, वराहश्च । कर्त्ता । शप आक्रोशे । शपत्यनेनेति **शपथः**—प्रत्ययः। करणम् । रु शब्दे। रौतीति **रवथः**—शब्दकारः । कर्त्ता । गम्लृ गतौ भौ० । गच्छति गम्यते वा **गमथः**—पथिकः, पन्थाश्च[1] । कर्त्ता कर्म च । वदि अभिवादनस्तुत्योः । वन्दते वन्द्यते वा **वन्दथः**—स्तोता, स्तुत्यं च । कर्त्ता कर्म च । जीव प्राणधारणे भौ०, प्रकृत्यन्तरं ण्यन्तो वा । जीवति जीवयतीति वा **जीवथः**—बलवानीश्वरः। कर्त्ता । अन प्राणधारणे आ० प्रपूर्वः । प्राणितीति **प्राणथः**—बलवान्, ईश्वरश्च[2] । कर्त्ता ॥

**आङि वसेः ॥३९॥**

आङ्युपपदे वसेरथः स्यात् । वस निवासे भौ० । एतस्मिन्नावसतीति **आवसथः**—आलयः । अधिकरणम् ॥

**भृञश्चित् ॥४०॥**

भृञोऽथः प्रत्ययो भवति चित्संज्ञः । डुभृञ् धारणपोषणयोः जौ०,भृञ् भरणे भौ०। बिभर्त्ति भरति वा **भरथः**—लोकपालः । कर्त्ता ॥

**रुदिविदिभ्यां कित् ॥४१॥**

आभ्यामथः स्यात् चित्संज्ञः किच्च । रुदिर् अश्रुविमोचने आ० । रोदित्यर्थमिति **रुदथः**—शिशुः, असवो वा । कर्त्ता । विद ज्ञाने । वेत्तीति **विदथः**—ज्ञानी । कर्त्ता ॥

॥ इति थकारठकारसहितः[3] ॥

**शॄदॄभसोऽदिः[4] ॥४२॥**

एभ्योऽदिः स्यात् । शॄ हिंसायाम् । शीर्यन्तेऽस्यां गुल्मवनस्पतीनां तेजांसीति **शरत्**—ऋतुः । अधिकरणम् । दॄ भये । दृणाति दीर्यते वा **दरत्**—म्लेच्छदेशः । कर्त्ता कर्म च । भस भर्त्सनदीप्त्योः जौ० । बभस्ति भस्यते तस्मिन्नाहार इति **भसत्**—आमाशयस्थानम् । अधिकरणम् ॥

**त्यजितनियतिभ्यो डित् ॥४३॥**

१. 'अधिकपथाश्च' इति ह. ।
२. 'बलवान्वादश्च' इति ह. ।
३. 'इति थकारः' इति ह. ।
४. 'शॄदॄभरसादिः' इत्यपपाठो ह. ।

एभ्योऽदिः स्याद् डिच्च। त्यज वयोहानौ भ्वा०। त्यजत इति त्यत्—परोक्ष-वाची। [तनु विस्तारे ता०। तनोतीति तत्—अयं च परोक्षवादी। कर्त्ता।] यती प्रयत्ने भ्वा०। यतत इति यत्—

**प्रत्यक्षे च परोक्षे च समीपे दूरतस्तथा।**
**सर्वेषां च प्रयोक्तव्यस्तथा स्त्रीपुंनपुंसके[1]॥**

कर्त्ता। सर्वेषां नामान्येतानि॥

## [एतेस्तुट् च ॥४४॥]

एतेरदिः स्यात् तुडागमः। इण् गतौ अ०। एतीति एतत्—प्रत्यक्षवाची। कर्त्ता। एतदपि सर्वनामैव॥

## दृणातेः षुग्घ्रस्वश्च ॥४५॥

दृणातेरदिः स्यात्, षुक्चागमः, ह्रस्वश्च धातोः। दॄ विदारणे क्र्या०। दृणाति दीर्यते वा [अस्याम्] दृषत्—शिला। कर्त्ता अधिकरणं च॥

## कुणिपुल्योः किन्दच् ॥४६॥

आभ्यां किन्दच् स्यात्। कुण शब्दोपकरणयोः तु०। कुणतीति कुणिन्दः—शब्दः, उपकरणं च। कर्त्ता। पुल महत्त्वे भ्वा०। पोलतीति पुलिन्दः—मनुष्यजातिः। कर्त्ता॥

## कुपेर्वश्च वा ॥४७॥

कुपेः किन्दच् स्याद् वश्चान्तादेशो भवति। कुप क्रोधे दि०। कुप्यतीति कुविन्दः, कुपिन्दः—तन्तुवायः। कर्त्ता॥

## शोशपतिभ्यां ददनौ ॥४८॥

आभ्यां दश्च दंश्च प्रत्ययौ भवतः। शो तनूकरणे दि०। श्यति [शायते वा] शादः—मृदुः। कर्त्ता कर्म च। शप आक्रोशे भ्वा०। शपन्तेऽनेनेति शब्दः। "घुटां तृतीयश्चतुर्थे[षु]" [कातन्त्रे ३।८।८] इति योगविभागादचतुर्थेऽपि तृतीयो भवति। घोषः संस्कृतवाक्। करणम्॥

## अब्दादयश्च ॥४९॥

अब्दादयः शब्दा निपात्यन्ते दप्रत्यये निरूढाः। आप्लृ व्याप्तौ स्वा०। अस्य ह्रस्वत्वं निपात्यते बश्चान्तादेशः। आप्नोत्यसौ सूर्ययोर्नि[2] निमेषादिकालमिति अब्दः—संवत्सरः। कर्त्ता। मनु अवबोधने ता०, मन ज्ञाने। मनुते मन्यते वा मन्दः—

---

१. अनुपलब्धमूलमिदम्। २. 'सूर्याः' इति ह.।

अप्रगल्भः । कर्त्ता । वृहि वृद्धौ भ्वा० । अस्य लोपो निपात्यतेऽगुणत्वं च । वृंहति वृंह्यते वा **वृन्दम्**—संघातः । कर्त्ता कर्म च । कमु कान्तौ भ्वा० । अस्योपधाया उत्वं निपात्यते । काम्यत इति **कुन्दः**—पुष्पजातिः । कर्म[1] ॥

## युष्यसिभ्यां मदिक् ॥५०॥

आभ्यां मदिक् स्यात् । युष इति सौत्रो धातुः । युष्यत इति **युष्मत्** । अस भुवि । अस्तीति **अस्मत्** । कर्त्ता ॥

॥ दकारः ॥

## कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः ॥५१॥

एभ्यः कनिन् स्यात् । यु मिश्रणे आ० । यौति यूयते वा **युवा**—तरुणः । कर्त्ता कर्म च । वृषु सेचने भ्वा० । वर्षतीति **वृषा**—महेन्द्रः, वृषभश्च । कर्त्ता । तक्षू तनूकरणे [सौ०] भ्वा० । तक्ष्णोति तक्षति **तक्षा**—शिल्पी । कर्त्ता । राजृ दीप्तौ भ्वा० । राजतेऽत्यर्थमिति **राजा**—नृपः । कर्त्ता । धन्व इति सौत्रो धातुः । धन्वति **धन्वा**—कुत्सितो देशः । कर्त्ता । द्यु अभिगमे आ० । द्यूयतेऽसाविति **द्युवा**—अभिगमनीयः । कर्म[2] । दिवु क्रीडादिषु प्रतिपूर्वः । प्रतिदीव्यते तस्मिन्निति **प्रतिदिवा**—दिवसः । अधिकरणम् ।

प्राक्प्रत्ययनिर्देशोऽक्षादिप्रसिद्धयर्थः। अन्येभ्योऽपि दृश्यते । अन्येभ्यः कनिन् दृश्यते । अक्षू व्याप्तौ संघाते च । अक्ष्णोतीति **अक्षा**—दृष्टिपातः । कर्त्ता । ईश ऐश्वर्ये आ० । ईष्टेऽसाविति **ईशा**—परमात्मा । लूञ् छेदने । लुनातीति **लुवा**—दात्रम् । कर्त्ता ॥

## नञि जहातेः ॥५२॥

नञ्युपपदे जहातेः कनिन् स्यात् । ओहाक् त्यागे । न जहातीति **अहः**—दिवसः ।

## सप्यशूभ्यां तुट् च ॥५३॥

आभ्यां कनिन् स्यात् तुट् चागमः । षप समवाये । सपन्तीति **सप्त**[3]—संख्या । कर्त्ता । अशू व्याप्तौ । अश्नुत इति **अष्टौ**—संख्यैव । कर्त्ता ॥

## नुदंशेर्गुणश्च ॥५४॥

आभ्यां कनिन् स्याद् गुणश्च । णु स्तुतौ । नौति **नव** । दंश दशने भ्वा० । दशतीति **दश**—संख्यैव । कर्त्ता ॥

## श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्[स्नेहन्]मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन् ॥५५॥

एते शब्दा निपात्यन्ते कनिन्प्रत्यये निरूढाः । टुओश्वि गतिवृद्धयोः भ्वा० । अस्ये-

---

१. 'कर्त्ता कर्म च' इति ह. ।
२. 'कर्त्ता' इति ह. ।
३. 'शरंत इति शप्ता' इत्यपपाठो ह. ।

कारलोपो निपात्यते। श्वयति धाष्ट्यद्धार्यमाणेऽपि **श्वा**—कुक्कुरः। कर्त्ता। उक्ष सेचने। उक्षतीति **उक्षा**—वृषः। कर्त्ता। पुष पुष्टौ क्र्°, दि°, भ्वा°। अस्योपधाया दीर्घत्वं निपात्यते। पुष्णाति पुष्यति पोषयति **पूषा**—आदित्यः। कर्त्ता। प्लिह गतौ। अस्योपधाया दीर्घत्वं निपात्यते। प्लेहत इति **प्लीहा**—व्याधिः, अध्वगः। कर्त्ता। क्लिदू आर्द्रीभावे। [अस्य गुणो निपात्यते।] क्लिद्यतीति **क्लेदा**—शशी, विचर्चिका च। कर्त्ता। ष्णिह प्रीतौ। अस्य गुणो निपात्यते। स्निह्यतीति **स्नेहा**—शीतांशुः सुहृच्च। कर्त्ता। मुह वैचित्र्ये। अस्योपधाया दीर्घत्वं निपात्यते धश्चान्तादेशो रुडागमश्च निपात्यते। मुह्यन्ति अस्मिन् आहताः प्राणिन इति **मूर्द्धा**—उत्तमाङ्गम्। अधिकरणम्। टुमस्जो शुद्धौ। मज्जत्यस्थिष्विति **मज्जा**[1]—अस्थ्यन्तः सारः। कर्त्ता। ऋ गतौ भ्वा°। अस्य गुणो निपात्यते युगागमश्च प्रत्ययस्य चामुडागमः[2]। ऋच्छत्यर्यते वा **अर्यमा**—देवः। कर्त्ता कर्म च। प्सा भक्षणे अ०। अस्य विश्वशब्द उपपदे। विश्वं प्सातीति **विश्वप्सा**—अग्निः। कर्त्ता। जनी प्रादुर्भावे दि°। अस्य परिशब्द[3] उपधालोपो मश्चान्तादेशो निपात्यते। परिजायतेऽसाविति **परिज्मा**—चन्द्रः, अग्निश्च। कर्त्ता। टुओश्वि गतिवृद्ध्योः। [अस्य] द्वितीयान्ते मातृशब्द उपपदे सप्तम्येकवचनं समासकरणमिकारलोपश्च[4] निपात्यते [सम्प्रसारणाभावश्च]। मातरं श्वयतीति **मातरिश्वा**—वायुः। कर्त्ता। [मह पूजायां भ्वा°। अस्य घोऽन्तादेशो वुगागमश्च निपात्यते। मह्यतेऽसाविति **मघवा**—इन्द्रः। कर्म][5]॥

### वीपतिभ्यां तनन् ॥५६॥

आभ्यां तनन् स्यात्। वी गत्यादिषु अ०। वीयते तदिति **वेतनम्**—भृतकदानम्। कर्म। पत्लृ गतौ भ्वा°। पतन्त्यस्मिन्निति **पत्तनम्**—मानक्रयविक्रयस्थानम्। अधिकरणम्॥

### गमेरिनिः ॥५७॥

गमेरिनिः स्यात्। गम्लृ गतौ। गमिष्यतीति **गमी**—जिगमिषुः। कर्त्ता॥

### आङि णित् ॥५८॥

आङ्युपपदे गमेरिनिः प्रत्ययो भवति णिच्च। आगमिष्यतीति **आगामी**—कालान्तरगतः, पथिकश्च, भव्यो विधिश्च। कर्त्ता॥

### भुवश्च ॥५९॥

---

१. 'मजु' इत्यपपाठो ह.। २. 'प्रत्ययस्य चान्नादेशः' इति ह.।
३. 'अस्य परा उपपदे' इति ह.। ४. 'समानाधिकरणमिकारलोपश्च' इति ह.।
५. कोष्ठान्तर्गतपाठो नोपलभ्यते ह.।

भुव इनिः स्याद् णिच्च । भविष्यतीति भावी ॥

**प्रे स्थः[1] ॥६०॥**

[अस्माद्] इनिः स्याद् णिच्च । ष्ठा गतिनिवृत्तौ भ्वा० । प्रस्थास्यत इति **प्रस्थायी**—गन्तुकामः ॥

**परमे कित् ॥६१॥**

इनिः स्यात्तिष्ठतेः किच्च । परमे तिष्ठतीति **परमेष्ठी**—प्रजापतिः । कर्त्ता ॥

**मन्थश्च ॥६२॥**

मन्थेरिनिः स्यात् किच्च[2] । मन्थ विलोडने । मथ्नातीति **मन्थाः**—वायुः, विशाखा, वज्रं च । कर्त्ता ॥

**पतेस्थश्च ॥६३॥**

पतेरिनिः स्यात् थश्चान्तादेशः । पत्लृ गतौ । पतन्त्यनेनेति **पन्थाः**—मार्गः । करणम् ॥

**अदेस्त्रिन् ॥६४॥**

अदेस्त्रिन् स्यात् । अद भक्षणे आ० । अत्ति तपः स्वाध्यायमिति **अत्री**—ऋषिः । स्वरे रूपे च विशेषः । कर्त्ता ॥

**पतेरत्रिनिः ॥६५॥**

पतेरत्रिनिः स्यात् । पत्लृ गतौ । पतत्यत्यर्थमिति **पतत्री**—पक्षी । कर्त्ता ॥

**हसृभ्यां क्वनिप् ॥६६॥**

आभ्यां क्वनिप् स्यात् । हृत्वा । सृत्वा ॥

**[सृजेरम् च ॥६७॥**

सृजेः क्वनिप् स्याद् अमागमश्च । सृज विसर्गे तौ० दै० । सृजति सृज्यते वा **स्रज्वा**—][3] तन्तुसृक् । कर्त्ता कर्म ॥

**स्नामदिपद्यर्त्तिपॄशकिभ्यो वनिप् ॥६८॥**

एभ्यो वनिप् स्यात् । ष्णा शौचे आ० । स्नाति तस्यामिति **स्नावा**—नदी, शिरा[4] च । अधिकरणम् । मदी हर्षे । माद्यतीति **मद्वा**—पानम् । **मद्वरी** । [पद गतौ । पद्यत इति **पद्वा**—रथः । **पद्वरी** ।] कर्त्ता । ऋ गतौ भ्वा० जु० । ऋच्छति इयर्ति अर्यते वा **अर्वा**—आसवम्, हयश्च । कर्त्ता कर्म च । पॄ पालनपूरणयोः क्र्या० [जु०] ।

---

१. 'प्रप्रेस्थः' इत्यशुद्धपाठो ह. । २. 'मंथैरिणिस्यात्किणिच्च' इत्यपपाठो ह. ।
३. कोष्ठान्तर्गतपाठो नोपलभ्यते ह. । ४. 'सितम्' इति ह. ।

पृणाति पिपर्ति पूर्यते वा **पर्वा**—पूरणम्, पुण्यतिथिश्च । कर्त्ता कर्म च । शक्लृ शक्तौ । शक्नोति शक्यते वा **शक्वा**—समर्थः । **शक्वरी**—पुष्पजातिः, रात्रिश्च । कर्त्ता कर्म ॥

**शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप् ॥६९॥**

एभ्यः क्वनिप् । शीङ् स्वप्ने आ० । शेते **शीवा**—सर्पः । **शीवरी** । क्रुश आह्वाने रोदने च । क्रोशति क्रुश्यते **क्रुश्वा**—क्रोष्टा । कर्त्ता कर्म च । रुह बीजजन्मनि भौ० । रोहति **रुह्वा**—वनस्पतिः । कर्त्ता । जि अभिभवे । जयतीति **जित्वा**—इन्द्रः । कर्त्ता । क्षि क्षये । क्षयतीति **क्षित्वा**—कालः । कर्त्ता । सृ गतौ भौ० जौ० । धावति सर्सत्ति वा **सृत्वा**—वायुः । कर्त्ता अधिकरणम् । धृङ् अवस्थाने । ध्रियन्तेऽस्मिन् भूतानीति **धृत्वा**—विष्णुः । **धृत्वरी**—भूमिः । अधिकरणम् ॥

**ध्याप्योः सम्प्रसारणं च ॥७०॥**

आभ्यां क्वनिप् स्यात् सम्प्रसारण [च] । ध्यै चिन्तायाम् । ध्यायति अशुभमिति **धीवा**—निषादः, शाकुनिकश्च । कर्त्ता । प्यैङ् वृद्धौ भौ० । प्यायत इति **पीवा**—मांसोपचितः । **पीवरी** । कर्त्ता । 'हलः' [अ० ६।४।२] इति दीर्घः ॥

**अदेर्धश्च ॥७१॥**

अदेः क्वनिप् स्याद् धश्चान्तादेशः । अद भक्षण । अत्ति बलमिति **अध्वा**—मार्गः । कर्त्ता ॥

**प्र ईरिसद्योस्तुट् च ॥७२॥**

प्र उपपद ईरिसद्योः क्वनिप् स्यात् तुडागमश्च । ईर क्षेपे । प्रेरयतीति **प्रेत्वा** । षदलृ विशरणादौ भौ० । प्रसीदति [प्रसद्यते वा] **प्रसद्वा**—मूढः । कर्त्ता कर्म च ॥

**मनिन् ॥७३॥**

सर्वधातुभ्यो मनिन् स्यात् । डुकृञ् करणे ता० । क्रियते तत् फलार्थिभिरिति **कर्म**—चेष्टा । कर्म । चर गत्यर्थः । चरितं तत्र शस्त्रेणेति[1] **चर्म**—त्वक् । अधिकरणम् । भूतकालः । वृञ् वरणे सौ० । वृणोति व्रियते वा **वर्म**—आवरणम् । कर्त्ता कर्म च । शॄ हिंसायां क्रै० । शृणाति दुःखमिति **शर्म**—सुखम् । कर्त्ता । जनी प्रादुर्भावे दै० । जायते जन्यते वा **जन्म** । कर्त्ता कर्म च । भस भर्त्सनदीप्त्योः जौ० । भसितं तदग्निनेति **भस्म**—भूतिः । कर्म । भूतकालः ॥

**बृंहेर्नोऽच्च ॥७४॥**

बृंहेर्मनिन् स्याद् नकारस्य चाकारः । बृहि वृद्धौ । बृंहति बृंह्यते वा **ब्रह्म**—परम्, तेजः, अध्ययनं च । कर्त्ता कर्म च ॥

---

१. 'चरंतस्मितरात्रध्रमणेति' इत्यपपाठो ह. ।

### अशिशकिभ्यां छन्दसि ॥७५॥

आभ्यां मनिन् स्यात् छन्दसि विषये। अशू व्याप्तौ, अश भोजने क्र्यै०। अश्नुते अश्नाति वा **अश्मा**—पाषाणः। कर्त्ता। शक्लृ शक्तौ। शक्नोति शक्यते **शक्मा**। कर्त्ता कर्म च॥

### हृभृधृसृस्तृ[सू]भ्य ईमनिन् ॥७६॥

एभ्य ईमनिन् स्यात् छन्दसि विषये। हृञ् हरणे, हृ प्रसह्यहरणे। हरति जिहर्त्ति वा **हरीमा**—मातरिश्वा। डुभृञ् धारणपोषणयोः जौ०। बिभर्त्ति भ्रियते वा **भरीमा**—राजा कुटुम्बश्च। धृङ् अवस्थाने। ध्रियत इति **धरीमा**—धर्मः। कर्त्ता। सृ गतौ भौ० जौ०। धावति सिसर्त्ति स्रियते वा **सरीमा**—कालः। कर्त्ता कर्म च। स्तृञ् आच्छादने [क्र्यै०। स्तीर्यत इति **स्तरीमा**—आच्छादनम्। कर्म।]. षूङ् प्राणिगर्भविमोचने [अ०,षूङ् प्राणिप्रसवे दै०, षू प्रेरणे भौ०]। सूते सूयते सुवति वा **सवीमा**—गर्भः। कर्त्ता॥

### जनीकृभ्यामिमनिन् ॥७७॥

आभ्यामिमनिन् स्यात्। जनी प्रादुर्भावे दै०। जायते जन्यते वा **जनिमा**—संसारः। कर्त्ता कर्म च। डुकृञ् करणे, कृञ् करणे। करोति करति वा **करिमा**—मृत्युः, वायुर्वा। कर्त्ता॥

### वेञः सर्वत्र ॥७८॥

वेञ इमनिन् स्यात् छन्दसि भाषायां वा। वेञ् तन्तुसन्ताने। वयति ऊयते[1] वा **वेमा**—कुविन्दभाण्डम्। कर्त्ता कर्म च॥

### नामन्सामन्सोमन्[2]होमन्रोमन्लोमन्व्योमन्विधर्मन्पाप्मन्-व्येमन् ॥७९॥

एते निपात्यन्ते मनिन्प्रत्यये निरूढाः। णमु प्रह्वत्वे शब्दे च। अस्य मकारलोपो निपात्यते [दीर्घश्च। नमन्ति तेनेति **नाम**—संज्ञाकरणम्। करणम्। षिञ् बन्धने सौ०। अस्य आकारादेशो निपात्यते।] सिनोति स्वरानिति **साम**—गेयं छन्दः।

---

१. 'वाति वीयते' इति ह०।

२. 'स्तोमन्' इति ह०। परन्तूदाहरणं 'सोम' इत्येव पठ्यते।

कर्त्ता। षुञ् अभिषवे। अस्य रुमागमो निपात्यते[१]। सुनोति सूयते वा **सोम**—यज्ञ-द्रव्यं, चन्द्रमाश्च। कर्त्ता कर्म च। हु दानादनयोः। [प्रत्ययस्य] नलोपो निपात्यते। [हूयत इति **होम**—अग्निहवनम्। कर्म। लूञ् छेदने क्र्या०। अस्य वा लकारस्य रत्वं निपात्यते।] लूयत इति [रोम,] **लोम**—केशाः। कर्म। व्येञ् संवरणे[२] भ्वा०। व्येञ उत्वं निपात्यते। वीयते तद् वायुना घनैश्चेति **व्योम**—नभः। कर्म। धृङ् अवस्थाने विपूर्वः। विविधं ध्रियत इति **विधर्म**। कर्त्ता। पा रक्षणे। अस्य पुगागमो निपात्यते। पाति तस्मादात्मानमिति **पाप्मा**—रक्षक, पापं च। अपादानम्। व्येञ् संवरणे[३]। व्ययतेरित्वं निपात्यते। व्ययति **व्येम**—संसारः[४]। कर्त्ता॥

## वसौ शृणातेः ॥८०॥

वसुपूर्वस्य शृणातेर्मनिन् स्यात्। शॄ हिंसायाम्। वसवोऽस्य दुरितं शीर्यासुरिति **वसुशर्मा**। एवमन्येऽपि। भविष्यत्कालः॥

## सातिभ्यां त्मनिन्मनिणौ ॥८१॥

आभ्यां त्मनिन्मनिणौ स्तः। षो अन्त कर्मणि दि०। स्यतीति **सात्मा**[५]—अन्तः-कर्म। अत सातत्यगमने। अतति अत्यते वा सर्वभूतैरिति **आत्मा**—पुरुषः। कर्त्ता कर्म॥

## अर्त्तेर्भुक्षिनक् ।८२॥

अर्त्तेर्भुक्षिनक्[६] स्यात्। ऋ गतौ भ्वा०। ऋच्छत्यर्यते वा **ऋभुक्षाः**—इन्द्रः। कर्त्ता॥

## लूञो मनिप् ॥८३॥

लूञो मनिप् स्यात्। लूञ् छेदने क्र्या०। लूयन्त इति **लोमानि**—रोमाणि। कर्म॥

## हन्तेर्युन्नाद्यन्तयोर्घत्त्वतत्त्वे च ॥८४॥

हन्तेर्युन् स्याद् आद्यन्तयोर्घत्वतत्त्वे स्तः। हन हिंसागत्योः अ०। हन्त्याचारमात्मनो लज्जामिति वा **घातनः**—पापकर्मा, निर्लज्जश्च॥

॥ **इति नकारः** ॥

॥ इत्युणादिवृत्तौ षष्ठः पादः ॥

———

१. अत्र पाठो भ्रष्टः सञ्जातः। २. 'संवत्सरणे' इति ह.।
३. 'हृतौ' इति ह.। ४. 'संक्षारः' इति ह.।
५. अन्यत्र 'मनिन्' प्रत्ययं कृत्वा 'सामा' शब्दः साध्यते।
६. 'लुत्रोत्यनिषु' इत्यपपाठो ह.।

# [॥ अथ सप्तमः पादः ॥]

## [आप्नोतेः क्विप् ह्रस्वत्वञ्च ॥१॥]

आप्नोतेः क्विप् स्याद् ह्रस्वत्वं च । आप्नोतीति आपः—अम्भः ।[1] कर्त्ता ॥

## पानीविषिभ्यः पः ॥२॥

एभ्यः पः स्यात् । पा रक्षणे । पान्ति तस्मादात्मानं पायते वा दुर्जनैरिति पापम्—कायवाङ्मनोदुश्चरितम्, पापो घोरश्च । णीञ् प्रापणे । नीयते नयति वा नेपम्—उदकम् । कर्म कर्त्ता च । विष्लृ व्याप्तौ जौ० । वेवेष्टीति वेष्पम्—आत्मा । कर्त्ता ॥

## चुपेः कित् ॥३॥

चुपेः पः स्यात् किच्च । चुप मन्दायां गतौ भौ० । चोपति चुप्पम्—मन्दगमनम् । कर्त्ता ॥

## स्तुवो दीर्घश्च ॥४॥

स्तुवः पः स्यात् किच्च दीर्घश्च । ष्टुञ् स्तुतौ आ० । स्तौति स्तूयते वा स्तूपः—बोधिसत्वं वचनम् । कर्त्ता कर्म च ॥

## कुसुयुभ्यश्च ॥५॥

एभ्यः पः स्यात् किच्च दीर्घश्च । कु शब्दे । कूयतेऽस्मिन्निति कूपः—उदपानम् । अधिकरणम् । षुञ् अभिषवे सौ०। सुनोति सूयते वा सूपम्—व्यञ्जनम् । कर्त्ता कर्म च । यु मिश्रणे आ० । यौति [यूयते वा] यूपः—यज्ञपशुबन्धनकाष्ठम् । कर्त्ता कर्म च ॥

## सृशॄभ्यामूर्च ॥६॥

आभ्यां पः स्याद् 'ऊर्' च भवत्यादेशः । सृ गतौ भौ० जौ० । धावति सिसर्त्तीति सूर्पः—अहिः । कर्त्ता । शॄ हिंसायां क्र्यै०। शृणातीति शूर्पः—धान्यादिनिष्पवनभाण्डादि, संख्या । कर्त्ता ॥

---

१. 'आदृतेः क्वन् स्यात् ह्रस्वत्वं च । आप्नोतीति अप् । अयभूः ।' इत्यपपाठो ह. ।

**खष्पशिल्प[शष्प]बाष्परूपतर्पतल्पाः ॥७॥**

एते शब्दा निपात्यन्ते पप्रत्यये निरूढाः। खनु अवदारणे, कष हिंसायाम्। खनतेः षोऽन्तस्य निपात्यते, कषतेरादिखत्वं निपात्यते। खनति खन्यते वा, कषति कष्यते वा **खष्पम्**—खलीनः, अङ्गारो[1] वा। कर्त्ता कर्म च। शील समाधौ भौ०, शील उपधारणे चौ० ण्यन्तः प्रकृत्यन्तरो वा। अस्य णेर्लुक्, ह्रस्वत्वं च निपात्यते। शीलन्ति तत् शीलयन्ति वा तत् **शिल्पम्**—क्रियाकौशलम्। कर्म। यत् कुम्भकारादीनां कौशलं तच्छिल्पमित्यर्थः। शिष हिंसायां भौ०। अस्योपधाया अत्वं निपात्यते। शिष्यते तद् गवादिभिरिति **शष्पम्**—घासः, वीरुत्। कर्म। बाधृ विलोडने। अस्य षकारोऽन्त्यस्य निपात्यते। बाधते लोचनमिति **बाष्पम्**—अश्रु। कर्त्ता। रूप रूपक्रियायां चौ० ण्यन्तः। अस्य पकारलोपो निपात्यतेऽगुणत्वं च। रूपयतीति रूप्यते वा तच्छोभनमिति **रूपम्**—चक्षुर्विषयः। कर्त्ता कर्म। तॄ प्लवनतरणयोः। तरन्त्यनेन जनाः **तर्पः**—नदीप्लवः। करणम्। तृप तृप्तौ दि०[2]। अस्य [पकारलोपो गुणे कृते] लत्वं निपात्यते। **तल्पम्**।

[बहुलकत्वात्] चण्पा पम्पा एतौ शब्दौ निपात्येते। चण दाने भौ०। चणति **चण्पा**। कर्त्ता। पा रक्षणे, पा पाने। अनयोर्ह्रस्वत्वं नुमागमश्च निपात्यते। पान्ति पिबन्ति तामिति **पम्पा**—पुष्करणी॥

**सर्त्तेरपः षुक् च ॥८॥**

सर्त्तेरपः स्यात् षुगागमश्च। सृ गतौ भौ० जौ०। धावति सिसर्त्तीति वा तस्माद् रक्षांसीति **सर्षपः**—रक्षोघ्नं द्रव्यम्, शाकम्॥

**उषिकुटिदलिकचिखजिभ्यः कपन् ॥९॥**

एभ्यः कपन् स्यात्। उष दाहे। ओषतीति **उषपः**—अग्निः। कर्त्ता। कुट कौटिल्ये तौ०। कुटतीति **कुटपः**—मानद्रव्यभाण्डम्। कर्त्ता। दल विशरणे भौ०। दल्यत इति **दलपम्**—रणे मुखत्राणम्। कर्म। कच बन्धने। कचतीति **कचपम्**—बन्धनम्। कर्त्ता। खज मन्थे। खज्यते **खजपम्**—दधि, उदकम्। कर्म॥

**क्वणेः सम्प्रसारणं च ॥१०॥**

क्वणेः कपन् स्यात् सम्प्रसारणं च। क्वण शब्दार्थः। क्वण्यते श्वापदैरिति **कुणपः**—उषितम्, मृतशरीर च। कर्म॥

**कपश्चाक्रवर्मणस्य ॥११॥**

---

१. 'सगरः' इति ह.। २. 'हृ प्लव भौ०' इति ह.।

क्वणेः कपः स्यात् चाक्रवर्मणस्याचार्यमते सम्प्रसारणं च। क्वण शब्दार्थः। क्वण्यते तदिति **कुणपम्**। शब्दार्थयोः सादृश्यम्, स्वरे विशेषः॥

**विटपविष्टपविशिपोलपाः[1] ॥१२॥**

एते निपात्यन्ते कपन्प्रत्यये अन्तोदात्ताः। विश प्रवेशने तौ०। अस्य टकारोऽन्त्यस्य निपात्यते। विशतीति **विटपम्**। अस्यैव धातोः प्रत्ययादेष्टागमः। विशन्त्यस्मिन् पुण्यकृत इति **विष्टपम्**—सुकृतीनां स्थानम्। अधिकरणम्। अस्यैव धातोः प्रत्ययादेरित्वं निपात्यते। विशत्यस्मिन्निति **विशिपम्**—वेश्म, आसनं च। पद्मं चेत्येके। अधिकरणम्। उष दाहे। अस्यान्त्यस्य लत्वं निपात्यते। उष्यते तद्दावाग्निनेति **उलपम्**—पर्वततृणम्। कर्म॥

॥ इति पकारः॥

**कलेः फगस्योच्च ॥१३॥**

कलेः फक् स्याद् अकारस्योकारः। कल शब्दसंख्यानयोः भौ०। कलति कल्यते वा **कुल्फः**—जङ्घापादयोर्मध्यसन्धिः। कर्त्ता कर्म च॥

**गलेश्च ॥१४॥**

पूर्ववत्। गल अदने। गलति गल्यते वा **गुल्फम्**—पादोपरिग्रन्थिः। कर्त्ता कर्म च॥

॥ इति फकारः॥

**कदिगडिकटिभ्योऽम्बच् ॥१५॥**

एभ्योऽम्बच् स्यात्। कद इति सौत्रो धातुः। कदतीति **कदम्बम्**—पुष्पजातिः। गड इति सौत्रो धातुः। गडतीति **गडम्बः**—शाकप्रकारः। कर्त्ता। कट गतौ। कटतीति **कटम्बः**—वादित्रम्। कर्त्ता॥

**कदेर्णित् पक्षिणि ॥१६॥**

कदेरम्बच् स्यात् पक्षिण्यभिधेये णिच्च। कद इति सौत्रो धातुः। कदतीति **कादम्बः**—कलहंसः। कर्त्ता॥

**कृञश्च ॥१७॥**

कृञोऽम्बच् स्यात्। डुकृञ् करणे, कृञ् हिंसायां सौ०, [कृञ् करणे भौ०। करोति कृणोति करतीति वा **करम्बम्**—दधिसक्तवः। कर्त्ता॥

॥ इति बकारः॥

---

१. 'विटपूविशिलोपाः' इत्यपपाठो ह०।

## कॄगॄशॄशलिगर्दिभ्योऽभच् ॥१८॥

एभ्योऽभच् स्यात् । कॄ विक्षेपे तौ० । किरतीति **करभः**—त्रिवर्ष उष्ट्रः । कर्त्ता । गॄ निगरणे तौ०, गॄ शब्दे क्र्‌यौ० । गिरति गृणातीति वा **गरभः**—सिंहहा प्राणी । कर्त्ता । शॄ हिंसायां क्र्‌यौ० ।][1] शृणाति **शरभः**—हिंस्रः । कर्त्ता । शल हुल पत्लृ गतौ[2] भौ० । शलतीति **शलभः** –पतङ्गः । कर्त्ता । गर्द शब्दे भौ० । गर्दति **गर्दभः**—खरः। कर्त्ता ॥

## ऋधिवृषिभ्यां किच्च ॥१९॥

आभ्यामभच् स्यात् किच्च । ऋष गतौ । ऋषतीति **ऋषभः**—गोपतिः, [युवा] वा । कर्त्ता । वृष सेचने भौ० । वर्षतीति **वृषभः** ॥

## रिशेर्निच्च लुश च ॥२०॥

रिशेरभच् स्यान्नित्संज्ञः, लुशादेशश्च । रिश हिंसायाम् । रिशतीति[3] **लुशभः**—मत्तहस्ती, हिंस्रो वा । कर्त्ता ॥

## रासिवल्लिभ्यां च ॥२१॥

आभ्यामभच् स्यान्नित्संज्ञः । रासृ दीप्तौ । रासतीति **रासभः**—गर्दभः । कर्त्ता । वल्ल इति सौत्रो धातुः । वल्लति वल्ल्यते वा **वल्लभः**—दयितः । कर्त्ता कर्म च ॥

## गडेः कड च ॥२२॥

गडेरभच्, कड इत्ययं चादेशः । गड सेचने भौ० । गडतीति **कडभः**—हस्तिपोतः[4] । कर्त्ता कर्म च ॥

## दरिदलिभ्याम्भः ॥२३॥

आभ्यां भः स्यात् । दॄ विदारणे क्र्‌यौ० । दृणातीति दीर्यत इति **दर्भः**—कुशः । कर्त्ता कर्म । दल विदारणे चौ० । दलयति[5] दल्यते वा **दल्भः**—वल्कलम्, विदारणं च । कर्त्ता कर्म ॥

## अर्ति गॄभ्यां भन् ॥२४॥

आभ्यां भन् स्यात् । ऋ गतौ । ऋच्छत्यर्यते वा **अर्भः**—सूक्ष्मप्राणी । कर्त्ता कर्म

---

१. कोष्ठान्तर्गतपाठो नोपलभ्यते ह. ।

२. 'शल् सल् आशुगमने' इति ह. ।

३. 'ऋषेर्निच्च······ऋशेरभच्······ऋष······ऋषतीति' इति ह. ।

४. 'हस्तपातः' इति ह. । ५. 'दलति' इति ह. ।

च । गॄ निगरणे तौ० । गिरति गीर्यते वा **गर्भः**—जठरस्थः प्राणी । कर्त्ता कर्म ॥

**इणः कित् ॥२५॥**

इणो भन् । एतीति **इभः**— हस्ती ॥

॥ इति भकारः ॥

**अर्त्ति[स्तु]सुहुसृधृक्षिक्षुभायापदियक्षिनीभ्यो मन् ॥२६॥**

एभ्यो मन् स्यात् । ऋ गतौ प्रापणे वा । ऋच्छत्यर्यते वा **अर्मः**—नेत्रव्याधिः । कर्त्ता कर्म । ष्टुञ् स्तुतौ अा० । स्तौति स्तूयते वा **स्तोमः**— मन्त्रस्तवः । कर्त्ता कर्म । षुञ् अभिषवे सौ० । सुनोति सूयते वा **सोमः**—चन्द्रः, यज्ञद्रव्यं च । कर्त्ता कर्म च । हु दानादादयोः जौ० । हूयत इति **होमः**। सृ गतौ । धावति सिसर्त्ति वा **सर्मः**—नदः । कर्त्ता । धृङ् अवस्थाने । धरति ध्रियते व **धर्मः**। अधिकरणम्। क्षि निवासगत्योः भौ०, क्षि हिंसायां सौ० । क्षयति क्षिणोतीति वा **क्षेमम्** कुशलम् । कर्त्ता । टुक्षु शब्दे । क्षौतीति **क्षौमम्**—दुकूलम् । भा दीप्तौ । भात्यत्यर्थमिति **भामः**—क्रोधः । कर्त्ता । या प्रापणे अा० । यातीति **यामः**—कालविशेषः । कर्त्ता । पद गतौ । पद्यते तन्मधुकरैरिति **पद्मम्**—कमलम् । [कर्त्ता । यक्ष पूजायाम् । यक्ष्यते पूज्यते बासादिभी रोगराजत्वात् **यक्ष्मा**—व्याधिः । कर्त्ता ।] बाहुलकत्वादभिधानलक्षणाद्वा नकारस्येत्संज्ञा नास्ति । पक्षि इति सौत्रो धातुः । पक्षतीति **पक्ष्मः**[१]— रोमविमेषः । कर्त्ता । णीञ् प्रापणे । नयति नीयते वा **नेमः**—शकटम् । कर्त्ता कर्म च ॥

**अवतेरुष्टिलोपश्च ॥२७॥**

अवतेर्मन् स्याद् उकारान्तादेशश्च, प्रत्ययस्य टिलोपश्च । अव रक्षणादिषु । अवति ब्रह्मेति **ओ३म्**— प्रणवः । कर्त्ता । 'ओमभ्यादाने'[२] [अ० ८।२।८७] इति प्लुतः ॥

**ग्रसतेरा च ॥२८॥**

ग्रसतेर्मन् स्यादाकारान्तादेशश्च । ग्रसु अदने भौ० । ग्रसन्तेऽस्मिञ्जनाः, ग्रस्यते वा जनैरिति **ग्रामः**—नगरविपरीतजनसन्निवेशः । अधिकरणं कर्म च ॥

**प्रथेरट् च ॥२९॥**

प्रथेर्मन् स्याद् अडागमश्च । प्रथ प्रख्याने । प्रथन्तेऽस्माद् द्वितीयादयः शब्दा इति **प्रथमः**— आदिः । अपादानम् ॥

**अविसिविशुषिभ्यः किच्च ॥३०॥**

---

१. सूत्रे 'पक्ष्म' शब्दो न वर्त्तते । २. 'प्रणवष्टेः' इति ह. ।

एभ्यो मन् स्यात् किच्च। अव रक्षपालने। अवति अव्यते वा उमः—जनः। बाहुलकत्वाद् ह्रस्वः। कर्त्ता कर्म च। षिवु तन्तुसन्ताने दै०। सीव्यतेऽनेनेति स्यूमः—सूत्रतन्तुः। करणम्। शुष शोषणे दै०, [चौ०, प्रकृत्यन्तरो] ण्यन्तो वा। [शुष्यति] शोषयति परदर्पम्, शुष्यते वा भयादिभिरिति शुष्मम्—बलम्। कर्त्ता कर्म च॥

## इषियुधीन्धिदसिश्याधूसूभ्यो मक् ॥३१॥

एभ्यो मक् स्यात्। इषु उञ्छे। इषति इष्यते वा इष्मः–काष्ठम्, वसन्तः, कालश्च। कर्त्त [कर्म च]। युध संप्रहारे दै०। युध्यते तस्मिन् राजेति युध्मः—शरत्काल:। अधिकरणम्। युध्यते वा युध्मः—शूरः। कर्त्ता। ञिइन्धी दीप्तौ रौ०। इध्यतेऽनेनाग्निरिति इध्मः—काष्ठम्। दसु च दै०। दस्यति दस्यते वा दस्मः—हीनः। कर्त्ता कर्म च। श्यैङ् गतौ। श्यायतेऽसौ चक्षुर्मनोभिरिति श्यामः—अंजनादिः, कृष्णवर्णः। कर्म। धूञ् कम्पने सौ०, धू विधूनने तौ०। धुनाति धुवति धूयते वायुनेति धूमः—अग्निवर्त्म[1]। कर्त्ता कर्म च। [षूङ् प्राणिगर्भविमोचने ग्रा०, षू प्रेरणे तौ०, षूङ् प्राणिप्रसवे दै०। सूते सुवति सूयते वा कर्मणीति सूक्ष्मः—रविः, स्रसविकारश्च। कर्त्ता कर्म च॥]

## गलेरुच्चोपधायाः ॥३२॥

गलेर्मक् स्याद् उत्त्वं चोपधायाः। गल अदने। गलति गल्यते वा गुल्मः—वातजो व्याधिः। कर्त्ता कर्म च॥

## युजिरुचितिजां कुश्च ॥३३॥

एभ्यो मक् स्यात्, एषां कवर्गान्तादेशश्च। युजिर् योगे रौ०, युज समाधौ दै०। युनक्ति युज्यते वा युग्मम्—युगलम्। कर्त्ता कर्म च। रुच दीप्तौ भौ०। रोचते तदतिशयेनेति रुक्मम्—सुवर्णम्। कर्त्ता। तिज शातने। तितिक्षते तेजनं वा तिग्मम्—तीक्ष्णम्, दीप्तम्, तेजश्च। कर्त्ता भावश्च॥

## हन्तेर्हि च ॥३४॥

हन्तेर्मक् स्यात्, हीत्ययमादेशश्च। हन हिंसागत्योः ग्रा०। हन्ति दुर्गतान् सत्त्वान् इति हिमम्, हेम वा—तुषारः। बाहुलकत्वाद् गुणः। कर्त्ता॥

## भियः षुग्वा ॥३५॥

भियो मक् स्यात् षुगागमश्च वा। ञिभी भये। बिभेत्यस्माज्जन इति भीष्मः, भीमः—भयानकः। अपादानम्॥

---

१. 'अग्निः' इति ह.।

घर्मः ॥३६॥

घर्म इत्ययं निपात्यते मक् प्रत्यये । घृ क्षरणदीप्त्योः जौ० । जिघर्त्ति स्वौजसा जगदिति **घर्मः**—निदाघः । निपातनाद् गुणः ॥

ग्रीष्मः ॥३७॥

अयं निपात्यते । ग्रसु अदने । अस्योपधाया ईत्वं निपात्यते [षश्चान्तादेशः] । ग्रसते जगतस्तेज इति **ग्रीष्मः**—घर्मः । कर्त्ता ॥

पच एलिमन् ॥३८॥

पचेरेलिमन् स्यात् । डुपचष् पाके । **पचेलिमः**—अग्निरादित्यो वा । कर्त्ता । पच्यन्त इति **पचेलिमाः**—माषाः । कर्म ॥

भिदेः केलिमच् ॥३९॥

[भिदेः केलिमच् स्यात् ।] भिदिर् विदारणे रौ० । भिनत्तीति **भिदेलिमः**—तस्करः । कर्त्ता । भिद्यत इति **भिदेलिमम्**—काष्ठम् । कर्म ॥

कर्दिकडोरमः ॥४०॥

आभ्याममः स्यात् । कर्द कुत्सिते शब्दे । कर्दतीति **कर्दमः**—जलपर्यन्तः[1] । कर्त्ता । कड इति सौत्रो धातुः । कडतीति **कडमः**—शालिः । कर्त्ता ॥

सूचेः स्मन् ॥४१॥

सूचेर्धातोः स्मन् प्रत्ययो भवति[2] । सूच पैशुन्ये । सूचयति सूच्यते वा **सूक्ष्मः**—अणुः । कर्त्ता कर्म च ॥

गुधेरूमः ॥४२॥

गुधेरूमः स्यात् । गुध परिवेष्टने । गुध्यति गुध्यते वा प्राणिभिरिति **गोधूमः**—कर्त्ता कर्म च ॥

इणो दमक् ॥४३॥

[इणो दमक् स्यात् ।] इण् गतौ अा० । एतीति **इदम्** । कर्त्ता ॥

---

१. 'जलपर्यंतिः' इति ह. ।

२. 'सूचः षः स्वत्रन् । सूचः स्वत्रन् स्यात । षश्चान्तादेशः' इति ह. ।

## कायतेर्डिम् ॥४४॥

कायतेर्डिम् स्यात् । कायत इति किम्—प्रश्नविषयोऽर्थ उच्यते ॥

## क्रमिगमिक्षमिभ्यस्तुम् वृद्धिश्च ॥४५॥

एभ्यस्तुम् स्याद् वृद्धिश्चैषाम् । क्रमु पादविक्षेपे भ्वा० । क्रामतीति क्रान्तुम् । भावः कर्त्ता । गम्लृ गतौ । गच्छतीति गान्तुम्—पथिकः । कर्त्ता । क्षमूष् सहने दि० । क्षाम्यतीति क्षान्तुम्—भूमिः । कर्त्ता ॥

## प्रथेरमच् ॥४६॥

[प्रथेरमच् स्यात् ।] प्रथ प्रख्याने भ्वा० । प्रथन्तेऽस्माद् द्वितीयादयः शब्दा इति प्रथमः । अपादानम् । स्वरे विशेषः ॥

## चरेश्च ॥४७॥

चरेरमच् स्यात् । चर गत्यर्थः । चरतीति चरमः—अन्त्यः ॥

॥ इति मकारः ॥

[॥ इत्युणादिवृत्तौ सप्तमः पादः ॥]

# [॥ अथाष्टमः पादः ॥]

## श्रुदक्षिस्पृहिभ्य आय्यः ॥१॥

एभ्य आय्यः स्यात् । श्रु श्रवणे स्वा० । शृणोति श्रूयते वा **श्रवाय्यः** । **दक्षाय्यः** । **स्पृहयाय्यः**—स्पृहणीयः । कर्त्ता कर्म च ॥

## दधिषाय्यः ॥२॥

दधिषाय्य इत्ययं शब्दो निपात्यते आय्यप्रत्यये । डुधाञ् धारणपोषणयोः जो० । अस्य द्विर्वचनं निपात्यते इत्वं षुगागमश्च अगुणत्वं च । धीयत इति[1] **दधिषाय्यः** । कर्म ॥

## वृङ एण्यः ॥३॥

वृङ एण्यः स्यात् । वृङ् सम्भक्तौ क्र्या० । वृणीते व्रियते वा **वरेण्यः**—परब्रह्मधामम् । कर्त्ता कर्म च ॥

## स्तौतेः क्सेय्यश्छन्दसि ॥४॥

स्तौतेः क्सेय्यः स्यात् छन्दसि विषये । ष्टुञ् स्तुतौ अ० । स्तूयतेऽसाविति **स्तुषेय्यः**—गुरुः । कर्म । स्तौतीति **स्तुषेय्यः**—स्तोता देवो वा । कर्त्ता ॥

## राजेरन्यः ॥५॥

[राजेरन्यः स्यात् ।] राज दीप्तौ भ्वा० । राजत इति **राजन्यः**—ज्योतिः, अग्निः, क्षत्रियो वा । कर्त्ता ॥

## अर्त्तेर्नित्[2] ॥६॥

अर्त्तेरन्यः स्याद् निच्च । ऋ गतौ भ्वा० । अर्यते तन्मृगश्वापदैरिति **अरण्यम्**—निर्जनस्थानम् । कर्म ॥

## पर्जन्यः ॥७॥

पर्जन्य इत्ययं शब्दो निपात्यते 'अन्य'प्रत्यये । वृष सेचने भ्वा०, गर्ज शब्दे । वर्षतेः परिपूर्वस्य जकारादेशो निपात्यते इकारलोपश्चोपसर्गस्य, गर्जतेर्गकारस्योप-

---

१. 'निपात्यते । अहंवासभ्यस्य । अगुणत्वं च । दधिष्यत इति' इत्यपपाठो ह. ।
२. 'अर्त्तेरन्यत्' इति ह. ।

सर्गस्य रस्य लोपो निपात्यते। परिवर्षति परिगर्जति वा **पर्जन्यः**—महेन्द्रः। कर्त्ता॥

## शॄरम्योश्च ॥८॥

आभ्यामन्यः स्याद् निच्च। शॄ हिंसायां क्र्या०। शृणात्यर्थिनां भयमिति **शरण्यः**—आर्त्तिहरः। रमु क्रीडायाम्। रमन्तेऽस्मिन्निति **रमण्यम्**—भाव्यम्। अधिकरणम्॥

## वदेरान्यः ॥९॥

[वदेरान्यः स्यात्।] वद व्यक्तायां वाचि भ्वा०। वदतीति **वदान्यः**—दाता। कर्त्ता॥

## वलिमलितनिभ्यः कयन्[1] ॥१०॥

## [अघ्न्यादयश्च ॥१४॥]

अघ्न्यादयो निपात्यन्ते यक्प्रत्यये। हन हिंसागत्योः अ०। **अस्य** नञ्पूर्वस्योपधालोपो निपात्यते। न हन्ति न हन्यते वा **अघ्न्यः**—धर्मः, गोपतिर्वा। कर्त्ता कर्म। ध्यै चिन्तायां भ्वा० सम्पूर्वः। संध्यान्तेऽस्यां विप्रा इति **सन्ध्या**—दिननिशान्तः। अधिकरणम्। डुधाञ् धारणपोषणयोः जु०। अस्य सम्पूर्वस्याकारलोपो निपात्यते। सन्धानं **सन्ध्या**—अर्कोदयास्तमितकालः। भावः। कमु कान्तौ भ्वा०। अस्यान्त्यस्य नकारो[2] निपात्यते। काम्यतेऽसाविति **कन्या**—कुमारी। कर्म। हन हिंसागत्योः। अस्य बधादेशो निपात्यते नुमागमश्च। हतमस्याः कर्मभिरशुभैर्बीजमिति[3] **वन्ध्या**—वशा अनपत्या स्त्री। कर्म। भूतकालः। ईर्ष्य ईर्ष्यार्थे भ्वा०। अस्य यलोपो निपात्यते। ईर्ष्यतीति **ईर्ष्या**—मात्सर्यम्। कर्त्ता। ईर्ष्यणं वा[4] **ईर्ष्या**। भावः। शक्लृ शक्तौ स्वा०। अस्योपधाया इत्वं निपात्यते। शक्यते वक्तुमिति **शक्यम्**[5]—असारम्। कर्म॥

## रुचिभुजिभ्यां किष्यन् ॥१५॥

[आभ्यां किष्यन् स्यात्।] रुच दीप्तौ भ्वा०। रुच्यत इति **रुचिष्यम्**—भोज्यम्। कर्म। भुज पालनाभ्यवहारयोः रु०। भुज्यत इति **भुजिष्यम्**—भोग्यम्। [**भुजिष्या**—] दासी। कर्म॥

## पूञो यण्णुट् ह्रस्वश्च ॥१६॥

पूञो यन् स्यात्, णुडागमश्च[6], ह्रस्वश्चोपधायाः। पूञ् पवने भ्वा०। पवते

---

१. इतोऽग्रे चतुर्दशसूत्रपर्यन्तं पाठो नोपलभ्यते ह.।

२. 'नकारलोपः' इति ह.। ३. 'कर्मभिर्जीवमिति' इति।

४. 'ईर्ष्य' इत्येव ह.। ५. 'शिक्यम्' इति पाठेन भाव्यम्।

६. 'नुडागमश्च' इति ह.।

पूयतेऽनेनेति **पुण्यम्**—शुभम् । कर्त्ता करणम् ॥

**स्रंसेः शिः कुट् किच्च ॥१७॥**

सस्रेर्यन् स्यात् कित्सञ्ज्ञः, कुट् चागमः, शिरित्यय चादेशः[1] । **स्रंसु** अवस्रंसने भ्वा० । स्रंसत इति **शिक्यम्**—परिव्राड्भिक्षाभाण्डस्थानम्, असारश्च । कर्त्ता ॥

**हर्यतेः कन्यन् हिर् च ॥१८॥**

हर्यतेः कन्यन् स्याद् हिरयं चादेशः । हर्य गतिकान्त्योः भ्वा० । हर्यति हर्यत इति **हिरण्यम्**—सुवर्णम् । कर्त्ता कर्म च ॥

**दधातेर्यन् नुट् च ॥१९॥**

दधातेर्यन् स्याद् नुडागमश्च । डुधाञ् धारणपोषणयोः जु० । दधाति सत्त्वानिति **धान्यम्**—व्रीहिः । कर्त्ता ॥

**कवतेर्यक् डुक् च ॥२०॥**

कवतेर्यक् स्याद् डुगागमश्च । कुङ् शब्दे । कवते कूयते वा **कुड्यम्**—भित्तिः । कर्त्ता कर्म च ॥

॥ **इति यकारः** ॥

**मन्दिवाशि[2]मथिचतिचङ्क्यङ्किभ्य उरच् ॥२१॥**

एभ्य उरच् स्यात् । मदि स्तुत्यादिषु भ्वा० । मन्दतेऽस्यां वाजिन इति **मन्दुरा**—वाजिशाला । अधिकरणम् । वाशृ शब्दे[3] दि० । वाश्यतेऽत्यर्थमिति **वाशुरः**[4]—गर्दभः, अगतिश्च । कर्त्ता । मथी विलोडने । मथ्यतेऽसौ जनैरिति **मथुरा**[5]—नगरी । कर्म । मथितो वास्यां लवण इति **मथुरा**—अधिकरणम् । चते चदे याचने भ्वा० । चतति **चतुरः**—पटुजनः । कर्त्ता । चत्यते जनैरिति **चतुरः** । कर्म । चकिः सौत्रो धातुः । चङ्क्त्यत्यर्थमिति **चङ्कुरः**—रथः । कर्त्ता । अकि लक्षणे । अङ्क्यत इति **अङ्कुरः**—प्रादुर्भावः । कर्म ॥

**व्यथेः सम्प्रसारणं धः किच्च ॥२२॥**

व्यथेरुरच् स्यात्, धकारान्तादेशश्च, कित् सम्प्रसारणं चास्य । व्यथ भयसंचलनयोः भ्वा० । व्यथन्तेऽस्मात् प्राणिन इति **विधुरः**—अनग्निकः राक्षसश्च । अपादानम् ॥

---

१. 'कित्संज्ञः, शिकुट् चादेशः' इति ह. ।

२. 'वासि' इति ह. । ३. 'वासृ दीप्तौ' इति ह. ।

४. 'वास्यतेऽर्थमिति वासुरः' इति ह. ।

५. 'मन्थ विलोडने ···· मन्थरा' इति ह. ।

## मुकुरदर्दुरौ ॥२३॥

एतौ उरच्प्रत्यये निपात्येते। मकि मण्डने भ्वा०। अस्य नलोप उपधाया उत्वं च निपात्यते। मङ्क्यतेऽनेनेति **मुकुरः**—आदर्शः। करणम्। म्रद मर्दने। अस्य रेफलोपो निपात्यते कश्चान्तादेशः, उपधाया उत्वम्। म्रद्यतेऽसाविति **मुकुरः**। कर्म। दॄ भये। अस्य दुगागमो निपात्यते गुणश्च। दृणातीति **दर्दुरः**—मण्डूकः। कर्त्ता॥

बहुलवचनादन्येभ्योऽपि उरच् स्यात्। शॄ हिंसायाम्। अस्य कुगागमो निपात्यते गुणश्च। शृणाति **शर्कुरः**[1]—तरुणः। कर्त्ता। कु शब्दे। अस्य द्विर्वचनं निपात्यते कुगागमो धातोश्चोकारलोपः। अत्यर्थं कौतीति **कुक्कुरः**॥

## असेरुरन् ॥२४॥

असेरुरन् स्यात्। असु क्षेपणे दि०। अस्यन्ते देवैरिति **असुराः**—दैत्याः। कर्त्ता॥

## शावशेराप्तौ ॥२५॥

शावुपपदेऽशेरुरन् स्यात्, आप्तौ गम्यमानायाम्। अशू व्याप्तौ। श्वश्यन्तेऽस्मिन् विविधाः कामा इति **श्वशुरः**॥

## इषिमदिमुदिखिदिछिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिशुषिबन्धिभ्यः किरच् ॥२६॥

एभ्यः किरच् स्यात्। इषु इच्छायां तौ०, इष आभीक्ष्ण्ये क्र्या०, इष गतौ। इच्छति इष्णाति [इष्यति] इष्यते वा **इषिरः**—अग्निः, आहारो वा। कर्त्ता कर्म च। मदी हर्षे। माद्यन्तेऽनयेति[2] **मदिरा**—सुरा। करणम्। ण्यन्तो वा, मदयतीति **मदिरा**—ईरः। कर्त्ता। मुद हर्षग्लपनयोः भ्वा०। मोदतेऽनेनेति **मुदिरः**—मेघः। करणम्। खिद दैन्ये। खिद्यतेऽनेनेति **खिदिरः**—त्रासः, सोमचक्रः। करणम्। छिदिर् द्वैधीकरणे रु०। छिनत्तीति **छिदिरः**—शस्त्रम्। कर्त्ता। भिदिर् विदारणे रु०। भिनत्तीति **भिदिरः**—भेदः। कर्त्ता। मदि स्तुत्यादिषु भ्वा०। मन्दतेऽस्मिन्निति **मन्दिरम्**—गृहम्। अधिकरणम्। चदि आह्लादने। चन्दतीति **चन्दिरः**—चन्द्रः, अनेकपश्च। कर्त्ता। तिम क्लेदने, प्रकृत्यन्तरं ण्यन्तो वा। तिम्यति तेमयति वा **तिमिरम्**—तमः। कर्त्ता। मिह सेचने भ्वा० ण्यन्तो वा। मेहति मेहयतीति वा **मिहिरः**—पूषा। मुह वैचित्त्ये दि०। मुह्यत्यनेनेति **मुहिरः**—कामः। मोहयति वा **मुहिरः**। कर्त्ता। मुच्लृ मोक्षणे। मुच्यतेऽनेन दुःखादिभिरिति **मुचिरः**—धर्मः करणम्। ण्यन्तो वा। मोचयति दुःखादिभिरिति **मुचिरः**। कर्त्ता। रुच दीप्तौ। रोचते सर्वेभ्य इति **रुचि-**

---

१. 'शर्करा' इति ह.। २. 'माद्यतेऽनेनेति' इति ह.।

रम्—दैवम्, दीप्तिमच्च । रुधिर् आवरणे । रुणद्धीति **रुधिरम्**—रक्तम्। कर्त्ता। **शुष** शोषणे दै० । शुष्यते शोषयति वा **शुषिरम्**—शुष्कम् । कर्त्ता कर्म च । बन्ध बन्धे । बद्धमस्य श्रोत्रेन्द्रियमिति **बधिरः**—श्रोत्रेन्द्रियहीनः । कर्म । भूतकालः ॥

**अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः ॥२७॥**

एते निपात्यन्ते किरच्प्रत्यये । अज गतिक्षेपणयोः । अजन्ति तस्मिन्निति **अजिरम्**—चत्वरम् । अधिकरणम् । नञ्पूर्वस्य वा जीर्यतेर्ऋवर्णलोपो निपात्यते । [जृष् वयोहानौ दै० । न जीर्यन्त इति **अजिराः**—देवाः । कर्त्ता । शॄ हिंसायां क्र्° । द्विर्वचनं सन्वद्भाव ऋवर्णलोपश्च निपात्यते ।] शीर्यन्तेऽस्मिन् तृणगुल्मवनस्पतीनां तेजांसीति **शिशिरः**—ऋतुः । अधिकरणम् । श्रथि शैथिल्ये । रेफलोप उपधाया इत्वं प्रत्ययस्य लत्वमनुस्वारलोपश्च निपात्यते । श्रन्थनम् **शिथिलम्**—शान्तरसमित्यर्थः । भावः । ष्ठा गतिनिवृत्तौ । अस्याकारलोपो निपात्यते । तिष्ठतीति **स्थिरम्**—दृढम् । कर्त्ता । स्फायी वृद्धौ । अस्य टिलोपो निपात्यते । स्फायनं **स्फिरम्**—बहुभावः । ष्ठा गतिनिवृत्तौ । अस्य ह्रस्वत्वं निपात्यते वुगागमश्च । स्थितो विश्रमादिति **स्थविरः**—वृद्धः । कर्त्ता । भूतकालः । खादृ भक्षणे भ्वा० । अस्योपधाया ह्रस्वत्वं निपात्यते । खाद्यते कुष्ठव्याधिनिमित्तमिति **खदिरः**—वृक्षविशेषः ।

**उणादयो बहुलम्** [अ० ३।३।१] इत्यन्येभ्योऽपि किरच् भवति । शीङ् स्वप्ने अ० । अस्य[1] ह्रस्वत्व वुगागमश्च निपात्यते । शेरतेऽस्मिन् राजबलानीति **शिबिरम्**—स्कन्धाधारम् । अधिकरणम् । डुपचष् पाके । अस्योपधाया इत्व टश्चान्त्यस्य निपात्यते । पच्यतेऽस्मिन्निति **पिठिरम्**—आधानभाण्डम् ॥

**मीनातेरूरच् ॥२८॥**

[मीनातेरूरच् स्यात् ।] मीञ् हिंसायां क्र्° । मीनाति सर्पानिति **मयूरः**—बर्हिः। कर्त्ता ॥

**कठिचकिभ्यामोरः ॥२९॥**

आभ्यामोरः स्यात् । कठ कृच्छ्रजीवने भ्वा० । कठतीति **कठोरः**—चिरन्तनः, अमृदुर्वा । चक तृप्तौ भ्वा०[2] । चकतीति **चकोरः** । कर्त्ता ॥

**किशोरादयश्च ॥३०॥**

किशोरादयः शब्दा निपात्यन्त ओरप्रत्यये । काशृ दीप्तौ । अस्योपधाया इत्वं

१. 'उपधायाः' इत्यधिकं ह० ।
२. 'चकि आहादे' इति ह० ।

निपात्यते [अगुणत्वं च]। काशत इति **किशोरः**—बालः। कर्त्ता। एवमन्येऽपि द्रष्टव्याः ॥

**स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनी[पदि]मदिमुदिखिदि[भिदि]छिदिमन्दिचन्दिदहिदसिदम्भिवहिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् ॥३१॥**

एभ्यो रक् स्यात्। स्फायी वृद्धौ। स्फायत इति **स्फारम्**—बहु अव्ययधर्मः। तञ्चु गतौ। तच्यते तदिति **तक्रम्**—उदश्वित्। कर्म। न्यङ्क्वादित्वात् [द्र०—अ० ७।३।५३] कुत्वम्। वञ्चु गतौ भौ०। वच्यते तदिति **वक्रम्**—कुटिलम्। शक्लृ शक्तौ सौ०। शक्नोतीति **शक्रः**—इन्द्रः। कर्त्ता। क्षिप प्रेरणे। क्षिप्यते तदिति **क्षिप्रम्**—आशु। कर्म। क्षुदिर् सम्प्रेषणे रौ०। क्षुणत्तीति **क्षुद्रः**—हिंस्रः। कर्त्ता। सृप्लृ गतौ भौ०। सर्पतीति **सृप्रः**—चन्द्रमाः, **सृप्रम्**—मधु, **सृप्रा**—नदी। कर्त्ता। तृप प्रीणने दै०। तृप्यतीति **तृप्रम्**—आज्यम्, काष्ठञ्च। कर्त्ता। दृप हर्षविमोचनयोः दै०। दृप्यतीति **दृप्रः** बलम्, **दृप्रा**—बुद्धिः। कर्त्ता। वदि अभिवादनस्तुत्योः भौ०। वन्दते वन्द्यते वा **वन्द्रः**—हेतुः, कामो वा। कर्त्ता कर्म च। उन्दी क्लेदने रौ० सम्पूर्वः। समुन्दन्ति[1] तस्माद् ग्रीष्मकाले नद्य इति **समुद्रः**—उदधिः। अपादानम्। श्विता वर्णे[2]। श्वेतत इति **श्वित्रम्**—व्याधिः। कर्त्ता। वृतु वर्तने। वर्तत इति **वृत्रम्**—दानवः, वायुश्च। कर्त्ता कर्म च। अज गतिक्षेपणयोः भौ०। अजतीति **वीरः**—शूरः। कर्त्ता। णीञ् प्रापणे भौ०। नीयत इति **नीरम्**—जलम्। कर्म। पद गतौ दै०। पद्यते तस्मिन्निति **पद्रः**—ग्रामः, घोषादिजनसन्निवेशः। अधिकरणम्। मदी हर्षे। माद्यतेऽस्मिन्निति **मद्रः**—जनपदः[3], क्रीडा वा। अधिकरणम्। मुद हर्षे भौ०। मोदन्तेऽनयेति **मुद्रा**—**चिह्नम्**। खिद दैन्ये। खिद्यते खेदयति वा **खिद्रम्**—विषाणम्। कर्त्ता। भिदिर् विदारणे रौ०। भिनत्तीति भिद्यते वा **भिद्रा**—शक्तिः। छिदिर् द्वैधीकरणे। छिद्यत इति **छिद्रम्**—विवरम्। कर्म। मदि स्तुत्यादौ। मन्दत इति **मन्द्रः**—मधुरः स्वरः। चदि आह्लादे दीप्तौ च। चन्दत इति **चन्द्रः**। कर्त्ता। दह भस्मीकरणे। दहति दह्यते वा **दह्रः**—अग्निः, सूर्यो वा। कर्त्ता कर्म च। दसु उपतापे। दस्यति **दस्रः**—देवभिषक्। कर्त्ता। दम्भु दम्भे। दभ्नोति दम्यते वा **दभ्रः**—अल्पम्, सूर्याचन्द्रमसौ च। कर्त्ता कर्म च। वह प्रापणे भौ०। वहतीति **उह्रः**—अनड्वान्। कर्त्ता। वस निवासे भौ०। वसत्यस्मिन् परं तेज इति **उस्रः**—रश्मिः। अधि-

---

१. 'समुदिताः' इति ह.। २. 'आवरणे' इति ह.।

३. 'मद्राः। जनाः' इति ह.।

करणम् । वाशृ शब्दे दि० । वाश्यत इति वाश्रः—रासभः, पक्षी वा । कर्त्ता । शीङ् स्वप्ने अ० । शेतेऽस्यर्थमिति शीरः—अजगरः । कर्त्ता । हस हसने । हसति हस्रः—मूर्खः[1] । कर्त्ता । हसनं हस्रः । भावः । सिधु सिद्धौ सौ० । सिध्नोतीति सिध्रः—आसनप्रकारः । कर्त्ता । शुभ दीप्तौ भौ० । शोभत इति शुभ्रः—सितः । कर्त्ता ॥

चकिरम्योरुच्चोपधायाः ॥३२॥

आभ्यां रक्, उच्चोपधायाः । चक तृप्तौ । चकति चक्यते वाऽनेनेति चुक्रः—रसविशेषः । कर्त्ता करणम् । रमु क्रीडायां भौ० । रमतेऽस्मिन्निति रुम्रः—सुन्दरम् । अधिकरणम् ॥

वौ कसेः ॥३३॥

वावुपपदे कसे रक् स्यात्, उच्चोपधायाः । कस गतौ भौ० [विपूर्वः] । विकसतीति विकुस्रम्—पुष्पितम् । विकुस्रः—चन्द्रमाः । कर्त्ता ॥

शदेरू च ॥३४॥

रक् स्यात्, ऊ चोपधायाः । शद्लृ शातने भौ० । शीयत इति शूद्रः—वर्णान्तः । कर्त्ता ॥

स्थश्च ॥३५॥

पूर्ववत्, ऊ चान्तादेशः । ष्ठा गतिनिवृत्तौ । तिष्ठतीति स्थूरः—उच्चः । कर्त्ता ॥

अमितम्योर्दीर्घश्च ॥३६॥

पूर्ववत्, दीर्घश्चोपधायाः । अम गत्यादौ भौ० । अमति अम्यते आम्रः—चूतः । कर्त्ता कर्म । तमु काङ्क्षायाम् । ताम्यति तम्यते वा तज्जनैरिति ताम्रम्—लोहविकारः । कर्त्ता कर्म ॥

दुरीणो लोपश्च ॥३७॥

दुर्युपपद इणो रक्, लोपश्चास्य धातोः,दुरो दीर्घश्च । इण् गतौ अ० दुर्पूर्वः । कृच्छ्रेणेयत इति दूरम्—विप्रकृष्टम् । कर्म ॥

कृतेश्छक् क्रू च ॥३८॥

छक् च क्रू च छक्क्रू, रक्, छक् क्रू चागमादेशौ स्तः । कृती छेदने[2] । कृन्तति

१. 'हर्षुकः' इति ह. । २. 'वेष्टने' इति ह. ।

कृत्यते वाऽनेनेति **कृच्छ्रम्**—दुःखम्। कर्त्ता कर्म च। कृन्तति **क्रूरः**—पापकर्मा, अमृदुश्च। कर्त्ता॥

**रोदेर्णिलुक् च ॥३९॥**

रोदे रक्, णिलुक् स्यात्। रुदिर् अश्रुविमोचने अ०। रोदयति दानवयोषित इति **रुद्रः**—शिवः। कर्त्ता॥

**बहुलमन्यत्रापि संज्ञाछन्दसोः ॥४०॥**

अन्यस्मादन्यस्मिन् प्रत्यये परतः [संज्ञायां छन्दसि च] बहुलं णिलुक स्यात्। तत्र संज्ञायाम्—दिवु क्रीडादौ, क्विप्। देवयतीति **द्यौः**—स्वर्गः, अन्तरिक्ष वा। कर्त्ता कर्म। डुकृञ् ण्यन्तः, क्विप् पुण्यपूर्वः। पुण्यं कारयतीति **पुण्यकृत्**—देवः। कर्त्ता। धृ धारणे भ्वा० ण्यन्तः, चक्रपूर्वः। चक्रं धारयतीति **चक्रधरः**। अम्बु धारयतीति **अम्बुधरः**। वज्रं धारयतीति **वज्रधरः**। छन्दसि—"**वर्धन्तु** त्वा सुष्टुतयो गिरो मे" [ऋ० ७।९९।७]। वृधु वृद्धौ भ्वा०। लोटः प्रथमपुरुषबहुवचनम। वर्धयन्तु इति प्राप्ते।"अग्ने **शर्ध** महते सौभगाय" [ऋ० ५।२८।३]। शृधु उन्दे। लोण्मध्यमैकवचनम्! शर्धयेति प्राप्ते। "नेमि **नमन्ति**" [ऋ० ८।९७।१२]। णमु प्रह्वत्वे शब्दे च। लटः प्रथमपुरुषबहुवचनम्। नमयन्तीति प्राप्ते। "**जजान** गर्भं महिमानमिन्द्रम्"। [अथ० ३।१०।१२]। जन जनने, जनी प्रादुर्भावे। लिटः प्रथम०। जनयामासेति प्राप्ते।

बाहुलकत्वादसंज्ञाछन्दसोरपि णेर्लुक् स्यात्। शुष शोषणे दि०, मुच्लृ मोचने, रुह बीजजन्मनि प्रादुर्भावे च, पर्णपूर्वः ण्यन्तः, क्विप्। पर्णानि शोषयतीति **पर्णशुट्**, पर्णशुषौ। पर्णानि मोचयतीति **पर्णमुक्**, पर्णमुचौ। पर्णानि रोहयतीति **पर्णरुट्**, पर्णरुहौ—वायवः। कर्त्ता। उक्तं हि—

**"वान्ति पर्णशुषो वातास्ततः पर्णमुचोऽपरे।**
**ततः पर्णरुहो वान्ति ततो देवः प्रवर्षति**[1]"॥

डुकृञ् ण्यन्तः। लिटः प्रथमपुरुषबहुवचने अस्य 'महतः कारयाञ्चक्रुः' इति प्राप्ते 'महतश्चक्रुरानन्दान्' इति भवति॥

**जोरी च ॥४१॥**

जोर्धातो रक् स्याद् ईकारान्तादेशश्च। जु गतौ भ्वा०। जवते जूयते वा **जीरः**—अग्निः, द्रव्यम्, वायुर्वा। कर्त्ता कर्म च॥

१. अनुपलब्धमूलमिदम्।

## सुसूधाञ्गृधिभ्यः क्रन् ॥४२॥

एभ्यः क्रन् स्यात् । षुञ् अभिषवे । सुन्वन्ति सूयते वा सुराः—देवाः । कर्त्ता कर्म च । षूङ् प्राणिगर्भविमोचने अा०, षू प्राणिप्रसवे दे०, षू प्रेरणे भ्वा० । [सूते] सूयते [सुवति] वा सूरः—आदित्यः । कर्त्ता । डुधाञ् धारणपोषणयोः । दधात्यापत्सु चित्तमिति धीरः—सत्त्ववान् । कर्त्ता । गृधु अभिकाङ्क्षायां दे० । गृध्यति यत्र [तत्र] इति गृध्रः—लुब्धकः । गृध्यत्यामिषमिति गृध्रः—श्येनः । कर्त्ता ॥

## शुसिचिमिभ्यो दीर्घश्च ॥४३॥

एभ्यः क्रन् स्याद् दीर्घश्चैषाम् । शु गतौ । शवति संग्रामं, शूयते वाऽसौ रिपुभिरिति शूरः—जेता[1] । कर्त्ता कर्म च । षिञ् बन्धने । सिनोति सीयते वा सीरः—लाङ्गलम्, हलविलेखिता लेखा च । कर्त्ता कर्म च । चिञ् चयने । चिनोति चीयते वा चीरः—[मुनिजनवासः । कर्त्ता कर्म च । डुमिञ् प्रक्षेपणे सौ० । मिनोति मीयते वा मीरः—] देशसीमा । कर्त्ता कर्म च ॥

## वाविन्धेः ॥४४॥

वावुपपदे इन्धेः क्रन् स्यात् । इन्धी दीप्तौ रौ० विपूर्वः । विविन्धमिन्द्धे इध्यते वा ज्योतिभिरिति वीध्रम्—निर्मलं नभः[2], पूर्णचन्द्रमण्डलं च । कर्त्ता कर्म च ॥

## वृधिवपिभ्यां रन् ॥४५॥

आभ्यां रन् स्यात् । वृधु वृद्धौ भ्वा० । वर्धते तदम्भसा स्पृष्टमिति वर्ध्रम्—चर्मच्छेदः । कर्त्ता । डुवप् बीजतन्तुसन्ताने । उप्यतेऽस्मिन् बीजमिति वप्रम्—क्षेत्रम्, प्राकारजातिर्वा[3] ॥

## ऋज्रेन्द्राग्रवज्रविप्रकुब्ज[चुब्ज]क्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लशुभ्रतीव्रवर्णरामालाः ॥४६॥

एते शब्दा निपात्यन्ते रन्प्रत्यये निरूढाः । अर्ज सर्ज अर्जने भ्वा०, ऋजि भृजी भर्जने । अर्जेरलोप उपधाया ऋकारादेशो निपात्यते, ऋञ्जतेरगुणत्वं [नलोपः] च । अर्जति ऋञ्जते[4] वा ऋज्रः—नायकः । कर्त्ता । इदि परमैश्वर्ये भ्वा०, इन्धी दीप्तौ रौ० । इन्धेर्दकारोऽन्त्यस्य निपात्यते । [इन्दति] इन्धते इध्यते वा तेजोभिरिति वा इन्द्रः—शक्रः । कर्त्ता कर्म च । अगि गत्यर्थः । अस्य नलोपो निपात्यते । अङ्ग्यत

---

१. 'तेजा' इति क. ।

२. 'अग्निमलं नभः' इति ह. ।

३. 'कर्त्ता' इत्यधिकं ह. ।

४. 'अर्जयति' इति ह. ।

इति **अग्रम्**—श्रेष्ठम् । कर्म कर्त्ता वा । व्रज गतौ । अस्य रेफलोपो निपात्यते । [व्रजति सर्वत्र प्रेरित इति **वज्रम्**—पविः । कर्त्ता । प्रा पूरणे आ०, पा रक्षणे आ० विपूर्वः । प्राते रेफाकारलोपो निपात्यते,] पातेराकारलोपश्च । **विविधं** प्राति पाति वा दातारमिति **विप्रः**—ब्राह्मणः । कर्त्ता । कुवि आच्छादने । अस्य नलोपो निपात्यते धश्चान्तस्यागुणत्वं च । कुंव्यत इति **कुध्रम्**—गृहस्थानम् । कर्त्ता । चुबि वक्त्र-संयोगे । अस्य नलोपो धश्चान्त्यस्यागुणत्वं च निपात्यते । **चुम्बत** इति **चुध्रम्**—मुखम् । कर्त्ता । क्षुर खुर विलेखने तौ० । अनयो रेफलोपो निपात्यते । क्षुरतीति **क्षुरः**—नापितशस्त्रम् । कर्त्ता । खुरतीति **खुरः**—शफः । कर्त्ता । भदि कल्याणे सौख्ये च भ्वौ० । अस्य नलोपो निपात्यते । भन्दत इति **भद्रम्**—कल्याणम् । कर्त्ता । गम्लृ गतौ भ्वौ० उत्पूर्वः । अस्य टिलोप उपसर्गान्त्यस्य लोपो निपात्यते[1] । [उद्गच्छतीति **उग्रः**—क्रूरः। कर्त्ता । गॄ निगरणे तौ० उत्पूर्वः। अस्य ॠवर्णलोपो निपात्यते,]उपसर्गान्त्यस्य च । उद्गिरतीति **उग्रः**—कपटी । ञिभी भये जौ० । अत्र प्रत्ययस्य वा लत्वं निपात्यते । बिभेतीति **भेलः**, **भेरः**—शरः, मण्डूको वा । कर्त्ता । शुभ दीप्तौ । अस्य कोऽन्त्या-देशो निपात्यते प्रत्ययस्य वा लत्वमगुणत्वं च । शोभत इति **शुक्रः**, **शुक्लः**—कविः दैत्यगुरुः । **शुक्रम्**—रेतश्च । 'शोकतेः' इति एके । शुभतीति **शुभ्रम्**—पाण्डुवर्णः । कर्त्ता । तिपृ क्षरणार्थः । अस्योपधाया दीर्घत्वं वश्चान्तादेशो निपात्यते । तिप्यत इति **तीव्रम्**—निष्ठुरम् । कर्म । वृञ् वरणे सौ० । अस्य प्रत्ययस्य नत्वं निपात्यते । वृणोति व्रियते वासाविति **वर्णः**[2]—श्वेतादिगुणसंज्ञा ब्राह्मणादीनां वा । अथवा वर्ण क्रियादौ । अस्य प्रत्ययस्याकारादेशो निपात्यते । वर्णयति वर्ण्यते वेति **वर्णः**—अकारादिः । कर्त्ता कर्म च । इण् गतौ आ० । अस्यागुणत्वं निपात्यते । एति ईयते[3] वा **इरा**—धान्यजातिः । कर्त्ता कर्म च । मान पूजायां भ्वौ०, मल धारणे । आद्यस्य धातोर्नलोपो निपात्यते प्रत्ययस्य लत्वम्, द्वितीयस्योपधाया दीर्घत्वं प्रत्ययस्य वा अकारः । मान्यतेऽनया मलन्ते[4] वा तामिति **माला**—स्रक् । करणं कर्म[5] ।।

**कॄगॄशॄवृञ्चतिभ्यः ष्वरन् ।।४७।।**

**[इतोऽग्रे हस्तलेखः खण्डितः]**

---

१. 'अस्य लिटिलो उपसर्गान्त्यस्य लोपो निपात्यते ।' इत्यपपाठो ह. ।
२. 'वासः' इत्यपपाठो ह. ।
३. 'अयति' इति ह. ।
४. 'मलयति' इति ह. ।
५. 'कर्त्ता' इति ह. ।

# [ श्रीविट्ठलाचार्यकृता वृत्तिः (३) ]

## ॥ प्रथमः पादः ॥

**अशवतॄभ्योऽनिः ॥१॥**

अशनिः—वज्रः । अवनिः—भूः । तरणिः—सूर्यः ॥

**अर्तिसृधृधमिभ्यश्च ॥२॥**

एभ्योऽनिः । अरणिः—अग्निपात्रम् । सरणिः—पन्थाः । धरणिः—भूः । धमनिः—वंशैकदेशे ॥

**आङि शुषेः सनश्छन्दसि ॥३॥**

आङ्पूर्वाच्छुषेः सनन्तादनिः स्याच्छन्दसि । भाषायामपीति केचित् । आशुशुक्षतीति आशुशुक्षणिः—अग्निः ॥

**कृषेरादेश्च चः ॥४॥**

कृषेरनिः स्यादादेश्च चकारः । कर्षति कृषतीति वा चर्षणिः—वृषः ॥

**अदेर्मुट् च ॥५॥**

अनिर्मुडागमः । अत्तीति अद्मनिः—अग्निरश्वो वा ॥

**वृतेः[1] ॥६॥**

वर्ततेऽनया वर्तनिः[2]—पन्थाः ॥

**क्षिपेः किच्च ॥७॥**

क्षिपतेरनिः कित् । क्षिप्यते क्षिपणिः—अस्त्रं वडिशं दण्डश्च ॥

**जसिसहोरुरिन् ॥८॥**

जस्यते जासयते वा जसुरिः—समाधिरशनिर्वा । सहते सहुरिः—पृथिव्यक्रोधनौ ॥

**भुवोऽनिच् ॥९॥**

भवतेरनिः स्यात् । भवन्त्यस्यां भूतानि भवनिः—लोकस्थितिः ॥

**असिसञ्जिभ्यां क्थिन् ॥१०॥**

---

१. 'वृत्तेः' इति मुद्रितेऽपपाठः ।   २. 'वर्तिः' इति मुद्रितेऽपपाठः ।

अस्यत अस्थि—कीकसम् । सञ्जते सक्थि—उरुः ॥

**प्लुषशुषकुषिभ्यः क्सः ॥११॥**

प्लुष्णाति प्लुष्यति वा प्लुक्षिः—अग्निजठरौ । शुष्यति तेन शुक्षिः—तेजः । कुष्यति कुक्षिः—उदरपार्श्वम् ॥

**अशेर्नित् ॥१२॥**

अशेः क्सः निच्च । अश्नाति अश्नुते वानेन रूपम् अक्षि—नेत्रम् ॥

**नियो मिः ॥१३॥**

नयति नेमिः—चक्रान्तः ॥

**अर्त्तेरूच्च ॥१४॥**

अर्तेर्मिः ऊच्चादेशः । ऋच्छति इर्यति अर्यते वा ऊर्मिः—तरङ्गः ॥

**अशे रश् च ॥१५॥**

अशेर्मिः[1] स्याद् रशादेशश्च । अश्नाति अश्नुते रश्मिः ॥

**भुवः कित् ॥१६॥**

भवन्त्यस्यां भूमिः ॥

**दल्मिः ॥१७॥**

दलेर्निपातः । दलयति दल्यतेऽनेन वा दल्मिः—आयुधम् ॥

**वीज्याहाज्वरिभ्यो निः ॥१८॥**

वीयते वेणिः । बाहुलकाण्णत्वम् । जिनाति ज्यानिः । हानिः । ज्वरति जूर्णिः ॥

**सृवृषिभ्यां कित् ॥१९॥**

आभ्यां निः स्यात् स च कित् । सरत्यनेन सृणिः—अङ्कुशः । वर्षति वृष्णिः—यादवः ॥

**अङ्गेर्नलोपश्च ॥२०॥**

अङ्ग्यते अङ्गति वा अग्निः ॥

**वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् ॥२१॥**

एभ्यो निः स च नित् । वहति हव्यं वह्निः । श्रयन्त्येतां श्रेणिः—सङ्घः । श्रूयते पुम्भिः श्रोणिः—कटिः । युवन्त्यस्यां योनिः—प्रकृतिः, भगश्च । द्रोणिः । ग्लायन्त्यनया ग्लानिः—दौर्बल्यम् । हीयते हानं वा हानिः । त्वरते त्वरणं वा तूर्णिः ॥

---

१. 'निः' इत्यपपाठो मुद्रिते ।

**घृणिपृश्निपार्ष्णिचूर्णिभूर्णि ॥२२॥**

एते निपात्याः । जिघर्तीति **घृणिः**—सूर्यः । स्पृशतीति **पृश्निः** । स्पृशन्त्यनया **पार्ष्णिः** । [चरतीति **चूर्णिः** ।] भवति **भूर्णिः** ।

बहुलाद् **घूर्णिः**—शनिः । **कृणिः** ॥

**वृदृभ्यां विन् ॥२३॥**

वृणाति **वर्विः**—धात्री । दृणात्यनया **दर्विः** ॥

**जृशृस्तृजागृभ्यः क्विन् ॥२४॥**

एभ्यः क्विन् । जीर्यतीति **जीर्विः**— कायः । शृणाति **शीर्विः**—हिंस्रः । स्तृणाति **स्तीर्विः**—अध्वर्युः, प्राणजातिश्च । **जागृविः** ॥

**दिवो द्वे दीर्घश्चाभ्यासस्य ॥२५॥**

दीव्यत्यनेन **दीदिविः**—अन्नम् ॥

**कृविघृष्विच्छविस्थविदविकिकिदिविः' ॥२६॥**

एते निपात्यन्ते । करोति **कृविः**—कारुः । जिघर्ति **घृष्विः**—वाय्वग्नी । छादयति **छविः**—शोभा । तिष्ठति **स्थविः**—स्थावरः, अग्निश्च । ददाति **दविः**—दाता । कौति कवते वा **किकिः**—विद्वान् । दीव्यति **दिविः**— द्यूतकितवौ ।

बाहुलकाद् **रविः** ॥

**पातेर्डतिः ॥२७॥**

पाति **पतिः** ॥

**अमेरतिः ॥२८॥**

अमतीति **अमतिः**—व्याधिः, गतिः ॥

**वहिवस्यर्तिभ्यश्चित् ॥२९॥**

एभ्योऽतिः स च चित् । वहतीति **वहतिः**—वायुः, अनड्वांश्च । वसत्यस्यां **वसतिः**—आश्रयः । ऋच्छतीति **अरतिः**—वायुः, मरणं च ॥

**अञ्चेः को वा ॥३०॥**

**अतिः** स्यात् कादेशश्च वा । अञ्चति अच्यते वा **अञ्चतिः**, **अङ्कतिः**—ब्रह्मवाय्वग्निघृणयः ॥

---

१. '० स्थविर्दवि किकीदिविः' इति मुद्रितेऽपपाठः ।

**हन्तेरंह च ॥३१॥**

हन्तेरंहादेशश्च । हन्ति हन्यते वा **अंहतिः**—पन्थाः, कालः, रथश्च ॥

**रमेर्नित् ॥३२॥**

स च नित् । रमतेऽस्यां **रमतिः**—क्रीडा ॥

**सुञो रिन्[1] दीर्घश्च ॥३३॥**

सुनोति सूयते वा **सूरिः**—पण्डितः ॥

**अदिशदिभूशुभिभ्यः क्रिन् ॥३४॥**

अत्ति अद्यते वा **अद्रिः** । शद्यते **शद्रिः**—वज्रम् । भवति **भूरिः**—बहु । शोभते **शुभ्रिः**—दर्शनीयः ॥

**वङ्क्र्यादयः ॥३५॥**

निपात्याः । वञ्चते वङ्कते वा **वङ्क्रिः**—शल्यम् । मङ्कते **मङ्क्रि**—शठः । **अक्रिः**—अङ्क्यम् ॥

**राशतिभ्यां त्रिप् ॥३६॥**

राति निद्रां **रात्रिः** । शतिः सौत्रः । शततीति **शत्रिः**—हस्ती ॥

**अदेर्निच्च ॥३७॥**

अदेस्त्रिः स च नित् । अत्ति **अत्रिः**—ऋषिः ॥

**मृकणिभ्यामीचिः ॥३८॥**

म्रियते **मरीचिः** । कणति कण्यते वा **कणीचिः**—चक्षुःप्राणौ ॥

**वेञो डिच्च ॥३९॥**

ईचिः स च डित् । वयतीति **वीचिः** ॥

**श्वयतेश्चित् ॥४०॥**

ईचिः स च चित् । श्वयति इ **यीचिः**—चन्द्रः ॥

**नौ षञ्जेर्घथिन् ॥४१॥**

निषजति निषज्यते वा **निषङ्गथिः**—रथकूबरः ॥

**उद्यतेश्चित् ॥४२॥**

---

१. 'रित्' इति मुद्रिते पाठः ।

उत्पूर्वादर्तेरथिन् स च चित् । उदृच्छति उदर्यते उदरथिः—वप्राग्धिकायाः ॥

सर्तेर्णित् ॥४३॥

अथिन् स च णित् । सावति सारथिः ॥

अमेर्गुरी रश्च लो वा ॥४४॥

अमेर्गुरिः स्यात् तस्य च वा लः । अमति अङ्गुरिः, अङ्गुलिः ॥

इन्[1] सर्वधातुभ्यः ॥४५॥

कवते कविः । पविः—वज्रम् । परिः—मोक्षमार्गः ॥

हृपिशिरुहिवृतिविदिकीर्तिभ्यश्च ॥४६॥

एभ्य इन्[1] । हरति हरिः—विष्णुसिंहाद्याः । पिशति पिश्यते वा पिशिः—केशोण्डकमण्डलवः पेशलश्च । रोहति रोहिः—जन्म । वर्तते वर्त्यते वा वर्तिः । वेत्ति वेदिः—त्र्यधिष्ठानम् । कीर्तिः सौत्रः । कीर्तनं कीर्तिः ॥

इगुपधात् कित् ॥४७॥

इन्[1] स च कित् । भिनत्ति भिदिः—वज्रम् । छिदिः—परशुः, शस्त्रम् । शोचति जनं क्लिश्यमानं शुचिः—विद्वान् । ऋषिः । कृषिः ॥

भ्रमेः सम्प्रसारणं च ॥४८॥

इन्[1] स च कित् । भ्रमति भ्राम्यति वा भृमिः—वायुः ॥

क्रमितमिस्तम्भामत इच्च ॥४९॥

एभ्य इन्[1] स च कित्,एषामस्य इत् । क्रामति क्रिमिः—प्राणी । ताम्यति तिमिः—मत्स्यः । स्तभ्नाति स्तिभिः—अम्भोधिः ॥

मनेरुच्चोपधायाः ॥५०॥

इन्[1] उपधाया उच्च । मन्यते मुनिः ॥

वल्लेर्वलिश्चाहिरण्ये ॥५१॥

इन्[1] वलिरादेशश्च अहिरण्ये । वल्लः सौत्रः । वल्लते वलिः—त्वङ्मांससंकोचः । अहिरण्ये किम् ? वल्लिः—हिरण्यशलाका ॥

---

१. 'इञ्' इति मुद्रितेऽपपाठः ।

**वसिवपिवदिराजिव्रजिध्वजिसदिहनिकमिकषिवाशिवारिभ्य इञ् ॥५२॥**

पुनरिञ्विधिबलान्नित्यम्[1] । वसति **वासि**—तक्ष्णो भाण्डी । वपत्यस्यां **वापिः**—पुष्करिणी । वदत्यस्यां **वादिः**—वीणा । राजति **राजिः**—लेखा । व्रजति **व्राजिः**—मनः । ध्वजति **ध्वाजिः**—अश्वः । सीदति **सादिः**—अश्वारोहः । हन्ति **हानिः** । काम्यते **कामिः**—कामुकः । कषति **काषिः**—हिंसकः । वाश्यते **वाशिः**—जलदः । वार्यते **वारिः** ॥

**नहो भश्च ॥५३॥**

इञ् भोऽन्तादेशश्च । नह्यते **नाभिः** ॥

**कृषेर्वृद्धिश्छन्दसि ॥५४॥**

इञ् वृद्धिश्च । कर्षति **कार्षिः** । छन्दसि किम् ? कृषिः ॥

**श्रः शकुनौ ॥५५॥**

इञ् वृद्धिश्च । शृणाति **शारिः** । शकुनौ किम् ? शरिः—हिंस्रः, शूलं च ॥

**कृञ उदीचां कारुषु ॥५६॥**

इञ् वृद्धिश्च । **कारिः**—शिल्पी । उदीचां किम् ? करिः—विष्णुः ॥

**जनिघसिभ्यामिण् ॥५७॥**

जायते **जनिः**—प्रादुर्भावः । घासिः—अग्निः ॥

**अज्यतिभ्यां च ॥५८॥**

अजति **आजिः**—युद्धम् । अततीति **आतिः**—पक्षी ॥

**पादे च ॥५९॥**

अज्यतिभ्यामिण् । पादाभ्यामजति पदाजिः । **पदातिः** । **'पादस्य पद्०'** [अ० ६।३।५१] इति पद्भावः ॥

**अशिपणाय्यो रुडायलुकौ च ॥६०॥**

आभ्यामिण् यथाक्रमं रुट् आयलुक् चागमादेशौ स्तः । अश्नाति अश्नुते वा **राशिः**—लग्नम्, यवादिसङ्घो वा । पणाय्यतेऽनेनेति **पाणिः** ॥

---

१. अन्यासु सर्वासूणादिवृत्तिषु पूर्वत्र 'इन्'प्रत्यय एवोपलभ्यते । अस्यामुणादिवृत्तावपि ञित्वाद् या वृद्धिः प्राप्नोति सा नोदाहरणेषु दृश्यते । अतः पूर्वत्र 'इन्' इत्येव भाव्यम् । अत्र वृत्तिकारः किं विवक्षतीति न जानीमो वयम् ।

वेञो डित् ॥६१॥

वयतीति विः—पक्षी, तन्तुवायश्च ॥

प्रे हरतेः कूपे ॥६२॥

इण् स च डित् । प्रह्रियतेऽस्मादुदकं प्रहिः—कूपः ॥

नौ व्यो यलोपः पूर्वस्य च दीर्घः ॥६३॥

निपूर्वाद् व्येञ इण् स च डित् यलोपः पूर्वपददीर्घश्च । निवीयते नीविः ॥

समाने ख्यः स चोदात्तः ॥६४॥

समानपूर्वात् ख्यातेरिण् स च डित् यलोपः समानस्य सादेशः स चोदात्तः । समानं ख्यायते सखा—वयस्यः ॥

आङि श्रिहनिभ्यां ह्रस्वश्च ॥६५॥

आङ्पूर्वाभ्याम् आभ्यामिण् डिच्च आङो ह्रस्वत्वं चोदात्तत्वं च । आश्रीयते अश्रिः—कोणः । आहन्ति प्राणिनम् अहिः ॥

अच इः ॥६६॥

पुनाति पविः । भवति भविः ॥

खनिकष्यज्यसिवसिध्वनिसनिग्रन्थिचरिभ्यश्च ॥६७॥

इः । खन्यते खनिः । कष्यते कषिः । अज्यते अजिः—तेजः । अस्यते असिः । वसत्यस्यां वसिः । ध्वनति ध्वनिः । सनोति सनिः—भक्तिः, दानं च । ग्रथ्यते ग्रन्थिः। चर्यतेऽस्मिन् चरिः—विषयः ॥

उभेर्द्वौ च ॥६८॥

उभेरिः द्वादेशश्च । उभति उभ्यते वा द्वौ ॥

वृतेश्छन्दसि ॥६९॥

वर्त्तिः—द्रव्यम्, दीपाङ्गं च ॥

भुजेः किच्च ॥७०॥

इः स च कित् । भुनक्ति भुज्यते वा भुजिः—सूपः, भोगश्च ॥

कॄगॄशॄपॄकुटिभिदिछिदिभ्यश्च ॥७१॥

इः किच्च । किरति कीर्यते वा किरिः—आखुः, बिलं च । गिरिः । शिरिः—शलभः, शिला च । पुरिः—पूः, भूपश्च । कुटिः—शरीरम् । भिदिः—प्रहरणम् । छिदिः—शस्त्रम् ॥

कुडिकम्प्योर्नलोपश्च ॥७२॥

इः किच्च नलोपश्च । कुडिः—कायः, आलयश्च । कपिः—कृशानुवानरौ ॥

वसिवितसस्तिः ॥७३॥

वसत्यस्यां बस्तिः—गुह्यमङ्गम् । वितस्यतेऽनया वितस्तिः ॥

पर्थेर्नित् ॥७४॥

तिर्निच्च । पत्तिः—भागः ॥

दृणातेः कित् ह्रस्वश्च ॥७५॥

दीर्यते दृतिः—प्लवः ॥

पातेरतिः ॥७६॥

पाति पातिः ॥

वातेर्नित् ॥७७॥

अतिर्निच्च । वातीति वातिः—गन्धमिश्रपवनः ॥

तनोतेर्ड्रिः ॥७८॥

तनोति तन्द्रिः ॥

जीर्यतेः क्रिन् रश्च वः ॥७९॥

क्रिन् रस्य वादेशः । जीर्यते जिव्रिः—देहम् ॥

ग्रहेरनिः ॥८०॥

गृह्णाति गृह्यते वा ग्रहणिः—उदरान्तरस्थानम् ॥

॥ इतीदन्ताः ॥

[1] [अवितृस्तृतन्त्रिभ्य ईः ॥८१॥

अव रक्षणे । तॄ प्लवनतरणयोः । स्तॄञ् आच्छादने । तत्रि कुटुम्बने । अवीः—भूपालभूभृतौ । तरीः—नौः, वायुः । स्तरीः—शयानः शयनं वा । तन्त्रीः—शुष्कस्नायुः ॥

लक्षेर्मुट् च ॥८२॥

लक्षेरीप्रत्ययस्तस्य मुडागमश्च । लक्षयन्ति कृतिनो लक्ष्यते वा कृतिभिः लक्ष्मीः॥][1]

१. इमे द्वे सूत्रे वृत्तिकारेण दशपाद्युणादिसूत्राणां व्याख्यानात् पूर्वं प्रक्रियाकौमुदी-व्याख्याने व्याख्याते (द्र०—प्र० कौ० भा० २, पृष्ठ ६०१-६०२)।

## यापोः किद् द्वे च ॥८३॥

ईः कित्, द्वित्वं चानयोः। यात्यनेन ययीः—मुक्तमार्गः। पिबति पातीति पपीः—सूर्यः ॥

## वातप्रमीः ॥८४॥

निपातः। वातं प्रमिनोति वातप्रमीः ॥

॥ इति ईदन्ताः ॥

## [1][कृवापाजिमिस्वदिसाध्यशूभ्य उण् ॥८५॥

डुकृञ् करणे। वा गतिगन्धनयोः विशेषणे च। पा पाने। जि जये। डुमिञ् प्रक्षेपणे। ष्वद स्वादे। साध ससिद्धौ। अशू व्याप्तौ। कारुः। णित्त्वाद् वृद्धिः। 'अचो ञ्णिति' (अ० ७।२।११५) इति। कारुः—शिल्पी, इन्द्रः, वेधाः। 'आतो युक्०' (अ० ७।३।३३)। पायुः इति। पायुः—वस्तिः। जायुः—अग्निः, औषधं वा। मायुः—पित्तम्। स्वादुः—रसः। साधु। आशु इत्यव्ययं क्लीबं वा क्रियाविशेषणम्॥]

## छन्दसीणः ॥८६॥

उण्। एति आयुः। जरायुः ॥

## दृसनिजनिचरिचटिरहिभ्यो ञुण् ॥८७॥

दृणाति दीर्यते दारुः। सनोति सन्यते वा सानुः—पर्वतैकदेशः। जायते जानुः। चरति चारुः। चटति चाटुः। रहयति राहुः। प्रत्ययान्तरं 'ञ्नित्यादिः०' [अ० ६।१।१९७] इत्याद्युदात्तार्थम्। द्विरनुबन्धकरणं 'जनिवध्योश्च' [अ० ७।३।३५] इति ह्रस्वनिषेधार्थम् ॥

## किञ्जरयोः श्रिणः ॥८८॥

किंजरापूर्वाभ्यां शॄ इण्भ्यां ञुण्। किंशृणातीति किंशारुः—सस्यशूकम्। जरामेति जरायुः—गर्भवेष्टनम् ॥

## त्रो रश्च लः ॥८९॥

तॄ ऋ आभ्यां ञुण् रस्य लः। तरन्त्यस्मिन् वर्णाः तालु—वदनैकदेशः। ऋच्छतीति आलुः—शाकम् ॥

## कृके वचः कश्च ॥९०॥

---

१. इदं सूत्रं वृत्तिकारेण दशपाद्युणादिसूत्राणां व्याख्यानात् पूर्वं प्रक्रियाकौमुदीव्याख्याने व्याख्यातम् (द्र०—प्र० कौ० भा० २, पृष्ठ ६००-६०१)।

नुण्। कुकं वक्ति कृकवाकुः—कुक्कुटः, कृकलासश्च ॥

**भृमृशीतॄचरित्सरितनिमिमस्जिभ्य उः ॥९१॥**

बिभर्ति भरुः—धारयिता, स्वामी च। म्रियन्तेऽस्मिन् मरुः—अजलतृणो देशः। शेतेऽत्यर्थं शयुः—अजगरः। तरन्त्यस्मिन् तरुः। चरन्ति देवाः चरुः। त्सरति त्सरुः—खड्गादिमुष्टिः। तनोत्याहारं तनुः—कायः। मीयते मयुः—पशुः, आकूतं च। मज्जन्त्यस्मिन् मधूनि मद्गुः—पक्षी। न्यङ्क्वादित्वात् [अ० ७।३।५३] कुत्वम् ॥

**अणश्च ॥९२॥**

उः। अणतीति अणु—सूक्ष्मम् ॥

**धान्ये नित् ॥९३॥**

अण उर्निच्च धान्ये। अण्यते प्राणिभिः अणुः—धान्यविशेषः।

बहुलादन्यत्रापि। कटति कटुः। बटति बटुः ॥

**शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च ॥९४॥**

उः निच्च। शृणाति शरुः—क्रोधः, आयुधं च। स्वरति स्वरुः—वज्रम्। स्निह्यति स्नेहुः—स्निग्धः। त्रपते त्रपुः। अस्यन्ते अस्यन्ति वा असवः—प्राणाः। वसति कृतिषु वसुः—देवः, धनं वा। हन्ति हन्यते वा हनुः—मुखैकदेशः। क्लेदयति क्लेदुः—चन्द्रः। बध्नाति स्नेहेन बन्धुः। मन्यते मनुः—प्रजापतिः ॥

**स्यन्देः संप्रसारणं धश्च ॥९५॥**

उर्निच्च धान्तादेशः संप्रसारणं च। स्यन्दतेऽत्यर्थं सिन्धुः—नद्यादि ॥

**उन्देरिच्चादेः ॥९६॥**

उर्निच्च आदेरिदादेशश्च। उनत्तीति इन्दुः—चन्द्रः ॥

**इषेः किच्च ॥९७॥**

उः किच्च निच्च। इष्यते इषुः ॥

**स्कन्देः सलोपश्च ॥९८॥**

उर्निच्चादेर्लोपः। स्कन्दत्यस्मिन् कन्दुः—पाकस्थानम् ॥

**सृजेरसुम् च[1] ॥९९॥**

उर्नित् असुम् चागमः सलोपश्च। सृज्यते रज्जुः ॥

---

१. 'सृजेरसुमच्' इत्यपपाठो मुद्रिते।

**कृतेराद्यन्तविपर्ययश्च ॥१००॥**

उर्निच्च आद्यन्तवैपरीत्यं च । कृत्यतेऽनेन **तर्कुः**—सूत्रवेष्टना ॥

**नावञ्चेः ॥१०१॥**

उर्निच्च । नियतमञ्चति **न्यङ्कुः**—मृगविशेषः । न्यङ्क्वादित्वात् [अ० ७।३।५३] कुत्वम् ॥

**फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च ॥१०२॥**

उर्निच्च । फलेर्गुक् आगमः । **फल्गु**—गिरिः, असारं च । पाटेः पटिः । पाटयतीति **पटुः**—विशारदः । नमेर्नाकिः । नम्यतेऽनेन **नाकुः**—ऋषिः, वल्मीकश्च । मन्यतेर्धोऽन्तादेशः । मन्यतेऽत्यर्थं **मधु** । जनेस्तोऽन्तादेशः । जायते **जतु**—लाक्षा ॥

**वलेर्गुक् च ॥१०३॥**

गुगागमश्च । वलतीति **वल्गुः**—बलवान्, मधुरस्वभावश्च ॥

**शः कित् सन्वच्च ॥१०४॥**

उर्निच्च किच्च सन्वच्च । मातुः स्तन्यं श्यति **शिशुः** ॥

**यो द्वे च ॥१०५॥**

उः किच्च निच्च यातेर्द्वित्वं च । यान्ति तेन पुण्यं **ययुः**—अश्वमेधीयोऽश्वः ॥

**कुर्भ्रश्च ॥१०६॥**

भृञः कुः स्याद् द्वित्वं च । बिभर्ति भरति वा तेजो **बभ्रुः**—पिङ्गलः ।

प्राक्प्रत्ययनिर्देशोऽन्येषां सिद्धये । करोति सत्यं **चक्रुः** । हन्ति **जघ्नुः** । पूर्यतेऽसौ **पपुः**[1]—चन्द्रः ॥

**पॄभिदिव्यधिगृधिधृषिहृषिभ्यः ॥१०७॥**

कुः । पृणाति **पुरुः**—धर्मः, राजा च । भिनत्ति **भिदुः**—दम्भोलिः । विध्यतीति **विधुः**—नागाग्निकामचन्द्रशस्त्राणि । गृध्यति **गृधुः**—लुब्धः । धृष्णोति **धृष्णुः**—प्रगल्भः । हृष्यति **हृषुः**—हृष्टः ॥

**कृग्रोरुच्च ॥१०८॥**

कुः उश्चान्तादेशः । करोति **कुरुः**—जनपदः, राजा च । गृणाति **गुरुः** ॥

**अपदुस्सुषु स्थः ॥१०९॥**

---

१. 'पॄ'धातोस्तु'पपुरुः' इति स्यात् ।'पपुः' इति तु 'पा रक्षणे' अस्मात् सम्भवति।

अपतिष्ठति अपष्ठुः—बालः । दुःखेन तिष्ठति दुष्ठुः—अशोभनः । सुखेन तिष्ठतीति सुष्ठुः—शोभनः । भावेऽपि । अपष्ठु । दुष्ठु । सुष्ठु ॥

रपेरिच्चोपधायाः ॥११०॥

कुः । रपति दुष्टं रिपुः ॥

अर्जिदृशिकम्यमिपशिबाधामृजिपशितुक्धुक्दीर्घहकाराश्च ॥१११॥

कुः । अर्जेर्ऋजिरादेशः । अर्जयति यशः ऋजुः । दृशेः पश् । पश्यति पशुः । कमेस्तुगागमः । काम्यते कन्तुः—कामकामुकौ । अमेर्धुक् च । अमतीति अन्धुः । पशेः सौत्रस्योपधादीर्घः । पश्यते वायुना पांशुः । बाधेर्हः । बाधतेऽरीन्[1] बाहुः ॥

प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च ॥११२॥

कुः । प्रथते पृथुः—विशालः, राजा च । म्रदते मृदुः । भृज्जति भृगुः । न्यङ्क्वादित्वात् [अ० ७।३।५३] कुः ॥

लङ्घिबंह्योर्नलोपश्च ॥११३॥

कुः । लङ्घ्यते लघुः । बंह्यते बहुः ॥

ऊर्णोतेर्नुलोपश्च ॥११४॥

कुः । ऊर्णोति ऊरुः ॥

महति ह्रस्वश्च ॥११५॥

ऊर्णोति ऊर्णूयते च उरुः—महान् ॥

श्लिषेः कश्च ॥११६॥

कश्चान्तादेशः । श्लिष्यति श्लिकुः—भृत्योद्यमौ ॥

आङ्परयोः खनिशृभ्यां डिच्च ॥११७॥

कुः डिच्च । आखनति आखुः । परान् शृणाति परशुः ॥

हरिमितयोर्द्रुवः ॥११८॥

कुः डिच्च । हरिभिर्द्रूयते हरिद्रुः—द्रुमः । मितं द्रवति मितद्रुः—समुद्रः । बहुलादन्यत्रापि । शतधा द्रवति शतद्रुः—नदी, नदश्च ॥

खरुशङ्कुपीयुनीलङ्गुलिगु ॥११९॥

क्वन्ता निपात्यन्ते । खनति खोरति खुरति वा खरुः—मूर्खकथनखुराः । शङ्कते-

ऽस्मात् शङ्कुः—कीलः। पिबति तेजः पीयुः—स्वर्णम्। पिबत्यायुः पाति महान्तं पीयुः—कालः, भूपश्च। नीलं गच्छति नीलङ्गुः—क्रिमिः। लगति लिगुः—मूर्खः॥

मृगय्वादयश्च ॥१२०॥

क्वन्ता निपात्यन्ते। मृगं याति मृगयुः। अस्माद् याति अस्मयुः—जिह्मः। भुवं याति भुरण्युः—वह्निः। वरे याति वरेण्युः[1]—आदित्यमरुतौ॥

[2][सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् ॥१२१॥

सिनोति सेतुः। तनोति तन्यते वा तन्तुः। गच्छतीति गन्तुः। मस्यति मस्तुः। सचते सक्तुः। अवति ओतुः। दधाति धातुः। क्रोशतीति क्रोष्टा॥]

पः किच्च ॥१२२॥

तुन्[3] किच्च। पिबति पाति पाययति वा पातुः॥

अर्त्तेश्च तुः ॥१२३॥

स किच्च। ऋच्छत्यर्यते वा ऋतुः॥

कमिमनिजनिगाभापायाहिभ्यश्च ॥१२४॥

तुः। कामयते कन्तुः। मन्यते मनुते मन्तुः—मनः, अपराधश्च। जायते जन्यते जन्तुः। गायति गातुः। भाति भातुः—अर्चिष्मान्। पाति पातुः—पालकः। यातीति यातुः—पान्थः। हिनोति हेतुः॥

चायः की ॥१२५॥

चाय्यते केतुः॥

आप्नोतेर्ह्रस्वश्च ॥१२६॥

आप्नोति अप्तुः—यज्ञयोनिः, जन्तुश्च।

बहुलादन्यत्रापि। अमतीति अन्तुः॥

वसेस्तुन् ॥१२७॥

वसन्त्यस्मिन् वस्तु—धनभावौ॥

---

१. 'वरेण्यः' इत्यपपाठो मुद्रिते।

२. सूत्रमिदं टीकाकारेणान्यत्र व्याख्यातम् (द्र०—प्र० कौ० टी० पृष्ठ ६०१)।

३. 'तुः' इत्यपपाठो मुद्रिते।

अगारे णिच्च ॥१२८॥

वसन्ति तस्मिन् देवा वास्तु—अगारम् ॥

कृञः कतुः ॥१२९॥

क्रियतेऽसौ धर्मार्थिभिः क्रतुः ॥

एधिवह्योश्चतुः ॥१३०॥

एधते एधतुः—आढ्यः । वहति वहतु.—अनड्वान् ॥

जीवेरातुः ॥१३१॥

जीवन्त्यनेन जीवातुः—अन्नम्, जीवनौषधं च ॥

कृहृभ्यामेणुः ॥१३२॥

करोति करेणुः—करिणी । हरति चेतः हरेणुः—सुरभिद्रव्यम् ।

बहुलादन्यत्रापि । गच्छति गमेणुः—पान्थः । पचति पचेणुः—पाचकः । यजति यजेणुः—ऋत्विक् ॥

यजिमनिशुन्धिदसिजनिभ्यो युच् ॥१३३॥

यजति यज्युः—अध्वर्युः । मनुते मन्यते वा मन्युः—कोपादिः । शुध्यति शुन्ध्युः—अग्निः । दस्यति दस्युः—चौरः । जनयति जन्युः—प्रजापतिः, पिता च ॥

भुजिमृङ्भ्यां युक्त्युकौ ॥१३४॥

भोजनं भुज्युः । मरणं मृत्युः ॥

सर्तेरयुः ॥१३५॥

सरति सिसर्ति वा सरयुः—वायुः, सरिच्च ॥

कण्युच् क्षिपेश्च ॥१३६॥

क्षिपति क्षिप्यते वा क्षिपण्युः वायुः ॥

भुवश्च ॥१३७॥

कण्युच् । भुवण्युः—ईश्वरः ॥

अनुङ् नदेश्च ॥१३८॥

नदेः क्षिपेश्चानुङ् । नदति नदनुः—मेघः, सिंहो वा । क्षिपति क्षिप्यते वा क्षिपणुः[1]—बाहुः ॥

---

१. 'क्षिपनुः' इति मुद्रिते ।

[1] [स्तनिदूषिपुषिगदिमदिहृदिभ्यो णेरित्नुच् ॥१३९॥

**स्तनयित्नुः**—घनः। दूषयित्नुः—दूषकः। दूषिस्थाने हृषिं पठन्ति। **हर्षयित्नुः**—हर्षक इत्युदाहरन्ति केचित्। **पोषयित्नुः**—पोषकः, कोकिलः। **गदयित्नुः**—वादी। **मदयित्नुः**—मद्यम्। हृदयित्नुः—हृदयंगमः। केचिद् अमुं न पठन्ति नोदाहरन्ति च॥]

**कृहनिभ्यां क्नुः ॥१४०॥**

करोति कृणोति किरति वा **कृणुः**—कारुः। हन्त्याहारं **हनुः**। बहुलान्नलोपः॥

**गमेः सन्वच्च ॥१४१॥**

क्नुः[2]। आशु गच्छति **जिगनुः**[3]—प्राणः, मीनो[4] वा॥

**दाभाभ्यां नुः ॥१४२॥**

दीयते **दानम्**—रक्षणाय धनम्। भाति भानुः।

बहुलाच्च चित्रस्वर्विश्वेषु। चित्रं भातीति **चित्रभानुः**। **स्वर्भानुः**। **विश्वभानुः**॥

**वचेर्गश्च ॥१४३॥**

नुः गान्तादेशः। **वग्नुः**—वक्ता॥

**धेट इच्च ॥१४४॥**

नुः इच्चान्तादेशः। [गुणा धयन्ति तां **धेनुः**॥

**सूङः कित् ॥१४५॥**

नुः किच्च। सूयते **सूनुः**॥

**स्थाणुः ॥१४६॥**

तिष्ठति **स्थाणुः**—शंभुस्तम्भौ॥

**अजिवृरीभ्यो निच्च ॥१४७॥**

णुर्निच्च। अजति **वेणुः**। वीभावः। वृणोति व्रियते **वर्णुः**—देशविशेषः। रीयते **रेणुः**॥]

**विषेः किच्च ॥१४८॥**

---

१. सूत्रमिदं टीकाकारेणान्यत्र व्याख्यातम् (द्र०—प्र० को० टी० पृष्ठ ६०३)।
२. 'क्तुः' इति मुद्रिते।
३. 'जिगत्नुः' इति मुद्रिते।
४. 'मीयः' इति मुद्रिते।

णुः किच्च निच्च । वेवेष्टीति विष्णुः ॥

कुडिकुषिभ्यां काकुः ॥१४९॥

कुडति कुडाकुः— दुर्गतः । कुषाकुः—आखुः, कपिः, परोपतापी च ॥

सर्तेर्मुक् च ॥१५०॥

काकुर्मुगागमश्च । धावत्यत्यर्थं सृमाकुः—मृगवारिबाहवः। दुगागमम् अन्ये इच्छन्ति। सृदाकुः ॥

पर्देर्नित् संप्रसारणमल्लोपश्च ॥१५१॥

पर्दति पृदाकुः—सर्पः, कुशब्दकृत् ॥

ह्रियः कुक् रश्च लो वा ॥१५२॥

कुः रेफस्य लो वा । जिह्रेति ह्रीकुः, ह्लीकुः—लज्जितः, कुवेषः ॥

इषः क्सुः ॥१५३॥

इष्यते इक्षुः । आदौ प्रत्ययोच्चारणादशेरपि । अश्नाति अश्नुते वा अक्षुः— अर्कः। वहेरपि । वक्षुः—नटः ॥

अर्तेररुः ॥१५४॥

ऋच्छति अर्यते वा अररुः—अलंकारः ॥

कुटः किच्च ॥१५५॥

कुटरुः—शस्त्रप्लवगौ ॥

मापो रुरी च ॥१५६॥

रुः ई चान्तादेशः । मान्त्यमरा अत्र मीयते वा सूर्येन्दुभ्यां मेरुः । पाति पिबति पीयते वा पेरुः—गिरिराजवायुपतङ्गाः ॥

जत्र्वादयश्च ॥१५७॥

निपात्याः । जायते जत्रु । शृणाति शत्रुः । शृणाति शिग्रुः—शाखी । अत्तीति अत्रुः— क्षुद्रजन्तुः । हन्ति हत्रुः[1]—हिंस्रः ॥

रुशदिभ्यां क्रुन् ॥१५८॥

रौति रूयते वा रुरुः । शीयते शत्रुः । जत्र्वादित्वात् सिद्धे वचनं नित्स्वरार्थम् ॥

---

१. 'हन्तुः' इति मुद्रिते ।

तनोतेर्डउः सन्वच्च ॥१५९॥

तनोति पिष्टद्रव्याणि तितउः—चालनी । प्रत्ययसामर्थ्याद् गुणो न ॥

श्मनि श्रयतेर्डुन् ॥१६०॥

श्मनि श्रयते श्मश्रु ॥

अश्र्वादयश्च ॥१६१॥

निपात्याः । अश्नाति अश्नुते चक्षुः अश्रु । न स्रूयते स्रवति वा अस्रु ॥

॥ इत्युदन्ताः ॥

कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः ॥१६२॥

कर्षति कर्षते कर्षूः—करीषाग्निः । चमति परान् तैश्चम्यते वा चमूः । तनोति तन्यते वा तनूः । धनति धन्यते वा धनूः—राशिः । सर्जति सर्जूः—वणिक् । खर्जति खर्जूः—कण्डूः ॥

बहुलाद् यौति यवागूः ॥

मृजेर्गुणश्च ॥१६३॥

ऊः । मार्ष्टि मर्जूः—रजकः । मार्जनं मर्जूः—शुद्धिः ॥

वहो धश्च ॥१६४॥

धोऽन्तादेशश्च । उह्यते वधूः ॥

कषेः कच्छः ॥१६५॥

ऊः कच्छादेशः । कषति शरीरं कच्छूः—कण्डूः ॥

णिच्च कसिपद्यर्तेः ॥१६६॥

ऊः णिच्च । कसति कासूः—विकलाङ्गविधिशक्तयः । पद्यते पादूः—पादुका । ऋच्छत्यर्यते वा आरूः—वारिपृथुतरवः ॥

अणो रुश्च ॥१६७॥

ऊः णिच्च रुरन्तादेशश्च । अणति तेनोदकम् आरूः—भृङ्गारः ॥

नञि लम्बेर्नलोपश्च ॥१६८॥

ऊः णिच्च नञि । न लम्बत इति अलाबूः ॥

के श्र एरङ् च ॥१६९॥

कपूर्वात् शृणातेरूः एरङादेशश्च । कं शृणाति कशेरूः—वीरुत् ॥

**त्रो दुट् च ॥१७०॥**

तरतेर्ड्रुडागमश्च । तरति तीर्यते वा तर्द्रूः—जलतरणोपकरणे ॥

**दरिद्रातेर्यालोपश्च ॥१७१॥**

अस्य इ आ अनयोर्लोपः । दरिद्रात्यनयाङ्गं दर्द्रूः—कुष्ठविशेषः ॥

**नृतिशृध्योः कूः ॥१७२॥**

नृत्यति नृतूः—वात्याक्रिमिनीतयः । शर्धते शृधूः—पायुशब्दधिषणे ॥

**अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः ॥१७३॥**

निपात्याः । अमति अम्यते अन्दूः—भूषणविशेषः । दृम्भति दृम्भूः—कथुरागी । जायते जम्बूः । कफं लाति कफेलूः—श्लेष्मातकः । कर्कं दधाति कर्कन्धूः—बदरी । दिधिं स्यति दिधिषूः—पुनर्भूः ॥

**भ्रमेश्च डूः ॥१७४॥**

भ्रमति भ्रूः ॥

॥ ऊदन्ताः ॥

[॥ इति प्रथमः पादः ॥]

———

# ॥ द्वितीयः पादः ॥

**तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ ॥१॥**

शंसति शंस्ता। क्षदति क्षत्ता। प्रशास्ति प्रशास्ता। ऋत्विक्संज्ञा एताः। अनित्वार्थं तृच् ॥

**बहुलमन्यत्रापि ॥२॥**

तृन्तृचौ संज्ञायामनिटौ च। प्रस्तोता। प्रतिहर्ता। प्रतिहन्ता। उपद्रष्टा। उद्गाता। होता। उन्नेता। एतेऽपि ऋत्विजः ॥

**नप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृमातृभ्रातृजामातृपितृदुहितृ ॥३॥**

एते निपात्याः। न पतति नप्ता। नयति नेष्टा—ऋत्विक्सारथी। त्विषति त्वष्टा—रविप्रजापती। क्षत्ता—सारथिः। जुहोति होता। पुनाति पोता। मान्यते माता। भ्राजते भ्राता। जायां मिनोति जामाता। पाति पिता। दुनोति पितरं दोग्धि वा दुहिता ॥

**सावसेर्ऋन् ॥४॥**

सुष्ठु अस्यति स्वसा ॥

**यतेर्वृद्धिश्च ॥५॥**

ऋन्। यतन्ते यातरः—भ्रातृभार्याः परस्परम् ॥

**नञि च नन्देः ॥६॥**

ऋन् वृद्धिश्च। न नन्दन्ति भ्रातृजाया यस्यां ननान्दा—पतिभगिनी ॥

**दिवेश्च ॥७॥**

ऋन्। दीव्यति देवा ॥

**नयतेर्डिच्च ॥८॥**

ऋन् डिच्च। नयति ना ॥

**सव्ये स्थश्छन्दसि ॥९॥**

ऋन् डिच्च। सव्ये तिष्ठति सव्येष्ठा। भाषायामपि ॥

॥ ऋन्ताः ॥

**रातेर्डैः ॥१०॥**

राति श्रेयोऽर्थं पात्रेभ्यस्ता राति रायते वा राः रायौ—धनम्, भानुश्च ॥

[॥ ऐदन्तः ॥]

[1][गमेर्डोः ॥११॥

गच्छतीति गौः—सौरभेयी ॥

॥ ओदन्तः ॥

ग्लानुदिभ्यां डौः ॥१२॥

ग्लायतीति ग्लौः—चन्द्रः । नुदतीति नौः—तरीः ॥

॥ औदन्तौ ॥][1]

[॥ इति द्वितीयः पादः ॥]

---

१. इमे द्वे सूत्रे टीकाकारेणान्यत्र व्याख्याते (द्र०—प्र० कौ० टी० पृष्ठ ६०१)।

# ॥ तृतीयः पादः ॥

## जीवेरातृकन् वृद्धिश्च ॥१॥

जीवति जीवयति वा जैवातृकः—आयुष्मान्, चन्द्रः, भूतानि च ॥

## समि कस उकन् ॥२॥

समन्तात् कसति संकसुकः—स्थिरः ॥

## पचिनश्योर्णुकन् कनुमौ च ॥३॥

कादेशनुमागमौ । पचति पाकुकः—सूपकारः, अध्वर्युश्च । नश्यत्यल्पेन वायुना नंशुकः—पांशुः ॥

## भियः क्रुकन् ॥४॥

बिभेति भीरुकः ॥

## क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि ॥५॥

अपूर्वस्य तावत् शिल्पिनि—तक्षतीति तक्षकः । अपिशब्दात् सपूर्वस्यापि—तिलान् पीडयतीति तिलपीडकः । संज्ञायाम्—जनयति जनकः । कलाआङ्पूर्वात् पिबतेः क्वुन् । कलापकः—शास्त्रकर्ता ॥

## जहातेर्द्वे च ॥६॥

क्वुन् । जहाति जहकः—कालः ॥

## ध्मो धम च ॥७॥

क्वुन् धमादेशश्च । धमति धमकः—लोहकारः ॥

## हनो वध च ॥८॥

क्वुन् । हन्ति वधकः—बिडालः ॥

## बहुलमन्यत्रापि ॥९॥

क्वुन् । कथयति कथकः । रोचते रुचकः ॥

## कृषेर्वृद्धिश्चोदीचाम् ॥१०॥

क्वुन् च । कृषति कार्षकः, कर्षकः, कृषकः वा ॥

उदकं च ॥११॥

उदेः क्वुन्नन्तो निपातः । उत्स्वाद्यते उदच्यते उदकम् ॥

वृश्चिकृष्योः किकन् ॥१२॥

वृश्चति वृश्चिकः । कर्षति कृषिकः ॥

प्राङि पणिकषः ॥१३॥

प्रापणायते प्रापणिकः । प्राकषति प्राकषिकः[1] ॥

मुषेर्दीर्घश्च ॥१४॥

किकन् । मुष्णाति मूषिकः ॥

स्यमेः संप्रसारणम् ॥१५॥

किकन् । स्यमति सिमिकः—वृक्षपत्रविभागकृत् कीटकः ॥

क्रिय इकन् ॥१६॥

क्रीणाति क्रयिकः ॥

आङि पणिपनिखनिभ्यः ॥१७॥

इकन् । आपणिकः । आपनिकः—पथिकः, वालश्च । आखनिकः—वराहः ।

कृदाधारार्चिकलिभ्यः कः ॥१८॥

कृणोति करोति करति कर्कः—सारङ्गः । ददाति दाकः । दधाति धाकः । राति राकः । अर्च्यते अर्कः । कलति कल्कः—क्वाथकितवौ ॥

सृवृभूशुषिमुषिभ्यः कित्[2] ॥१९॥

कः किच्च । धावति सिसर्त्ति सृकः—वायुसरकौ । वृणोति वृकः । भवति भूकः—कालः, भावमात्रं वा । शुष्यति शुष्कः । मुष्णाति मुष्कः—चोरः ॥

शुकवल्कोल्काः ॥२०॥

निपात्याः । शोभते शृणोति वा शुकः—पक्षी ऋषिश्च । वलति वयति वल्कम्—त्वक्, वल्कलम् । उष्यति उल्का—ज्वाला ॥

इण्भीकापाशल्यतिमर्चिभ्यः कन् ॥२१॥

एति एकः—संख्यावाची, मुख्यार्थश्च । बिभेति भेकः—मण्डूकः । कायति काकः ।

---

१. 'प्राकर्षति प्राकृषिकः' इति मुद्रितेऽपपाठः । २. 'कक्' इत्यप० मु० ।

पाति पिबति वा **पाकः**—विष्णुवालौ । शलयति **शल्कः**—काष्ठत्वक्, मुद्गः । अतति **अत्कः**—गतिमदात्मानौ । मर्चति **मर्क्कः**[1] ॥

**नौ हः ॥२२॥**

नियतं हीयते **नीहाकः**—निःस्नेहः । **नीहाका**—गोधारः ॥

**स्यमेरिट् च ॥२३॥**

कन् इडागमः । स्यमति **स्यमिकः**—क्रिमिमेघौ ॥

**अजिसूञ्धूञो दीर्घश्च ॥२४॥**

कन् । अजतीति **वीकः**—वायुः, अक्षि, विमलं च । दीर्घविधिरिड्गुणबाधार्थः । सुनोति **सूकः**—अभिषवः । धूनोति **धूकः**—वायुः ॥

**ह्रियो रस्य लो वा ॥२५॥**

कन् रेफस्य लो वा । जिह्रेति **ह्रीकः**, **ह्लीकः**—लज्जितः ॥

**आनकः शीङ्भियः ॥२६॥**

शेते **शयानकः**—अजगरः । बिभेत्यस्माद् **भयानकः** ॥

**आणको लूञ्शिङ्घिधाञ्भ्यः ॥२७॥**

एभ्य आणकः स्यात् । लूयतेऽनेन **लवाणकः**। शिङ्घ्यते **शिङ्घाणकः**[2]—श्लेष्मा । दधाति **धाणकम्**—वसुपरिमाणम् । बहुलाण्णस्य नत्वमपीति एके । लवानकादि ॥

**वृतेस्तिकन् ॥२८॥**

वर्तते वर्त्यते वा **वर्तिका** ॥

**कृतिभिदिलतिभ्यः कित् ॥२९॥**

तिकन् किच्च । कृन्तति **कृत्तिका**—नक्षत्रम् । भिनत्ति **भित्तिका**—कुड्यम् । लतिः सौत्रः । **अवलत्तिका**—गोधा, गन्धर्वभाण्डम् ॥

**इष्यशिभ्यां तकन् ॥३०॥**

किच्च । इष्यते **इष्टका** । अश्नन्त्यस्यां पितर **अष्टका** ॥

**खजेराकः ॥३१॥**

खजति **खजाकः**—मथा पक्षी ॥

---

१. 'मचर्क्वः' इत्यपपाठो मुद्रिते । २. 'शिङ्घ्रचते शिङ्घ्राणकः' इत्यप० मु० ।

### वलाकादयश्च ॥३१॥

साधवः । वलति **वलाका** । मन्यते **मनाका**—करिणी इत्यादि ॥

### शलिपटिपतिभ्यो रित् ॥३३॥

आको रिच्च । शलति **शलाका** । पटति **पटाकः**—पान्थः । पतति **पताका** ॥

### पिनाकादयश्च ॥३४॥

साधवः । पिनष्ट्यनेनारीन्[1] पाति वानेन **पिनाकः** । ताडचते **तडाकम्** । भदते **भदाकः**—अकुटिलः । न भाति **नभाकः**—तमः । पिष्यते **पिषाकः**—तिलपिष्ठम् । कौति **कवाकः**—पक्षी । श्यायते **श्यामाकः**—जघन्यो व्रीहिः ॥

### कषिदूषिभ्यामीकन् ॥३५॥

कषत्यनया **कषीका**—खनित्रम् । दूषयति **दूषीका**—दृङ्मलम् ॥

### चङ्क्वणेः किङ्कणश्च ॥३६॥

किङ्कणादेशश्च । चङ्क्वणिर्यङ्लुगन्तः क्वणिः । पुनः भृशं वा क्वणति **किङ्किणीका**—क्षुद्रघण्टा ॥

### शॄपॄवृञां द्वे रुक् चाभ्यासस्य ॥३७॥

ईकन् द्वित्वम् अभ्यासस्य च रुक् । शृणाति **शर्शरीकम्**—जालम् । पिपर्ति **पर्परीकः**—भूपः, सूर्यः, जलाशयश्च । वृणुते **वर्वरीकः**—युवा ॥

### फर्फरीकादयश्च ॥३८॥

साधवः । स्फुरति **फर्फरीकः**—चलः । दीर्यते **दर्दरीकम्**—वाद्यम् । जीर्यते **जर्जरीकम्**—जरद्वपुः । ताडचते **तित्तिडीकम्**—औषधम् ॥

### ईषेः किद् ह्रस्वश्च ॥३९॥

ईकन् कित् ह्रस्वश्च । ईषति **इषीका**—दर्भशलाका ॥

### ऋजेश्च ॥४०॥

ईकन् किच्च । अर्जत **ऋजीकम्**—पिष्टपचनम् ॥

### अनिदृशिभ्यां च ॥४१॥

ईकन् किच्च । अन्यत **अनीकम्**—बलम् । पश्यन्ति तां विस्मिता **दृशीका**—पुष्पवती ॥

---

१. 'पिनह्यतेनेनारीन्' इत्यपपाठो मुद्रिते ।

**सर्तेर्नुम् च ॥४२॥**

धावति **सृणीका**—लाला ॥

**अलीकादयश्च ॥४३॥**

साधवः । अनन्त्यनेनाधोगतिम् अलीकम् । वहन्ति हृदि **व्यलीकम्** ॥

**मृकणिभ्यामूकोकणौ ॥४४॥**

मारयति म्रियते **मरूकः**—मयूरः, मर्त्यो वा । कणति **काणुकः**—काकः ।

बहुलाद् वलेरूकः । वल्यते **वलूकः**—उत्पन्नं मूलम्, जलं वा ॥

**उलूकादयश्च ॥४५॥**

साधवः । उत्क्रम्य दृष्टिमालोकयति **उलूकः** । भल्लते **भल्लूकः** ॥

**शलिमण्डिभ्यामूकण् ॥४६॥**

शलति **शालूकम्**—कन्दम् । मण्डयति प्रावृषं **मण्डूकः** ॥

**कृञादिभ्यः संज्ञायां वुन् ॥४७॥**

क्रियतेऽत्रोदकं **करकः**—कमण्डलुः । स्रियते **सरकः**—मद्यभाण्डपाने । **चरकः**—वैद्याचार्यः । **दरकः**—भीरुः ॥

**ऋजेः कीकन् ॥४८॥**

अर्जत **ऋजीकम्**—तपः, धनम्, बलं च ॥

**अर्भकपृथुकपाका वयसि ॥४९॥**

साधवः । ऋच्छति **अर्भकः** । प्रथते **पृथुकः** । पिबति **पाकः**—बालः ॥

**॥ एते कान्ताः ॥**

**डन् खनेर्मुट् चोदात्तः ॥५०॥**

खनेर्डन् उदात्तः मुट् चागमो धातोः । खन्यते सुखिभिः **मुखम्** ॥

**मुहेः खन् मूर्च ॥५१॥**

मुह्यति मोहयति वा **मूर्खः** ॥

**नहेर्हलोपश्च ॥५२॥**

खन् । नह्यति **नखः** ॥

**महेश्च ॥५३॥**

खन् हलोपश्च । महते **मखः** ॥

**शीङो नित् ह्रस्वश्च ॥५४॥**

खन् । शेते शिखा ॥

**वृक्षावयव आ च ॥५५॥**

शेतेः खन् निच्च आ चान्तादेशः । शेतेऽस्यां पक्षी शाखा ॥

**माङ उखा ॥५६॥**

निपातः । मीयतेऽसौ उखा—स्थाली ॥

**मीनातेरूखः ॥५७॥**

मीनाति मयूखः ॥

॥ खान्ताः ॥

**पतेरङ्गच् पक्षिणि ॥५८॥**

पतति पतङ्गः—पक्षी ॥

**त्रादिभ्यश्च ॥५९॥**

अङ्गच् । तरन्ति तेन तरङ्गः । लुनाति लवङ्गः ॥

**बिडादिभ्यः कित् ॥६०॥**

वेडयति बिडङ्गः । कुरङ्गः । मृदङ्गः ॥

**गन् गम्यद्योः ॥६१॥**

गम्यतेऽर्थिभिः गङ्गा—जाह्नवी । अत्ति अद्गः ।

प्राक् प्रत्ययनिर्देशो वर्गादिनिपातनाय । वृणोति वर्गः ॥

**भृञः किन्नुट् च ॥६२॥**

गन् किच्च नुडागमश्च । बिभर्ति भृङ्गः ॥

**शृणातेर्ह्रस्वश्च ॥६३॥**

गन् कित् नुट् च । शृणाति शृङ्गम् ॥

**गण् शकुनौ ॥६४॥**

नुट् च । शृणाति शार्ङ्गः—शकुनिः ॥

**मुदिग्रोर्गग्गौ ॥६५॥**

मोदयति मुद्गः । गिरति गृणाति गर्गः ॥

**दहेर्गो लोपो दश्च नः ॥६६॥**

गन् दस्य च नः । दह्यते वह्निना नगः ॥

**छोपूञ्खडिभ्यो गक् ॥६७॥**

छ्यति छागः । पवते पूगः । खण्डयति खड्गः[1]॥

॥ गान्ताः ॥

**जनेः कः जङ्घ च ॥६८॥**

कः स्यात् जङ्घादेशश्च । जायतेऽस्यां रोम जङ्घा ॥

**दृणातेर्घक् ॥६९॥**

दृणाति दीर्घः ॥

॥ घान्तौ ॥

[॥ इति तृतीयः पादः ॥]

---

१. 'खड्गः' इत्यपपाठो मुद्रिते ।

# ॥ चतुर्थः पादः ॥

**स्रुवश्चिक् ॥१॥**

स्रवत्यत्र हविः **स्रुक्** ॥

**तनोतेरनश्च वः ॥२॥**

चिक् अकारनकारयोर्वादेशश्च । तनोति **त्वक्** ॥

**कुवश्चट् दीर्घश्च ॥३॥**

कवते **कूचः**—करी ॥

**सम्मीणः ॥४॥**

चट् दीर्घश्च । संयन्ति तस्मिन् **समीचः** ॥

**सिवेष्टेरू च ॥५॥**

चट् । सीव्यति **सूचः**—पिशुनः । सीव्यत्यनया **सूची** ॥

॥ चान्ताः ॥

**कचेश्छः ॥६॥**

कच्यते तेन **कच्छः** । पुनातेः **पुच्छः** इत्यपि ॥

॥ छान्तौ ॥

**पारेरजिः ॥७॥**

पारयति **पारक्**—सुवर्णमन्नं वा ॥

**पणेरिच्चादेश्च वः ॥८॥**

अजिः स्यात् तस्यादेरिदादेशश्च पणेरादेर्वादेशः । पणते **वणिक्** ॥

**वशेः कित् ॥९॥**

अजिः कित् स्यात् तस्यादेरिच्च । वष्टि उश्यते **उशिक्**—वह्निः ॥

**भृञ उच्च ॥१०॥**

अजिस्तस्यादेरिच्च, धातोरुच्च । बिभर्ति भरति मनुष्यान् **भुरिक्** ॥

॥ जान्ताः ॥

[॥ इति चतुर्थः पादः ॥]

————

# ॥ पञ्चमः पादः ॥

लङ्घेरटिर्नलोपश्च ॥१॥

लङ्घते **लघट्**—वायुः ॥

शकादिभ्योऽटन् ॥२॥

शक्यतेऽनेन गन्तुं **शकटम्** । अवति **अवटः** । दीव्यति **देवटः**—शिल्पी । मर्कति **मर्कटः** । चपति **चपटः**—इषुः । चमति **चमटः**—घस्मरः । भ्रियते **भरटः**—भृत्यः ॥

कॄतॄकृपिभ्यः कीटन् ॥३॥

कीर्यते **किरीटम्** । तीर्यते **तिरीटम्** । कल्पते **कृपीटम्** ॥

जनेर्लोपश्च टः ॥४॥

धातोरन्त्यस्य लोपः । जायन्ते **जटाः** ॥

॥ टान्ताः ॥

कमेरठः ॥५॥

कस्यते **कमठः**—भिक्षापात्रम्, कूर्मश्च ॥

कणेष्ठः ॥६॥

कण्यते **कण्ठः** ।

[बाहुलकात्] कुणति **कुण्ठः** ॥

॥ ठान्ताः ॥

अमन्ताड्डः ॥७॥

जान्तङान्तयोर्नोदाहरणम् । दाम्यतेऽनेनोद्धता **दण्डः** । मन्यते जनैः **मण्डः**—अग्रम् । वनुते **वण्डः**—अल्पशेषः, दुश्चर्मा च । रण्यते रणत्यनया वा **रण्डा** ॥

क्वादिभ्यः कित् ॥८॥

कवर्गादिनमन्तेभ्यो डः किच्च । कुणति **कुण्डा**—उपकरणभाण्डम्, परजातं च । काणति **काण्डम्** । गच्छत्युपधानं **गण्डः** । खन्यते **खण्डः**—अपूर्णं इक्षुविकारः ।

बहुलादन्यत्रापि । कवते **कुडः**—बालः । गवते **गुडः** ॥

अण्डन् कृसृभृवृञः ॥९॥

करोति **करण्डः** । धावति सिसर्ति **सरण्डः** । भरति **भरण्डम्** । वृणोति **वरण्डः**—पूगः ।

प्राक् प्रत्ययनिर्देशः शरण्डाद्यर्थः । शृणाति **शरण्डः**— हिंस्रः । तरति **तरण्डः**—वायुः । एति **एरण्डः** ॥

**सर्तेरडिः ॥१०॥**

सरति सरट्—वातः ॥

॥ डान्ताः ॥

**शमेर्ढः ॥११॥**

शान्तमस्येन्द्रियं **शण्ढः** । बहुलात् षः । षण्ढः ॥

॥ ढान्ताः ॥

अथ णान्तप्रसङ्गेऽजन्तान् नोपधान् कथयति तेषां नस्य हि रेफषकारेषु निमित्तेषु सत्सु प्रायशो णः स्यात् । केवलान् नान्तांश्चाग्रे यथास्थाने वक्ष्यति ॥

**श्यास्त्याहृञविभ्य इनच् ॥१२॥**

श्यायते **श्येनः** । स्त्यायते **स्त्येनः** । बहुलाद्यलोपोऽपि । **स्तेनः** । हरत्यध्वानं **हरिणः** । अवति **अविनः**— बुधनृपौ ॥

**वृजेः किच्च ॥१३॥**

वृज्यते **वृजिनम्**— पापचर्मकुटिलानि ॥

**अजेरज च ॥१४॥**

इनच् अजादेशश्च । वीयते **अजिनम्** ॥

**बहुलमन्यत्रापि ॥१५॥**

इनच् । कठति **कठिनम्** ॥

**द्रुदक्षिभ्यामिनन्[1] ॥१६॥**

द्रूयतेऽर्थिभिः **द्रविणम्** । दक्षते **दक्षिणः** ॥

**अर्तेः किदिच्च ॥१७॥**

इनन्[2] स च कित् इदादेशश्च । ऋच्छत्यर्यंते वा **इरिणम्—ऊषरम्**[3] ॥

**वेपितुह्योर्ह्रस्वश्च ॥१८॥**

१. '०मिनच्' इत्यपपाठो मुद्रिते । अग्रे 'महेरिनण् च' इति सूत्रस्य वृत्तौ 'चादिनन्' इत्येवोपलभ्यते । २. 'इनच्' इत्यपाठो मु० । ३. 'इरिणमुखरम्' इति मु० ।

इनन्[1] च किच्च ह्रस्वश्च । वेपतेऽस्मिन् विपिनम्—वनम् । तुह्यतेऽनेन तुहिनम् ॥

महेरिनण् च ॥१९॥

चादिनन् । मह्यतेऽस्मिन् महिनम्, माहिनम्—राज्यम् ॥

सुयुरुवृञो युच् ॥२०॥

सुनोति सौति सवति सवनः—कालः प्रातरादिः । यौति युवति वा यवनः । रौति रवणः—वायुषट्पदौ । वृणोति वरणः—भिक्षुः ॥

अशे रश च ॥२१॥

युच् रश आदेशः । अश्नुते कटी रशना—काञ्चिः ॥

उन्देर्नलोपश्च ॥२२॥

युच् । उनत्ति ओदनः ॥

बहुलमन्यत्रापि ॥२३॥

युच् । स्यन्दते स्यन्दनः—रथः। मज्जत्यनेन मज्जनम्—रोम । रोचते रोचनम् ॥

[रजः क्युन् ॥२४॥][2]

रजत्यनेन रजनम्—कुङ्कुमादिरागः ॥

भूसूधूभ्रस्जिभ्यश्छन्दसि ॥२५॥

क्युन्[3] । भवन्ति भूतान्यस्मिन् भुवनम् । सूयते सुवनम्—आदित्यः, अङ्कुरो वा । धुनोति धुनाति धुवनम्—वाय्वग्नी । भृज्जत्यत्र भृज्जनम्—अम्बरीषम् ॥

कॄपॄवृजिमन्दिनिधाञः क्युः ॥२६॥

किरति तमः किरणः—रश्मिः । पृणाति पूर्यते वा पुरणः—अब्धिः । वृणक्ति वृज्यते वृजनम्—नभः । मन्दनम् । निधनम् । छन्दसीत्येव । परणः ॥

धृषेर्धिष च संज्ञायाम् ॥२७॥

क्युः धिषादेशश्च । धृष्णोत्यनया धिषणा—धीः । संज्ञाग्रहणं छन्दोऽधिकार-निवृत्तये ॥

हनो जघ च ॥२८॥

क्युः । हन्ति जनान् हन्यते वा जनैः जघनम् ॥

---

१. 'इनच्' इत्यपपाठो मुद्रिते ।

२. अत्रेदं सूत्रं त्रुटितं प्रतिभाति ।

३. 'युच्' इत्यपपाठो मुद्रिते ।

छन्दस्यसानच् शुजृभ्याम् ॥२९॥

शूयते शवसानः । जीर्यते जरसानः ।

प्राङ् निर्देशः प्रत्ययस्य शरसानाद्यर्थः । शृणाति शरसानः । चन्द्रसूर्यादिभिः तरति तरसानः—अग्निः । वृणोति वरसानः—मनोरथः ॥

ऋजिवृधिमदिसहिभ्यः कित् ॥३०॥

असानच् । ऋजति ऋजसानः— मेघः । वर्धते वृधसानः—गर्भः । मन्दते मदसानः — स्तनः । सहते सहसानः—शमी ॥

अर्तेर्गुणः शुट् च ॥३१॥

असानच् । ऋच्छति अर्शसानः—पन्थाः, इषुर्वा ॥

सम्यानच् स्तौतेः ॥३२॥

समः परात् स्तौतेरानच् । संस्तौति संस्तवानः—वाग्मी ॥

युधिबुधिदृशेः किच्च ॥३३॥

युध्यते युधानः—परिवारः । बोधयति बुधानः—आचार्यः । पश्यति दृशानः—लोकपालः ॥

हुर्छेः सनो लुक छलोपश्च ॥३४॥

सन्नन्ताद् हुर्छेरानच् सनो लुक् छलोपश्च । जुहूर्छिषति जुहुराणः—कठिनहृदयः ॥

इण्सिञ्दीङुष्यविभ्यो नक् ॥३५॥

अर्थिनो यन्ति तम् इनः । सिनोति सीयते सिनः—कायः, बन्धो वा । दीयते दीनः । उष्यतेऽनेन उष्णम् । अव्यते ऊनः—हीनः ॥

फेनमीनौ । ३६॥

साधु । स्फायते फेनः । मिनाति मीनः ॥

कृषेर्वर्णे ॥३७॥

नक् । कृषति कृष्णः— वर्णः ॥

बन्धेर्ब्रधिबुधी च ॥३८॥

नक् एतौ चादेशौ । बध्नाति ब्रध्नः—सूर्यः । बुध्नः—भवानीशः, मन्तश्च ॥

धापॄवस्यज्यतिभ्यो नः ॥३९॥

धीयन्ते प्राणिनो यासां विकारैस्ता धानाः । पृणाति तरुं पर्णम् । वस्तेऽनेन

**वस्नम्**—वासः। अजति **वेनः**—वातः। अतति **अत्नः**—आत्मा॥

**लक्षेरट् च ॥४०॥**

नः। लक्ष्यतेऽनेन **लक्षणम्**॥

**सिवेष्टेयू च ॥४१॥**

नः। टेयूरादेशश्च। सीव्यतेऽनेन **स्योनः**—राशिः, सूरणं च॥

**कॄवॄजॄसिद्रुपद्यतिस्वपिभ्यो नित् ॥४२॥**

नः निच्च। कीर्यते **कर्णः**। वृणोति **वर्णः**। जीर्यते **जीर्णः**। सिनोति **सेना**। द्रवति **द्रोणः**। **पन्नः**। अतति **अन्नः**—आत्मा, वायुश्च। स्वपित्यनेन **स्वप्नः**—निद्रा॥

**धेट ई च ॥४३॥**

नः। धयन्ति तां **धेना**—सरस्वती, माता च॥

**तृषिशुषिरसिभ्यः कित् ॥४४॥**

नः। तृष्यतेऽनया **तृष्णा**। शुष्यति तेन **शुष्णम्**। रस्यते **रस्नः**॥

**सुञो दीर्घश्च ॥४५॥**

कित्। सुनोत्यस्यां **सूना**—वधस्थानम्, मांसद्रोणी॥

**रमेस्त च ॥४६॥**

रमन्तेऽस्मिन् **रत्नम्**॥

**रास्नासास्नास्थूणावीणाः ॥४७॥**

साधवः। राति रसति रस्यते वा **रास्ना**—औषधः। स्वपित्यस्यां **सास्ना**—गोगलकम्बलः। तिष्ठत्यनया धाम इति **स्थूणा**। अजति वेति वा **वीणा**॥

**गादाभ्यामिष्णुच् ॥४८॥**

गायन्त्यस्मिन् **गेष्णु**—मेखः। ददाति **देष्णुः**—दाता॥

**कृत्यशिभ्यां क्स्नः ॥४९॥**

कृत्यते तेन **कृत्स्नम्**। अश्नुते **अक्ष्णः**—वृन्दम्, तेजनं च॥

**तिजेर्दीर्घश्च ॥५०॥**

क्स्नः। तितिक्षति **तीक्ष्णम्**॥

**श्लिषेरच्चोपधायाः ॥५१॥**

क्स्नः। श्लिष्यति **श्लक्ष्णम्**—मृदुसूक्ष्मो॥

**कॄवॄदारिभ्य उनन् ॥५२॥**

किरति मनः **करुणा** । वृणोति **वरुणा** । तरति **तरुणः** । दारयति **दारुणम्** ॥

**पिशेः किच्च ॥५३॥**

उनन् । पिशति **पिशुनः** ॥

**लपेः श च ॥५४॥**

उनन् । शोऽन्तादेशः । लपति **लशुनम्** ॥

**फलेर्गुक् च ॥५५॥**

उनन् गुगागमश्च । फलति **फल्गुनः** ॥

**त्रो रश्च लः ॥५६॥**

उनन् । रस्य लः । तरति **तलुनः** ॥

**अर्जेर्णिलुक् च ॥५७॥**

उनन् । अर्जयति **अर्जुनः** ॥

**तृणाख्यायां चित् ॥५८॥**

**अर्जुनम्**—तृणम् ॥

**अर्तेश्च ॥५९॥**

उनन् चित् । ऋच्छति **अरुणः** ॥

**धारेर्णिलुक् च ॥६०॥**

उनन् चित् । धारयति **धरुणः**—ग्रहः ॥

**अजियमिशीङ्भ्यश्च ॥६१॥**

उनन् चित् । अजति **वयुनः**—चन्द्रः । यच्छति **यमुना** । शेतेऽत्यर्थं **शयुनः**—अजगरः ॥

**तृहेर्नक् हलोपश्च ॥६२॥**

तृह्यते गवादिभिः **तृणम्** ॥

**अर्तेर्युजुच्च ॥६३॥**

युच् उच्चास्यादेशः । ऋच्छति **उरणः**—पशुमेषौ, उलूको वा ॥

**ऊर्णोतेर्डः ॥६४॥**

ऊर्णोति **ऊर्णा**—अविलोमानि ॥

॥ नोपधा अजन्ताः ॥

[॥ इति पञ्चमः पादः ॥]

———

# ॥ षष्ठः पादः ॥

## मृग्रोरुतिः ॥१॥

म्रियते न कदाचिद् मरुत्—वायुः । गृणाति गिरति गरुत्—मरकतः ॥

## गर्मुत् ॥२॥

साधुः । गिरति गर्मुत्—सूर्यसुपर्णौ ॥

## हृसृरुहियुषिभ्यः इतिः ॥३॥

हरति हरित्—वायुदिङ्मृगाः । धावति सरित् । रोहति रोहित्—सूर्यग्रावा (?), वारुः (?) च । युषिः सौत्रः । योषित् ॥

## तार्डेणिलुक् च ॥४॥

इतिः । ताडयति अभ्रं ताड्यते वा तडित् ॥

## वर्तमाने पृषद्बृहन्महज्जगच्छतृवत् ॥५॥

एते वर्तमाने साधवः शतृवच्च नुमादिकार्यमेषाम् । वर्षति वृणोति पिपर्ति वा पृषत्—चित्रमृगजातिः, आज्यम्, सीकरश्च । बर्हति बृहत्, बृहती । महति महयति महान् । महती । गच्छति जगत् ॥

## संस्वत् तृपत् वेहत् ॥६॥

साधवः । संव्ययति संस्वत्—उदकम् । तृप्यति तृपत्—चन्द्रः । वहति वेहत्—गर्भघातिनी ॥

## हसिमृग्रिण्वामिदमितमिलूपूधुर्विभ्यस्तन् ॥७॥

हसत्यनेनारिं हस्तः । म्रियते मर्तः—मर्त्यः । गिरति गर्तः—श्वभ्रः । एति एतः—वायुः । वाति वातः । अम्यते अन्तः—अवसानम् । दाम्यति दन्तः । ताम्यति तन्तः । लुनाति लोतः । पुनाति पोतः । धूर्वति धूर्तः ॥

## तनिमृङ्भ्यां किच्च ॥८॥

तन् । तनोति तन्यते वा ततम्—विशालम् । मवति मूयते वा मूतः—आलान-पाशः ॥

## अञ्जिघृसिभ्यः क्तः ॥९॥

अज्यते अक्तम्—अक्षितम् । जिघर्ति घृतम् । सिनोति सितम्—शुक्लम् ॥

दुतनिभ्यां दीर्घश्च ॥१०॥

क्तः । दुनोति दूतः । तनोति तातः ॥

जेर्मूट्[1] चोदात्तः ॥११॥

क्तस्तस्य मूडागमः स चोदात्त, जेर्दीर्घश्च । जयति नभः जीयतेऽनलेन वा जीमूतः ॥

हृश्याभ्यामितन् ॥१२॥

हरति जिहर्ति हरितः—वर्णः । श्यायते श्येतः—वर्णः ॥

रुहे रश्च लो वा ॥१३॥

इतच् रस्य लो वा । रोहति लोहितः, रोहितः ॥

भृदृशीयजिपर्विपच्यमिनमिहर्यिभ्योऽतच् ॥१४॥

बिभर्ति भरतः—राजा । द्रियते दरतः—आदृतः । शेते शयतः—निद्रालुः । यजति यजतः—अग्नियजमानौ । पर्वति पर्वतः । पचति पचतः—अग्निरवी । अमति अमतः—वासरानकौ । नमति नमतः—नटः, देवो वा । नाम्यति नमतः—निर्वेदः । हर्यति हर्यतः—वायुः ॥

पृषिरञ्जिभ्यां कित् ॥१५॥

अतच् । पृषति पृषतः—मृगः । वृषतः इति एके । रजतेऽत्र रजतः । रजतम्—रूप्यम् ॥

खलतः ॥१६॥

साधुः । स्खलति खलतः—खलतिः ॥

[2][जृविशिभ्यां झच् ॥१७॥

जीर्यते जरन्तः—वृद्धः । विशति वेशन्तः—योगी । विशत्यस्मिन् वा वेशन्तः—पल्वलम् ॥]

रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि ॥१८॥

---

१. 'जेर्मुट्' इत्यपपाठो मुद्रिते ।

२. इदं सूत्रं व्याख्याकारेणान्यत्र व्याख्यातम् । (द्र०—प्र० कौ० टी०, पृष्ठ ६०२) ।

झच् स च षित्। रुह्यात् रोहन्तः - तरुः। नन्द्यात् नन्दयन्तः—अर्भकः। जीव्याद् जीवन्तः—जन्तुः। प्राण्यात् प्राणन्तः—योगः। स्त्री चेत् रोहन्ती इत्यादि॥

**तॄभूवहिवसिभासिसाधिगडिमण्डिजनिनन्दिभ्यश्च[1] ॥१९॥**

आशिषि झच् षिच्च। तीर्यात् तरन्तः—सूर्यः, मार्गवर्ती। स्त्री चेत् तरन्ती। भूयाद् भवन्तः—बालः। उह्याद् वहन्तः—वायुः। उष्याद् वसन्तः—ऋतुः। भासिषीष्ट भासन्तः—भानुः। साध्यात् साधन्तः—भिक्षुः। गण्डयन्तः—मेघः। मण्डयन्तः—नटः। जनयन्तः—राजा। नन्दयन्तः—अर्भकः॥

**हन्तेर्मुट् हि च ॥२०॥**

झच्। मुडागमः, हन्तेर्हिरादेशश्च। हन्ति पद्मिनीं हेमन्तः॥

**उचिकुत्सिकुषिभ्यः कितच् ॥२१॥**

उच्यति उचितम्—न्याय्यम्। कुत्स्यति कुत्सितम्। कुष्यति कुषितम्—क्लिष्टम्॥

**अदि भुवो डुतच् ॥२२॥**

अद्भवति अद्भुतम्॥

**सौ रमेः क्तो दमे पूर्वपदस्य च दीर्घः ॥२३॥**

सुपूर्वाद्रमेः क्तो दमेऽर्थे। सुष्ठु रमते सूरतः—दमितः॥

**फलेरितजादेश्च पः ॥२४॥**

इतजादेः पश्च। फलति पलितम्॥

**जनेस्तो र च ॥२५॥**

तः स्याद् रान्तादेशः। जायते जर्तः—वस्त्रम्, लोम॥

**शकेर्ऋतिन् ॥२६॥**

---

१. अस्य सूत्रस्यार्धांशः (गण्डिमण्डिजनिनन्दिभ्यश्च) प्रक्रियाकौमुदीटीकाकारेण पूर्वत्रेत्थं व्याख्यातः—'गण्डयतीति गण्डयन्तः—मेघः। मण्डयति मण्डयन्तः—नटः। जनयतीति जनयन्तः। जनिस्थाने जीति पठन्ति केचित्। जीयते जयन्तः—हस्तिजित्वरौ। नन्दयन्तीति नन्दयन्तः।

शक्नोति शकृत् — विष्टा ।।

।। तान्ताः ।।

हनिकुषिनीरमिकाशिभ्यः क्थन् ।।२७।।

हन्ति हथः — व्याधिः । कुष्यति कुष्ठम् — गन्धद्रव्यम् । सुष्ठु नयति सुनीथः — नीतिमान् । रमन्तेऽस्मिन् रथः । काशतेऽनेन काष्ठम् ।।

अवे भृञः ।।२८।।

क्थन् । अवबिभर्त्यनेन अवभृथः — यज्ञान्तस्नानम् ।।

उषिकुषिगार्तिभ्यस्थन् ।।२९।।

उष्यते व्यजनैः ओष्ठः । कुष्णाति कोष्ठः — कुशूलः, उदरं च । गीयतेऽसौ गाथा । ऋच्छति तम् अर्थः ।।

सर्तेर्णित् ।।३०।।

थन् । धावति सिसर्त्ति सार्थः ।।

जॄवृञ्भ्यामूथन् ।।३१।।

जीर्यते जरूथम् — कश्मलम् । वृणोति वरूथम् — रथगुप्तिः ।।

पातॄतुदिवचिरिचिसिचिभ्यः क्थन् ।।३२।।

पिबति तेजः पीथः — रविः । तरत्यनेन तीर्थम् । तुदति तुत्थम् — अञ्जन-द्रव्यम् । उच्यते उक्थम् — साम । रिच्यते रिक्थम् — पित्रादिद्रव्यम्, सिच्यते सिक्थम् ।।

अर्तेर्निरि ।।३३।।

थक् । निरन्तरम् ऋच्छति निर्ऋथः — समाधिस्थानम् ।।

निशीथगोपीथावगथाः ।।३४।।

थकि निपात्याः । नियतं शेरतेऽस्मिन् निशीथः — अर्धरात्रः । गावः पिबन्त्यस्मिन् गोपीथः — जलद्रोणिः । अवगच्छत्यस्मिन् अवगीयते वा अवगथः — प्रातः, साम च ।।

उदि गस्थक् ।।३५।।

उद्गीयतेऽसौ उद्गीथः — साम ।।

समीणः ।।३६।।

थक् । समेति समिथः — अग्निः, संगमश्च ।।

तिथपृष्ठगूथयथप्रोथाः ।।३७।।

साधवः। तिष्ठति तिम्यति वा **तिथः**—कालः। तप्यत इति **केचित्**। स्पृशति **पृथं पृष्ठम्**। गवते **गूथः**—त्रर्वः। युवन्ति तत्र **यूथः**—संघः। प्रवते **प्रोथः**—सर्प-वराहमुखैकदेशः॥

**शीङ्शपिरुगमिवन्दिजीविप्राणिभ्योऽथः ॥३८॥**

शेते **शयथः**—निद्रालुः। शपन्ति तेन **शपथः**—सत्यम्। रौति **रवथः**—कालः। गच्छति गम्यते वा **गमथः**—कालः, पान्थपन्थानौ। वन्दन्ति **वन्दथः**। जीवति **जीवथः**—वाद्यसुभृतौ। प्राणिति **प्राणथः**—बलवान्॥

**आङि वसः[1] ॥३९॥**

अथः। आवसन्त्यत्र **आवसथः**—वेश्म॥

**भृञश्चित् ॥४०॥**

बिभर्ति **भरथः**—राजा॥

**रुदिविदिभ्यां कित् ॥४१॥**

अथश्चित् किच्च। रोदिति **रुदथः**—बालः। वेत्ति **विदथः**—विद्वान्॥

॥ थान्ताः ॥

**शॄदृभसोऽदिः ॥४२॥**

शीर्यतेऽस्यां **शरत्**। दृणाति **दरत्**—भीरुः, म्लेच्छः। दृशी बभस्ति **भसत्**—आमाशयस्थानम्॥

**त्यजितनियतिभ्यो डित् ॥४३॥**

अदिर्डित्। त्यजति **त्यद्**। तनोति **तद्**। यतते **यद्**॥

**एतेस्तुट् च ॥४४॥**

अदिस्तुट् च। एति **एतद्**॥

**दृषतेः षुक् ह्रस्वश्च ॥४५॥**

अदि षुक् च। दृणात्यत्र **दृषत्**—शिला॥

**कुणिपुल्योः किन्दच् ॥४६॥**

कुणति **कुणिन्दः**—उपकरणम्। पोलति **पुलिन्दः**—म्लेच्छजातिः॥

**कुपेर्व च ॥४७॥**

---

१. 'वासः' इत्यपपाठो मुद्रिते।

किन्दच् । कुप्यति **कुविन्दः**—तन्तुवायः ॥

**शाशपिभ्यां ददनौ ॥४८॥**

क्रमात् । नः स्वरार्थः । श्यति **शादः**—कृशः । शपन्ति तेन **शब्दः** ॥

**अब्दादयश्च ॥४९॥**

निपात्याः । आप्नोति सूर्यम् **अब्दः**— वर्षम् । मन्यते मनुते **मन्दः** । बृहति बृह्यते **वृन्दम्** । कम्पते **कन्दः**—कुन्दम् ॥

**युष्यसिभ्यां मदिक् ॥५०॥**

युष्यते **युष्मद्** । अस्ति **अस्मद्** ॥

॥ दान्ताः ॥

**कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः ॥५१॥**

कनिन् । यौति युवते **युवा** । वर्षति **वृषा** । तक्ष्णोति **तक्षा** । राजते **राजा** । धन्विः सौत्रः । धन्वति **धन्वा**—मरुदेशः । द्योति द्यूयते वा **द्युवा**—रविः । प्रतिदीव्यत्यस्मिन् **प्रतिदिवा** ।

अन्येभ्योऽपि । **अक्षा** । **ईक्षा** । **लवा** ॥

**नञि जहातेः ॥५२॥**

न जहात्यत्र कर्म **अहः** ॥

**सप्यशूभ्यां तुट् च ॥५३॥**

कनिन् । सपन्ति **सप्त** । अश्नुवते **अष्टौ** ॥

**नौतेर्गुणश्च ॥५४॥**

कनिन् गुणश्च धातोः । नौतीति **नव**—संख्या ॥

**श्वन्नुक्षन्पूषन्प्लीहन्क्लेदनस्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्निति ॥५५॥**

एते कनिनि साधवः । श्वयति धाष्ट्र्यात् **श्वा** । उक्षति **उक्षा**—वृषः । पुष्णाति पुष्यति वा **पूषा**—सूर्यः । प्लीहते **प्लीहा**—व्याधिः । क्लिद्यति **क्लेदा** । स्निह्यत्यनया **स्नेहा**—वसा । मुह्यत्यस्मिन् **मूर्धा** । मज्जत्यस्मिन् **मज्जा**—धातुः । ऋच्छति **अर्यमा**—देवः । विश्वं प्स्यायति **विश्वप्सा**—देवः । परिजायते **परिज्मा**—चन्द्रः, अग्निश्च । मातरि श्वयति **मातरिश्वा**—वातः । मह्यतेऽसौ **मघवा**—इन्द्रः ॥

**वीपतिभ्यां तनन् ॥५६॥**

वीयते **वेतनम्** । पतन्त्यस्मिन् **पत्तनम्** ॥

**गमेरिनिः ॥५७॥**

गमिष्यतीति **गमी**—जिगमिषुः ॥

**आङि णित् ॥५८॥**

इनिर्णित् । आगमिष्यतीति **आगामी**—प्रवासी ॥

**भुवश्च ॥५९॥**

इनिर्णिच्च । भविष्यति **भावी** ॥

**प्रे स्थः ॥६०॥**

इनिर्णिच्च । प्रस्थास्यति **प्रस्थायी** ॥

**परमे कित् ॥६१॥**

स्थ इनिः किच्च । परमे तिष्ठति **परमेष्ठी** ॥

**मन्थेश्च ॥६२॥**

इनिः किच्च । मथ्नाति **मन्थाः** ॥

**पतः स्थः च ॥६३॥**

इनिः थान्तादेशः । पतन्त्यनेन **पन्थाः** ॥

**अदेस्त्रिन् ॥६४॥**

अत्ति तपः स्वाध्यायम् **अत्रिः**—ऋषिः ॥

**पतेरत्रिन् ॥६५॥**

पतत्यत्यर्थं **पतत्रिः** ॥

**हृसृभ्यां क्वनिप् ॥६६॥**

हरति **हृत्वा**—वायुः । धावति **सृत्वा**—सर्पः ॥

**सृजेरम् च ॥६७॥**

क्वनिप्, अमागमश्च । सृजति **स्रग्वा**—मज्जातन्तुः ॥

**स्नामदिपद्यर्तिपॄशकिभ्यो वनिप् ॥६८॥**

स्नात्यस्यां **स्नावा** । **स्नावरी**—नदी । माद्यत्यनया **मद्वा** । **मद्वरी**—मदिरा । पद्यते **पद्वा**—रथः । **पद्वरी**—गतिः । ऋच्छति **अर्वा**—अश्वः। पिपर्ति **पर्वा** । शक्नोति **शक्वा**—शक्तः । **शक्वरी**—छन्दः ॥

**शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप् ॥६९॥**

शेते **शीवा**—अजगरः । क्रोशति **क्रुश्वा**—क्रोष्टा । रोहति **रुह्वा**—तरुः । जयति **जित्वा**—शक्रः । क्षयति **क्षित्वा**—कालः । सरति **सृत्वा** । ध्रियन्तेऽस्मिन् भूतानि **धृत्वा**—विष्णुः ॥

**ध्याप्योः संप्रसारणं च ॥७०॥**

ध्यायति **धीवा**—निषादः । प्यायते **पीवा**—मांसोपचितः ॥

**अदेर्धश्च ॥७१॥**

क्वनिप् धोऽन्तादेशश्च । अत्ति बलम् **अध्वा** ॥

**प्र ईरिसद्योस्तुट् च ॥७२॥**

प्रेरयति **प्रेत्वा**—वायुः । प्रसीदति **प्रसत्वा**—मूढः ॥

**मनिन् ॥७३॥**

सर्वेभ्यो मनिन् । क्रियते फलार्थिभिः **कर्म** । बभस्ति **भस्म** । शृणाति दुःखं **शर्म** । जायते **जन्म** ॥

**बृंहेर्नोऽच्च ॥७४॥**

मनिन् स्याद् नस्याऽऽदादेशः । बृंहति **ब्रह्म**—परमात्मजीवजातिकमलासनशब्द-राशयः ॥

**अशिशकिभ्यां छन्दसि ॥७५॥**

मनिन् । अश्नाति अश्नुते **अश्मा** । शक्नोति **शक्मा**—समर्थः ॥

**हृभृधृस्तृसृभ्य ईमनिन् ॥७६॥**

छन्दसि । हरति **हरीमा**—वायुः । बिभर्ति **भरीमा**—राजा । ध्रियते **धरीमा**—धर्मी । स्तीर्यते **स्तरीमा**—आच्छादनम् । धावति **सरीमा**—गर्भः ॥

**जनिहृभ्यामिमनिन् ॥७७॥**

जायते **जनिमा**—संसारः । हरति **हरिमा**—मृत्युः ॥

**वेञः सर्वत्र ॥७८॥**

भाषायां छन्दसि इमनिन् । वयति **वेमा** ॥

**नामन्सामन्स्तोमन्होमन्लोमन्व्योमन्विधर्मन्पाप्मन्व्यामन् ॥७९॥**

साधवः । नमन्ति तेन **नाम** । सिनोति स्वरान् **साम** । स्तुनोति **स्तोम** । हूयते

**होम** । लूयते **लोम**—रोम । वीयते वायुना **व्योम** । विविधं ध्रियते **विधर्मा**—वायुः । पाति पिबत्यात्मानं वा **पाप्मा** । व्ययते **व्याम**—संसारः ॥

**वसौ शृणातेर्मनिन् ॥८०॥**

बसवोऽस्य पापं शीर्यासुः **वसुशर्मा** । एवमन्ये भविष्यन्ति ॥

**सातिभ्यां मनिन्मनिणौ ॥८१॥**

यथासंख्यम् । स्यति **सामा** । अतति **आत्मा** ॥

**अर्तेर्भुक्षनक् ॥८२॥**

ऋच्छति **ऋभुक्षा** ॥

**हनो युन् आद्यन्तयोर्घत्वतत्वे ॥८३॥**

हन्त्याचारं **घातनः** । बहुलाद् वृद्धिः ॥

॥ नान्ताः ॥

[॥ इति षष्ठः पादः ॥]

# ॥ सप्तमः पादः ॥

## आप्नोतेः क्विप् ह्रस्वश्च ॥१॥

आप्नुवन्ति आपः ॥

## पानीविषिभ्यः पः ॥२॥

पाति पीयते दुर्जनैः पापम् । नयति नेपः —प्रवाहः । वेवेष्टि वेष्पः—परमात्मा ॥

## तुवः कित् ॥३॥

पः । तौति तुपः—मन्दः ॥

## स्तौतेर्दीर्घश्च ॥४॥

पः कित् । स्तौति स्तूपः—बोधिसत्त्ववचनः ॥

## कुसुयुभ्यश्च ॥५॥

पः कित् दीर्घश्च । कुप्यतेऽस्मिन् कूपः । सुनोति सूपः —व्यञ्जनम् । यौति यूपः॥

## सृशॄभ्यामूर्च ॥६॥

पः ऊरादेशश्च । धावति सिसर्ति सूर्पः—अहिः । शृणाति शूर्पः ॥

## खप्पशिल्पशष्पबाष्परूपतर्पतल्पाः ॥७॥

साधवः पान्ताः । खनति खप्पः—खनित्रम् । शीलयन्ति तत् शिल्पम् । शस्यते गवादिभिः शष्पम्—बालतृणम् । बाधते नेत्रं बाष्पम् —नेत्राम्बु । रूप्यते रूपम् । तरन्त्यनेन जनाः तर्पम् । तृप्यन्त्यत्र तल्पम् ।

बहुलात् चणतेः चण्पा । पान्ति पिबन्ति तां पम्पा ॥

## सर्तेरपः षुक् च ॥८॥

अपः षुक् च । धावन्ति तस्माद रक्षांसि सर्षपः ॥

## उषिकुटिदलिकजिखजिभ्यः कपन् ॥९॥

उषति उषपः—अग्निः । कुटपि कुटपः—परिमाणम् । दलयतेऽनेन दलपः—प्रहरणम् । कञ्जति कञ्जपः—शाकुनिकः, वन्धो वा । खज्यते खजपम्—दधि ॥

## क्वणेः संप्रसारणं च ॥१०॥

कपन् । क्वण्यते श्वापदैः कुणपः—मृतशरीरम् ॥

**कपश्चाक्रवर्मणस्य ॥११॥**

क्वणः कपः संप्रसारणं च । कुणपम् । स्वरे भेदः ॥

**विटपविष्टपविशिपोलपाः ॥१२॥**

कपनि साधवः । विटन्त्यत्र पक्षिणः विटपः । विशति तत्र **विष्टपम्**—भुवनम् । विशन्ति तत्र **विशिपम्**—वेश्म । उष्यतेऽग्निना **उलपम्**—तृणम् । उल्लूयते वा ॥

॥ पान्ताः ॥

**कलेः फगस्योच्च ॥१३॥**

फक् । अस्य उत् । कल्यते **कुलफः**—चतुरबन्धसंधिः ॥

**गलेश्च ॥१४॥**

फक् । अस्य उत् । गच्छति **गुलफः**—चरणग्रन्थिः ॥

॥ फान्तौ ॥

**कदिकडिकटिभ्योऽम्बच् ॥१५॥**

कदति **कदम्बः**—तरुः । **कडम्बः** । कटति **कटम्बः**—वाद्यभेदः ॥

**कदेर्णित् पक्षिणि ॥१६॥**

अम्बच् णित् । **कादम्बः**—कलहंसः ॥

**कृञश्च ॥१७॥**

अम्बच् । करोति **करम्बः**—शाकभेदः । उलबबिम्बादयोऽपि ॥

॥ बान्ताः ॥

**कृगृशृशलिगर्दिभ्योऽभच् ॥१८॥**

किरति **करभः**—उष्ट्रादेः [शावकः] । गिरति गृणाति **गरभः**—मृगः । शृणाति **शरभः**—अष्टपात् । शलति **शलभः**—पतङ्गः । गर्दति **गर्दभः** ॥

**ऋषिवृषिभ्यां कित् ॥१९॥**

ऋषति **ऋषभः** । वर्षति **वृषभः** ॥

**रुषेर्निच्च लश च ॥२०॥**

अभच् निच्च लशादेशः । रुशति **लषभः**—मत्तेभः ॥

## रासिवल्लिभ्यां च ॥२१॥

अभच् नित्च । रासते रासभः । वल्लति वल्लभः ॥

## गडेः कड च ॥२२॥

अभच् । गडति कडभः—करिशावः । डलयोरभेदात् कलभः ॥

## दृदलिभ्यां भः ॥२३॥

दृणाति दर्भः । दलयति दल्भः—वल्कलम् ॥

## अर्तिगृभ्यां भन् ॥२४॥

ऋच्छति अर्भः—बालः । गिरति गीर्यते गर्भः ॥

## इणः कित् ॥२५॥

एति इभः ॥

॥ भान्ताः ॥

## अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् ॥२६॥

ऋच्छति अर्मः—नेत्ररोगः । स्तौति स्तूयते स्तोमः । सूयते सोमः । हूयते होमः । सरति सर्मः—ध्वनिः । धरति ध्रियते वा धर्मः । क्षयति क्षेमम् । क्षौति क्षौमम् । बहुलाद् वृद्धिः। भाति भामः—कोपादित्यानलाः । याति यामः । वाति वामः । पद्यते भृङ्गैः पद्मम् । यक्ष्यति यक्ष्मा । बहुलान्नस्येत्व न । नीयते नेमः—अन्तिको देशः ॥

## अवतेष्टिलोपश्च ॥२७॥

मन् । अवतेः 'ज्वरत्वर'० [अ० ६।४।२०] इत्यूठ् । ततो गुणः । ओ३म्—प्रणवः ॥

## ग्रसते रा च ॥२८॥

मन् । आ अन्तादेशः । ग्रसन्तेऽस्मिन् ग्रामः ॥

## प्रथेरट् च ॥२९॥

मन् अट् च । प्रथन्तेऽस्मात् प्रथमः ॥

## अविसिविशुषिभ्यः कित् ॥३०॥

मन् । अवति उमा । ऊठ् । बहुलाद् ह्रस्वः । सीव्यते तेन सूमः । शोषयति दर्पं शुष्म—बलम् ॥

## इषियुधीन्धिदसिश्याधूसूभ्यो मक् ॥३१॥

ईषति ईष्मः—बाणवसन्तौ। युध्यते युध्मः—शरशरदौ। इध्यतेऽनेनाग्निः इध्मः—इन्धनम्। दस्यति दस्मः—हीनः। श्यायते श्यामम्। धुनोति धूयते वा धूमः। सूयते सूते सुवति वा सूमः—कालधर्मौ॥

गलेरुच्चोपधायाः ॥३२॥

मक्। गच्छति गुल्मः—व्याधिः॥

युजिरुचितिजां कुश्च ॥३३॥

मक् कवर्गान्तादेशः। युनक्ति युज्यते युग्मम्। रोचतेऽत्यर्थं रुक्मम्—हेम। तितिक्षते तिग्मम्—तीक्ष्णम्॥

हन्तेर्हि च ॥३४॥

मक् हिरादेशश्च। हन्ति सत्त्वान् हिमम्। बहुलाद् हेमम्॥

भियः षुग्वा ॥३५॥

मक् षुग्वा। बिभेत्यस्माज्जनो भीष्मः, भीमः॥

घर्मः ॥३६॥

निपातः। जिघर्ति तेजो घर्मः॥

ग्रीष्मः ॥३७॥

ग्रसते तेजो ग्रीष्मः॥

पच एलिमच् ॥३८॥

पचति पचेलिमम्॥

भिदेः केलिमत् ॥३९॥

भिनत्ति भिदेलिमः। कर्मकर्तरि॥

कर्दिकडोरमः ॥४०॥

कर्दति कर्दमः। कड्यते कडमः। डलयोरभेदात् कलमः॥

सूचेः स्मन् ॥४१॥

सूचयति सूक्ष्मम्॥

गुधेरूमः ॥४२॥

गुध्यति गोधूमः॥

इणो दमुक् ॥४३॥

एति इदम् ॥

कायतेर्डिमन् ॥४४॥

कायते किम् ॥

क्रमिगमिक्षमिभ्यस्तुम् वृद्धिश्च ॥४५॥

क्रामति क्रान्तुम् । गच्छति गान्तुम् । क्षाम्यते क्षान्तुम् ॥

प्रथेरमच् ॥४६॥

प्रथतेऽस्मात् संख्या प्रथमः । 'प्रथेरट् च' [७।२९] इति सिद्धे स्वरार्थं सूत्रम् ॥

चरेश्च ॥४७॥

अमच् । चरति चरमः ॥

॥ मान्ताः ॥

[॥ इति सप्तमः पादः ॥]

# ॥ अथ अष्टमः पादः ॥

[1][श्रुदक्षिस्पृहिगृहिदृजिभ्य आय्यः ॥१॥

शृणोति श्रवाय्यः । दक्ष्यते दक्षाय्यः । स्पृहयतीति स्पृहयाय्यः । गृहयतीति गृहयाय्यः । दृणातीति दराय्यः । जयतीति जयाय्यः ॥]

**दिधिषाय्यः ॥२॥**

दधातेराय्ये निपातः । धीयते दिधिषाय्यम् – मद्यम् ॥

**वृञः एण्यः ॥३॥**

वृणीते व्रियते वा वरेण्यः—वरिष्ठः, परब्रह्मधाम वा ॥

**स्तुवः क्सेय्यश्छन्दसि ॥४॥**

स्तूयतेऽसौ स्तुषेय्यः—स्तोता, देवो वा ॥

**राजेरन्यः ॥५॥**

राजते राजन्यः—ज्योतिः, अग्निः, क्षत्रियो वा ॥

**अर्तेर्नित् ॥६॥**

अन्यो नित् । अर्यते मृगैः अरण्यम् ॥

**पर्जन्यः ॥७॥**

साधुः । वर्षत्यर्जति वा पर्जन्यः ॥

**शृरम्योश्च ॥८॥**

अन्यो निच्च । शृणाति भयं शरण्यः—त्राता । रमन्तेऽस्मिन् रमण्यः— शोभनः ॥

**वदेरान्यः ॥९॥**

वदति वदान्यः—वक्ता, दाता वा ॥

**वलिमलितनिभ्यः कयन् ॥१०॥**

वलति तद् वलयम्— भूषणम् । मलति क्षितिं मलयः—गिरिः । तनोति कुलं तनयः—पुत्रः ॥

---

१. इदं सूत्रं व्याख्याकारेणान्यत्र व्याख्यातम् (द्र०— प्र० को० टी०, पृ० ६०२)।

**वृह्रोः षुग्दुकौ च ॥११॥**

कयन् आगमौ च क्रमात् । वृणोति वृषयः—आशयः । ह्रियते तद् हृदयम्—मनः ॥

**माछाससिसूभ्यो यः ॥१२॥**

मात्यनया माया—मिथ्या । छ्यति तेजः छाया । सस्तीति सस्यम्—यवादि । सुवत्यनेन सव्यम्—वामम् ॥

**जनेर्यक् ॥१३॥**

जायतेऽस्यामपत्यं जाया ॥

**अघ्न्यादयश्च ॥१४॥**

निपात्या यकि । हन्ति अघ्न्यः—धर्मः । देवता वा अघ्न्या । सम्यक् ध्यायन्त्यस्यां विप्राः सन्ध्या । संधीयते वा । काम्यतेऽसौ कन्या । हतमस्याः कर्मभिर्जीवितं वन्ध्या । ईर्ष्यति ईर्ष्या—मात्सर्यम् । शक्यते वक्तुं शक्यम्—असारम् ॥

**रुचिभुजिभ्यां किष्यन् ॥१५॥**

रुच्यते रुचिष्यम्—प्रियम् । भुज्यते भुजिष्यः - परिचारकः ॥

**पूञो यत् णट् ह्रस्वश्च ॥१६॥**

यत् णडागमो ह्रस्वश्च । पुनाति पूयतेऽनेन पुण्यम् ॥

**स्रंसे शिः कुट् किच्च ॥१७॥**

यत् । शिरादेशः कुडागमः । स्रंसते शिक्यम्—भिक्षुरज्जुः ॥

**हर्यतेः कन्यन् हिर् च ॥१८॥**

कन्यन्, हिरादेशः । हर्यति हिरण्यम् ॥

**दधातेर्यत् नुट् च ॥१९॥**

दधाति सत्त्वान् धान्यम् ॥

**कवतेर्यक् डुक् च ॥२०॥**

कवतेर्यक् डुक् चागमः । कवते कूयते वा कुड्यम्—भित्तिः ॥

॥ यान्ताः ॥

**मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच् ॥२१॥**

मन्दन्तेऽस्यां वाजिनो मन्दुरा—वाजिशाला । वाश्यते वाशुरः—गर्दभः । मथ्यते जनैः मथुरा । चतते चतुरः । चङ्क्यते चङ्कुरः । अङ्क्यते अङ्कुरः ॥

**व्यथेः संप्रसारणं घः[1] किच्च ॥२२॥**

उरच् घोऽन्तादेशः। व्यथतेऽस्माज्जनो **विधुरः**—अग्निः, राक्षसः॥

**मुकुरदर्दुरौ च ॥२३॥**

मङ्क्यतेऽनेन **मुकुरः**—चन्द्रदर्पणौ। दृणाति **दर्दुरः**—मण्डूकः।

बहुलात् शृणाति **शर्कुरः**—शिशुः। कौत्यत्यर्थं **कुक्कुरः**॥

**असेरुरन् ॥२४॥**

अस्यन्ते देवैः **असुराः**॥

**शावशेराप्तौ ॥२५॥**

शपूर्वादशेरुरन् आप्तौ। श्वश्यन्तेऽस्मिन् कामाः **श्वशुरः**॥

**इषिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचि-रुचिरुधिशुषिबन्धिभ्यः किरच् ॥२६॥**

इष्यते **इषिरः**—अग्निः। माद्यतेऽनया **मदिरा**। मोदन्तेऽनेन **मुदिरः**—मेघः। खिद्यतेऽनेन **खिदिरः**—वक्रः, चन्द्रः, देवलो वा। छिनत्ति **छिदिरः**—शस्त्रम्। भिनत्ति **भिदिरम्**—वज्रम्। मन्दतेऽस्मिन् **मन्दिरम्**। चन्दति **चन्दिरः**—मलयानिलः। तिम्यति **तिमिरम्**। मेहति **मिहिरः**—अंशुमान्। मुह्यते **मुहिरः**—स्मरः। मुञ्चति **मुचिरः**—वायुः। रोचति **रुचिरम्**—भासुरम्। रुणद्धि **रुधिरम्**। शुष्यति **शुषिरम्**। बद्धमस्य श्रोत्रं **बधिरः**॥

**अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः ॥२७॥**

किरजन्ताः साधवः। अजत्यस्मिन् **अजिरम्**। शीर्यन्ते तेजांस्यत्र **शिशिरः**। श्रयते **शिथिलम्**। रलयोरभेदात्। तिष्ठति **स्थिरम्**। स्फायते **स्फिरम्**। स्थितो यौवनात् **स्थविरः**। खाद्यते वा **खदिरः**।

बहुलात् शेतेऽस्मिन् सैन्यं **शिशिरम्**। पच्यतेऽस्मिन् **पिठिरम्**[2]॥

**मीनातेरूरन् ॥२८॥**

मीनाति **मयूरः**॥

**कठिचकिभ्यामोरन् ॥२९॥**

कठति **कठोरः**—चिरन्तनः, अमृदुर्वा। चकति **चकोरः**॥

**किशोरादयश्च ॥३०॥**

१. 'घः' इति त्रुटितं मुद्रिते। २. पिठरम्' इति मुद्रिते।

ओरन् । साधवः । काशते किशोरः । एवमन्येऽपि ।।

**स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवहिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् ।।३१।।**

स्फायते स्फारम्—बहु । तञ्चयते तक्रम् । वच्यते वक्रम्—कुटिलम् । शक्नोति शक्रः । क्षिप्यते क्षिप्रम् । क्षुद्यते क्षुद्रः । सर्पति सृप्रः—वायुसोमौ । तृप्यतेऽनेन तृप्रम्—आज्यम् । दृप्यति दृप्रः—हर्षमोहौ । वन्द्यते वन्द्रः—गुरुः । समुन्दति समुद्रः । श्वेतते श्वित्रम् । वर्तते वृत्रः—दानवः । अजति वीरः । नीयते नीरम्—जलम् । पद्यतेऽस्मिन् पद्रः—जनपदः । माद्यन्त्यत्र मद्रः—देशः । मोदतेऽनया मुद्रा—चिह्नम् । खिद्यतेऽनेन खिद्रः—श्रमः । छिद्यते छिद्रम् । भिनत्ति भिद्रम्—वज्रम् । मन्दते मन्द्रः—मधुरः स्वरः । चन्दति चन्द्रः । दहति दह्रः—अग्नितरू । दस्यति दस्रः । दम्नोति दम्भ्रः—दाम्भिकः, शूरः । वहति उह्रः—अनड्वान् । वसति तेजोऽत्र उस्रः—किरणः। वास्यते वास्रः—शकुनिगर्दभौ । शेते शीरः—अजगरः । हसति हस्रः—हर्बुकः । सिध्नोति सिध्रः—आसवप्रकारः । शोभते शुभ्रम्—सितम् ।।

**चकिरम्योरुच्चोपधायाः ।।३२।।**

चक्यतेऽनेन चुक्रः—रसः । रमन्त्यस्मिन् रुम्रः—रमणः ।।

**वेः कसेः ।।३३।।**

रक् । विकसतीति विकस्रः—शशी, पुष्पितं च ।।

**शदेरू च ।।३४।।**

रक् ऊ चोपधायाः । शीयते शूद्रः ।।

**स्थश्च ।।३५।।**

रक् ऊ च । तिष्ठतीति स्थूरः । रलयोरभेदात् स्थूलः ।।

**अमितम्योर्दीर्घश्च ।।३६।।**

रक् । अमति आम्रः—चूतः । ताम्यति ताम्रः—लोहविकारः ।।

**दुरीणो लोपश्च ।।३७।।**

दुर्पूर्वादिणो रक् धातोर्लोपश्च । दुःखेनेयते दूरम् ।।

**कृतेश्छक् क्रू च ।।३८।।**

रक् छगागमः क्रू आदेशः । पक्षं कृन्तति यत्नेन कृच्छ्रम्—दुःखम् । क्रूरः—दारुणः ।।

### रोदेर्णिलुक् च ॥३९॥

रक् । रोदयति दैत्यस्त्रीं रुद्रः—शिवः ॥

### बहुलमन्यत्रापि संज्ञाछन्दसोः ॥४०॥

अन्यस्माद्धातोरन्यस्मिन् प्रत्यये बहुलं णेर्लुक् संज्ञाछन्दसोः। देवयति द्यौः। क्विप्। पुण्यं कारयति पुण्यकृत्। चक्रं धारयति चक्रधरः। 'वर्धन्तु त्वा सुष्टुतयो गिरो मे' [ऋ० ७।९९।७]। वर्धयन्त्विति प्राप्ते।

संज्ञाछन्दसोरन्यत्रापि—

'वान्ति पर्णशुषो वातास्ततः पर्णमुचोऽपरे।
ततः पर्णरुहो वान्ति ततो देवः प्रवर्षति' ॥ इति ॥

### जोरी च ॥४१॥

रक् ईरन्तादेशः। जुवते जीरः—वाय्वग्नी ॥

### सुसूधागृधिभ्यः क्रन् ॥४२॥

सुन्वन्ति सुराः—देवाः, मदिरा वा। सूते सुवति सूयते वा सूरः—रविः। दधात्यापत्सु चित्तं धीरः। गृध्नाति गृध्रः—लुब्धकश्येनौ ॥

### शुसिचिमीभ्यो दीर्घश्च ॥४३॥

क्रन्। शवति शरणं शूरः। सिनोति सीरः—हलः। चिनोति चीरम्—वल्कलम्। मिनोति मीरम्—देशसीमा ॥

### वाविन्धेः ॥४४॥

विविधमिन्धे वीध्रः—निर्मलः, पूर्णचन्द्रमण्डलं वा ॥

### वृधिवपिभ्यां रन् ॥४५॥

वर्धते वर्ध्रम्—चर्म, चन्द्रोऽपि। उप्यतेऽस्मिन् वप्रः—देशः, प्राकारोऽपि ॥

### ऋज्रेन्द्राग्रवज्रविप्रकुप्रचुप्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लतीव्र-वर्णरामालाः ॥४६॥

रन्नन्ताः साधवः। अर्जयति अर्जयते वा ऋज्रः—नायकः। इन्दति इन्द्यते वा तेजोभिः इन्द्रः। अङ्गति अग्रम्—आदिः, अन्तश्च। व्रजति सर्वत्र वज्रम्। विविधं दातारं पाति विप्रः। कुम्भ्यते कुप्रम्—गृहच्छादनम्। चुम्पते चुप्रम्—मुखम्। क्षुरति

क्षुरः—नापितशस्त्रम् । खुरति खुरः—शफः । भन्दते भद्रम्—कल्याणम् । उद्गच्छति उग्रम्—तीव्रम् । उद्गिरति उग्रः—रुद्रः । बिभेति भेरः, भेलः—शरः, मण्डूको वा । शोभते शुक्लः, शुक्रः । तिप्यते तीव्रम् । वृणोति वर्ण्यते वा वर्णः । ईयते इरा—पानजातिः । मान्यतेऽनया मलयति तां माला—स्रक् ॥

**कॄगॄशॄवृञ्चतिभ्यः ष्वरच् ॥४७॥**

किरति कर्वरः—हिंस्रः । स्त्री चेत् कर्वरी । गिरति गर्वरः—अहंकारः, गन्धर्वो वा । शृणोत्यस्मिन् शर्वरः । वृणोति वर्वरः—कामः । चतन्तेऽस्मिन् चत्वरः ॥

**नौ सदेः ॥४८॥**

ष्वरच् । नियतं सीदन्त्यस्मिन् निषद्वरः—जम्बालः, आसनं च ॥

**छित्वरछत्वरधीवरपीवरमीवरचीवरनीवरगह्वरकट्वरसंयद्वराः ॥४९॥**

ष्वरचि साधवः । छिनत्ति छित्वरः—धूर्तः । छादयति छत्वरः—निकुञ्जः, छादनं वा । ध्वंसते धीवरः—निषादजातिः । पिबति पीवरः—मांसलः । मीवरः । चिनोति चीयते वा चीवरम्—मुनिवासः । नीवरः—नेता । गूहति गह्वरम्—गहनम् । कटति कट्वरम्—व्यजनम् । संयच्छति संयद्वरः—वाग्यतः, समवायोऽपि । उपह्वयन्त्यस्मिन् उपह्वरः[1]—संधिरहस्यम् ॥

**अशेः सरन् ॥५०॥**

अश्नुते अश्नाति अक्षरम्—वर्णः, मोक्षपदं च ॥

**वसेश्च ॥५१॥**

सरन् । वसन्त्यस्मिन् नक्षत्राणि वत्सरः—अब्दः ॥

**संपूर्वाच्चित् ॥५२॥**

सरन् चित् । समेत्य वसन्त्यत्र संवत्सरः । एवं परिवत्सरादयः ॥

**कृधूमदिभ्यः कित् ॥५३॥**

सरन् । क्रियते कृसरः—तिलान्नम् । धूनोति धूसरः । माद्यत्यनेन मत्सरः ॥

**पते रश्च लो वा ॥५४॥**

सरन् । पतति पत्सलः, पत्सरः—पादप्रहारः ॥

**तन्यृषिभ्यां क्सरन् ॥५५॥**

---

१. 'उपह्वरः' इति सूत्रे नास्ति मुद्रिते ।

तनोति **तसरा** । ऋषति **ऋक्षरा**—तोयधारा ॥

**अमिनक्षियजिवधिपतिभ्योऽत्रन् ॥५६॥**

अमत्यन्नं **अमत्रम्** । नक्षति **नक्षत्रम्** । इज्यन्तेऽत्र देवा **यजत्रम्**—अग्निहोत्रम् । हन्यतेऽनेन **वधत्रम्** । पतत्यनेन **पतत्रम्**—वाहनम् ॥

**गडेरादेश्च कः ॥५७॥**

अत्रन् आदेश्च कः । स्नेहेन गडयति **कडत्रम्** । डलयोरभेदात् **कलत्रम्** ॥

**वृञश्चित् ॥५८॥**

अत्रन् चित् । वृणोति व्रियते वा **वरत्रा**—चर्मरज्जुः ॥

**सौ विदेः कत्रन् ॥५९॥**

सुष्ठु वेत्ति विद्यते **सुविदत्रम्**—ज्ञानम् ॥

**कृतेश्च नुम् ॥६०॥**

कृन्तति **कृन्तत्रम्**—छेदनम्, वेष्टनम् ॥

**ऋच्छेररन् ॥६१॥**

ऋच्छति **ऋच्छरम्**—इन्द्रियप्रलयः ॥

**अर्तिकमिभ्रमिचमिदेविवाशिभ्यश्चित् ॥६२॥**

अरन् चिच्च । ऋच्छत्यर्यते वा **अररः**—रणः । काम्यतेऽसौ **कमरः**—कान्तः, कोमलः । भ्राम्यति **भ्रमरः** । **चमरः** । देवते **देवरः**—भर्तुः कनीयान् भ्राता । वाश्यते **वाशरः** ।

बहुलाद् वासयतीति **वासरः** । एवमन्ये ॥

**कुवः क्करन् ॥६३॥**

कवते कौति वा **कुररः**—पक्षी ॥

**अङ्गिमदिमन्दिभ्य आरन् ॥६४॥**

अङ्ग्यतेऽसौ **अङ्गारः** । माद्यति **मदारः**—पाकशौण्डः । मन्दतेऽनेन **मन्दारः**—देवतरुः ॥

**गडेः कड च ॥६५॥**

आरन् कडादेशः । गडति गडयते वा **कडारः**—पिङ्गः ॥

**शृङ्गारभृङ्गारौ ॥६६॥**

आरनि साधू। श्रियते जनैः शृङ्गारः, श्रयति सौभाग्यं शृणोति माधुर्येण श्रोत्रैर्यं शृङ्गारः— रसविलासौ। बिभर्त्यम्भो भृङ्गारः— जलकलशः ॥

**कञ्जिमृजिभ्यां चित् ॥६७॥**

आरन् स चित्। कञ्जति कञ्जारः—कुशूलः। मार्ष्टि भवनं मार्जारः ॥

**कमेरुच्चोपधायाः ॥६८॥**

आरन् स चित्। काम्यते कुमारः— महासेनः, बालश्च ॥

**तुषारादयश्च ॥६९॥**

आरन्नन्ताः साधवः। तुष्यन्त्यस्मिन्निति तुषारः—हिमम्। कसति तस्मात् कासारः ॥

**शृणातेः करन् ॥७०॥**

शृणाति चित्तं शर्करा ॥

**पुषः कित् ॥७१॥**

करन्। पुष्यति पुष्करम्। लश्रुतेः पुष्कलम् ॥

**कॄशॄपूकटिपटिशौटिभ्य ईरन् ॥७२॥**

कीर्यते करीरः—विटपी। शीर्यते शरीरम्। पुनाति पवीरम्- पवित्रम्। कट्यते कटीरम्—जघनम्, जनपदो वा। पटति पटीरः—शरः। शौटति शौटीरः—वीरः, कम्बलः।

बहुलात् कुटीरम् ॥

**कशेर्मुट् च ॥७३॥**

ईरन्। कशति कश्मीरः—देशः ॥

**कृञ उच्च ॥७४॥**

ईरन् उदन्तादेशः। क्रियते कुरीरः—मैथुनम्, वेश्म वा ॥

**घसेः कित् ॥७५॥**

ईरन् स कित्। घस्यते क्षीरम्। उपधालोपादि ॥

**गभीरगम्भीरौ ॥७६॥**

ईरन्नन्तौ। गाधते गभीरम्, गम्भीरम।

बहुलात् कटीरम ॥

**चतेरुरन् ॥७७॥**

चतते चतुरः । बहुलाद् अकारस्येत्संज्ञापि । चत्वारः ॥

**ष्ट्रन् ॥७८॥**

छाद्यतेऽनेन छत्रम् । वस्तेऽङ्गं वस्त्रम् । पतति पत्रम् । राजते राष्ट्रम् ॥

**भ्रस्जिगमिनमिहनिविश्यशां वृद्धिश्च ॥७९॥**

ष्ट्रन् । भृज्जत्यस्मिन् भ्राष्ट्रम् । गच्छति गात्रम् । नमति नात्रम्—शिरः । हन्ति हात्रम्—रक्षा । वेवेष्टि वैष्ट्रः[1]—विष्णुः । अश्नुते अश्नाति आष्ट्रम्—नभः॥

**दिवेर्द्यु च ॥८०॥**

ष्ट्रन् द्युरादेशः, वृद्धिश्च । दीव्यत्यस्मिन् द्यौत्रम्—स्वर्गः ॥

**उषिखनिभ्यां कित् ॥८१॥**

ओषति वनस्पतीन् उष्ट्रम् । खन्यते खात्रम्—तडागः ॥

**सिविमुच्योष्टेरू च ॥८२॥**

सीव्यत्यनेन सूत्रम् । मुच्यते तन् मूत्रम् ॥

**हुयामाश्रुभसिभ्यस्त्रन् ॥८३॥**

हूयते होत्रम्—हविः । यानं यात्रा—गतिः । मानं मात्रा—अल्पपरिमाणम् । शृण्वन्त्यनेन श्रोत्रम्—कर्णः । बभस्त्यनया भस्त्रा—दृतिः ॥

**गमेरा च ॥८४॥**

त्रन् आ अन्तादेशश्च । गच्छति गात्रम्—देहः ॥

**अमिचिमिदिशसिभ्यः क्त्रः ॥८५॥**

अमन्त्यस्मिन् अन्त्रम् । चीयते चित्रम् । मेद्यति मित्रम् । शसत्यनेन शस्त्रम् ॥

**पूञो ह्रस्वश्च ॥८६॥**

पूञः क्त्रः[2] प्रत्ययः । पुनाति पुत्रः—सुतः ॥

**[संस्त्याने स्त्यायतेर्ड्रट् ॥८७॥**

स्त्यायत्यस्यां गर्भ इति स्त्री ।']‍[3]

**गुधृवीपचिवचियमिमनितानसदिक्षदिभ्यस्त्रः ॥८८॥**

१. 'वैष्ट्रः' इति मुद्रिते ।
२. 'त्र' इत्यपपाठो मुद्रिते ।
३. सूत्रमिदं व्याख्याकारेणान्यत्र व्याख्यातम् (द्र०—प्र० को० टी०, पृष्ठ ६०२)।

गूयते गोत्रम्—नामादि। ध्रियते धर्त्रम्—धर्मेश्वरी। वीयतेऽनेन वेत्रम्—वल्ली। पच्यतेऽनेन पक्त्रम्—तेजः। उच्यतेऽनेन वक्त्रम्। यच्छति यन्त्रम्। मन्यते मनुतेऽनेन मन्त्रः। तनोति तन्यते तन्त्रम्। सादयति तेन सत्रम्—यज्ञादि। क्षदति क्षत्रम्—राजा॥

## दादिभ्यश्छन्दसि ॥८९॥

त्रः। दात्यनेन दात्रम्। पूयते पोत्रम्। पिबत्यनेन पात्रम्। लूयते लोत्रम्॥

## भूवादिगृभ्यो णित्रन् ॥९०॥

भवति भावित्रम्[1]—विधानम्। वाद्यते वादित्रम्। गीर्यते गारित्रम्—अनुपानम्, गुरुश्च॥

## चरेर्वृत्ते ह्रस्वश्च वा ॥९१॥

णित्रन्। चरन्ति तेन चारित्रम्, चरित्रम्॥

## अशित्रादिभ्य इत्रोत्रौ ॥९२॥

अश्नन्ति येन तद् अशित्रम्—अन्नपात्रम्। तरति तेन तरुत्रम्। एवमन्येऽपि चरुत्रादयः॥

## अमेर्द्विषति चित् ॥९३॥

इत्रः चित्। अमति अमित्रः—शत्रुः॥

## मसेरूरन् ॥९४॥

मस्यते मसूरः—सस्यम्॥

## हिंसेरीरन्नीरचौ ॥९५॥

हिनस्ति हिंसीरः। स्वरे भेदः॥

## उदि दृणातेरच् पूर्वपदान्त्यलोपश्च ॥९६॥

उदीर्यते वायुना उदरम्॥

## जनेरर ठः ॥९७॥

अरः ठान्तादेशः। जायतेऽस्मिन् व्याधिः जठरम्॥

## वतिमनिभ्यां चिद् वा ॥९८॥

अरः ठान्तादेशो वा चित्। वनति वठरः-मूर्खः। मन्यते मठरः—पण्डितः॥

## कृदरादयश्च ॥९९॥

दरे साधवः। कुर्वन्ति तस्मिन् कृदरः—कुसूलः। म्रियतेऽनेन मृदरः—व्याधिः।

---

१. 'भवित्रम्' इत्यपपाठो मुद्रिते।

दृणाति दृदरम्—विषम् । शृणाति शृदरः—सूर्यः ॥

**अश्नोतेराशुकर्मणि वरट् [ई] चोपधायाः ॥१००॥**

वरट् उपधाया ई च । अश्नुते विश्वम् ईश्वरः ॥

**व्याङि घ्रो जातौ कन् ॥१०१॥**

व्याजिघ्रति व्याघ्रः ॥

**करोतेर्द्वे च ॥१०२॥**

कन् । करोति क्रियते चक्रः ॥

**हने रन् घ च ॥१०३॥**

हन्ति हन्यते घरः—गृहम् ॥

॥ रान्ताः ॥

**भूसलिकलिमह्यनिभडिभण्डिचण्डिशण्डिगण्डिपिण्डि[तुण्डिमुण्डि-कुकि]भ्यः इलच्[1] ॥१०४॥**

भविलम्—भुवनम् । सलति सलिलम् । कलयति कलिलम् । महयति महिला । अनित्यनेन अनिलः । भडिः सौत्रः । भडिलः—निन्दकः । भण्डिलः—दूतः । चण्डते चण्डिलः—श्वा । शण्डयते शण्डिला—तटम् । गण्डिलम्—भटम् । पीडयते पिण्डते वा पिण्डिलः—पिण्डः, गणकश्च । तुण्डते तुण्डिलः—मुखरः । मुण्डयति मुण्डिलः—अग्निः । कोकिलः—पिकः ॥

**कमेः पश्च ॥१०५॥**

इलच् पश्चान्तादेशः । कम्यते कपिलः—वर्णः, मुनिर्वा ॥

**मिथिलादयश्च ॥१०६॥**

मथतेऽस्यां मिथिला । इमिलः ॥

**कपिगडिपटिभ्य ओलः ॥१०७॥**

कम्प्यते कपोलः । गण्डयते गण्डोलः—हर्षणः । पटयते पटोलः—द्रव्यम् ॥

**हृषेरुलच् ॥१०८॥**

हृष्यति हर्षुलः—क्रीडनमृगौ ॥

**कलस्तृपश्च ॥१०९॥**

कलः । तृप्यति तृपला—लता । चात् काम्यते कमलम् । मण्डयते मण्डलम् । कुण्डयते कुण्डलम् । कुश्यते कोशलः—देशः । तोसते तोसलः ॥

१. 'किलच्' इत्यपपाठो मुद्रिते ।

**शपेर्बश्च ॥११०॥**

कलः, बश्चान्तादेशः । शप्यतेऽसौ शबलः ॥

**वृषादिभ्यश्चित् ॥१११॥**

कलः चित् । वृषति वृषलः—शूद्रः । दीव्यति देवलः —ऋषिपूजकौ । केव्यते केवलः । पटति पटलम् ॥

**मृजेष्टिलोपश्च ॥११२॥**

कलः । मृज्यतेऽसौ मलः ॥

**चुपेरच्चोपधायाः ॥११३॥**

चोपति मुहुः चपलः ॥

**शकिशम्योर्नित् ॥११४॥**

शक्यतेऽपनेतुं शकलम् । शम्यते शमलम्—शकृत् ॥

**द्रमिमस्योरुच्चोपधायाः ॥११५॥**

कलः । द्रमति द्रुमलम् । मस्यतेऽनेन मुसलम् ॥

**कम्बलादयश्च ॥११६॥**

साधवः । काम्यते कम्बलः । कोमलः । शम्यते पथि दुःखमनेन शम्बलः । छायते यज्ञे छगलम् । पलति पल्यते पललम्—तिलान्नम् । पटत इति पाटला—लता । इत्यादि ॥

**तमिविडिविलिमृणिकुलिकपिपलिविशिपचिकुणिभ्यः कालन् ॥११७॥**

ताम्यति तमालः । वेडयत्याखून् विडालः । विलति विलालः—भिदुरः । मृणति मृणालम् । कुल्यते कुलालः । कपयति कपालम् । पलयति पलालम् । विशति तद् विशालम् । पञ्चयति पञ्चालः । कुणति कुणालम्—नगरम् ॥

**पतिचण्डिभ्यामालञ् ॥११८॥**

पतन्ति तत्र पातालम् । चण्डते चण्डालः ॥

**पीयुक्वणिभ्यां कालन् ह्रस्वश्च ॥११९॥**

कालन् धातोर्ह्रस्वश्च । पीयते पियालम्—शाकम्, वीरुच्च । क्वणति क्वणालम्—नगरम् ॥

**पुषः कलन् ॥१२०॥**

पुष्कलम् ॥

मूङ्शक्यविभ्यः क्लः ॥१२१॥

मवते मूलम् । शक्नोति हृदयं मार्जयितुं शुक्लम् । अव्यते अक्लम्—शल्कादिरसः ॥

कुडिकुषिभ्यां क्मलन् ॥१२२॥

कुड्यते कुड्मलम् । कुष्यते कुष्मलम्—विकसितम् ॥

वृङ्लुटितनिताडिभ्य उलच् तण्डश्च ॥१२३॥

व्रियन्ते लुटयन्ते तन्यन्ते ताडयन्ते तण्डुलाः । तण्डुलशब्दो निपातितः । सत्यम् । स्वरविशेषार्थं वचनम् ॥

मव्यतेर्यलोपो मश्चायुडालः ॥१२४॥

आलो यलोपो मान्तादेश आयुडागमः । मव्यते ममायालः—प्रीतिः, स्नेहो वा ॥

मङ्गेरलच् ॥१२५॥

मङ्ग्यते मङ्गलम् ॥

॥ लान्ताः ॥

प्रथेः षिवन् संप्रसारणम् ॥१२६॥

प्रथते पृथिवी । गौरादित्वात् ङीषि सिद्धे षित्त्वं गणकृतस्यानित्यत्वज्ञापनार्थम् ॥

अशूप्रुषिलटिकटिकणिखटिविशिभ्यः क्वन् ॥१२७॥

अश्नुतेऽध्वानम् अश्वः । प्रोषति प्रुष्वः—अग्निबिन्दुः । लटति लट्वः—चपलः । कटति कट्वः । कणति कण्वः—ऋषिः । खटति खट्वा । विशति विश्वम् ॥

इण्शीङ्भ्यां वन् ॥१२८॥

एति एवम् । शेते शेवः—सर्पः ॥

सर्वनिघृष्वरिष्वलिष्वशिवपट्वप्रह्वेष्वा अतन्त्रे ॥१२९॥

अतन्त्रे अकर्तरि निपात्याः । सृतमनेन विश्वं सर्वम् । निघृष्यते निघृष्वः—निशान्तः, क्षुरो वा । रिष्यन्तेऽनेन रिष्वम्—शस्त्रम् । लिष्यते लिष्वः—कान्तः । शेते शिवम् । श्यति वा । पटचते पट्वः—देशः । प्रह्वयतेऽसौ प्रह्वः । इष्यतेऽसौ इष्वः । अतन्त्रे किम् ? सरति सर्ता ॥

शेवयह्वजिह्वाग्रीवाप्वामीवाः ॥१३०॥

वनि निपात्याः। शेतेऽत्यर्थं शेवः—अजगरः। यान्त्यनया तांस्तानर्थान् यह्वा—धीः, वृद्धिः। लिह्यत्यनया रसान् जिह्वा। गिरत्यनयाऽन्नपानं ग्रीवा। आप्नोति सर्वम् आप्वा—वायुः। मीयते मीवा—परिमाणजातिः॥

कॄगॄशॄदॄभ्यो वः ॥१३१॥

कृणाति किरति वा कर्वः—समुद्रमूषकौ। गिरति गृणाति गर्वः। शृणात्यसुरान् भक्तानां पापं वा शर्वः—ईशः। दृणाति सर्वान् दर्वः॥

स्रुवः कः ॥१३२॥

स्रवन्ति तस्माद्धवींषि स्रुवः॥

शपेर्वन् ॥१३३॥

शपति शपते वा शप्वः—आक्रोशः॥

उल्वादयश्च ॥१३४॥

वनि साधवः। उल्लीयते उल्वम्-बभ्रुजरायुः, तरक्षुः। शलति शल्यते वा शल्वम् —स्त्रीपुंयोगः॥

॥ वान्ताः॥

[॥ इति अष्टमः पादः ॥]

# ॥ अथ नवमः पादः ॥

**क्लिशेरीच्चोपधायाः शन् लोपश्च लो नाम् च ॥१॥**

शन् म उपधाया ई लस्य लोपे नामागमः। क्लिश्नाति कीनाशः—कदर्यः॥

**क्लिशेरन् लोपो लः ॥२॥**

क्लिश्यते यैस्ते केशाः॥

॥ शान्तौ ॥

**अविमह्योष्टिषच् ॥३॥**

अवति अविषः—नृपसमुद्रौ। अविषी—गङ्गा। मह्यतेऽसौ महिषः-यमवाहनम्, राजा च। महिषी—मुख्यस्त्री॥

**रुहेर्वृद्धिश्च ॥४॥**

टिषच्। रोहत्यत्यर्थं रौहिषम्—तृणम्। रौहिषी वा—दूर्वा॥

**तवेर्णिद् वा ॥५॥**

टिषच् णिच्च वा। वृद्धिः। तवति ताविषः, तविषः—स्वर्गः। तविषी, ताविषी—गङ्गा॥

**नञि व्यथेः ॥६॥**

टिषच्। न व्यथते अव्यथिषः—सूर्याग्निभूमयः॥

**सहः षट् लुक् च क्विप् ॥७॥**

सहेः षषादेशः प्रत्ययस्य लुक्। सहन्ते षट्॥

**परौ व्रजेः षः पदान्ते क्विप् दीर्घश्च ॥८॥**

क्विप् दीर्घः पदान्ते षान्तादेशः। परिव्रजति परिव्राट्॥

**कॄतॄभ्यामीषन् ॥९॥**

कीर्यते करीषम्—गोमयविकारः। तरन्ति तेन तरीषः—प्लवबोधौ॥

**शॄपॄभ्यां कित् ॥१०॥**

शृणाति तं शिरीषः—वृक्षः। पूर्यतेऽनेनोदरं पुरीषम्—विष्ठा॥

**अर्जेर्ऋज च ॥११॥**

ईषन् कित् ऋजादेशश्च । अर्ज्यते ऋजीषम्—धनम् ॥

अम्बरीषम् ॥१२॥

निपातः । पचन्त्यस्मिन् अम्बरीषम्—भ्राष्ट्रम् । आप्यते तद्वायुभिः अम्बरीषम्—आकाशम् ॥

ऋनहिभ्यामुषच् ॥१३॥

ऋच्छत्यर्यंते वा अरुषः—प्राणः । नह्यति नहुषः—नृपः ॥

पुरः कुषन् ॥१४॥

पृणाति पूर्यते पुरुषः—नरः ॥

पृकलिभ्यामुषच् ॥१५॥

पृणाति परुषः—निष्ठुरः । कलते कलुषः—अप्रसन्नः ॥

पीयेरूषन् ॥१६॥

पीयते पीयूषम्—अमृतम् ॥

मूङ्य्वोर्लोपश्च ॥१७॥

ऊषन् अन्तलोपश्च । मूयते मूषा—द्रुतधातुपात्रम् । यौति यूषम्—व्यञ्जनम् ॥

मस्जेर्नुम् च ॥१८॥

ऊषन् । मज्जत्यस्यां मञ्जूषा—जलद्रोणी ॥

अङ्गूषः ॥१९॥

साधुः । अङ्गति अङ्गूषः—गजबाणवेगाः ।

बहुलात् खलति खलूषः—म्लेच्छः । फलति फलूषा—वीरुत् ॥

विषेर्व्याप्तिकर्मणि कन् ॥२०॥

वेवेष्टि विश्वं विषम् ॥

॥ षान्ताः ॥

वृतृवदिहनिकमिकषियुमुचिभ्यः सः ॥२१॥

वृणाति वर्षम्—वत्सरः । तरन्त्यनेन तर्षम्—प्लवः । वदत्यभीक्ष्णं मातरं वत्सः—बालः । हन्त्यध्वानं हंसः—पक्षिसूर्यौ । काम्यते कंसः—दनुजमानपात्राणि । कष्यते गवादिभिः कक्षम्—वनम् । यूयते योषा—स्त्री । मोचनं मोक्षः—अपवर्गः ॥

प्लुषेरच्चोपधायाः ॥२२॥

प्लुष्यति प्लक्षः ॥

**मनेर्दीर्घश्च ॥२३॥**

सः । मन्यतेऽत्यर्थं मांसम्—पिशितम् ॥

**अशेर्देवने ॥२४॥**

सः । अश्नुतेऽत्यर्थम् अक्षः—देवनादिः ॥

**स्नुव्रश्चिकृत्यृषिभ्यः कित् ॥२५॥**

सः । स्नौति स्नुषा—पुत्रस्त्री । वृश्चत्युष्णं वृक्षः । कृन्तति कृत्सः—पापम् । ऋषति ऋक्षम्—भम् ॥

**ऋषेर्जातौ ॥२६॥**

सः किच्च । ऋषति ऋक्षः—श्वापदम् ॥

**मा सः ॥२७॥**

मीयतेऽनेन वर्षं मासः । सानुवृत्तौ पुनः सग्रहणं कित्त्वाभावार्थम् । अन्यथा इत्वं स्यात् । अथवा निपातः ॥

**उन्द्यमिगुहिकुषिभ्यः कित् ॥२८॥**

सः । उन्दतीति उत्सः—प्रस्रवणम् । अमत्यनेन अंसः—स्कन्धः । गुह्यति गुत्सः—रोषः । कुष्णाति कुक्षः—गर्भः ॥

**गृधिपत्योर्दषौ च ॥२९॥**

सः किच्च क्रमादन्तादेशौ च । गृध्यति गृत्सः—अभिलाषः, ऋषिः । पतति पक्षः—मासार्धम् ॥

**[1]बृंहेर्नलोपश्च ॥३०॥**

इसिः । बृंह्यते बर्हिः—वेद्यास्तरणम् ॥

**द्युतेरिसिन्नादेश्च जः ॥३१॥**

द्योतते ज्योतिः—ग्रहनक्षत्रादयः ॥

**वसौ रुचेः संज्ञायाम् ॥३२॥**

इसिन् । वसवोऽस्मिन् रोचन्ते वसुरोचिः—क्रतुः ॥

---

१. इतः पूर्वं 'अर्जिशुचिहुसृपिच्छादिच्छृदिभ्य इसिः' इति सवृत्ति सूत्रं त्रुटितं प्रतिभाति ।

## स्तुवः कित् ॥३३॥

इसिन् । स्तूयन्तेऽस्मिन् देवाः स्तविः—यज्ञः ॥

## सहो धश्च ॥३४॥

इसिन् धान्तादेशः । सहते सधिः—भूमिः ॥

## पिबतेस्थुक् च ॥३५॥

इसिन् । पिबति पाथिः—सूर्यः ॥

## जनेरुसिः ॥३६॥

जायते इति जनुः—जन्म ॥

## मनेर्धश्छन्दसि ॥३७॥

उसिर्धोऽन्तादेशः । मन्यते मनुते वा मधुः—पवित्रम् ॥

## अर्तिपॄवपियजितनिधनितपिभ्यो नित् ॥३८॥

उस् । ऋच्छत्यर्यते वा अरुः—सूर्यप्राणी । पृणाति पूर्यते वा परुः—समुद्रः । उप्यते वपुः—देहः । इज्यते यजुः छन्दसि । तनुः । धनति धनुः—धन्वा । तपति तपुः—सूर्याग्निशत्रवः ॥

## एतेर्णिच्च ॥३९॥

उसिः । एति आयुः—जीवनम् ॥

## चक्षेः शिच्च ॥४०॥

चष्टे रूपं चक्षुः—नेत्रम् ॥

## बहुलमन्यत्रापि ॥४१॥

संचष्टे संचक्षुः । परिचष्टे परिचक्षुः ॥

## दमेर्डोस् ॥४२॥

दमयति दाम्यति दोः—बाहुः ॥

## अत्यविचमितमिनभिरभिलभिनमितपिपतिपनिपणिमहिभ्योऽसच् ॥४३॥

अतति अतसः—अग्निनृपौ वायुरात्मा च । अवति अवसः—समयः। चमत्यनेन चमसः—पात्रम् । तम्यतेऽस्यां तमसा—नदी । रभते रभसः—सम्भ्रमः। लभते लभसः—पावकः। नभति नभसः—हिंस्रः। पनायति पनसः—रुरुतरुविशेषौ । पतति पतसः—पतङ्गः इत्यादि ॥

वेञस्तुट् च ॥४४॥

वीयते वेतसः—वानीरः ॥

वयो णित् ॥४५॥

असच् । वयते वायसः—ध्वाङ्क्षः ॥

वहियुभ्यां नित् ॥४६॥

असच् । वहति वहसः—अनड्वान् । यूयते यवसम्—तृणम् ॥

पातेर्डुम्सुन् ॥४७॥

पाति पुमान्—नरः ॥

पिबतेरि च ॥४८॥

असुन् । पीयते पयः—जलम् ॥

अशेर्देवने युट् च ॥४९॥

अश्नाति अश्नुते वाशुभं यशः ॥

उब्जेर्बले बलोपश्च ॥५०॥

असुन् । उब्जति ओजः—बलम् ॥

श्वयतेः संप्रसारणं च ॥५१॥

असुन् । श्वयति शवः ॥

श्रयतेः स्वाङ्गे शिरः किच्च ॥५२॥

असुन् शिरादेशः । श्रयत्यस्मिन् शिरः—मूर्धा ॥

अर्तेरुच्च ॥५३॥

असुन् कित् । अर्यते रहसि स्त्रीभिः उरः—वक्षः ॥

व्याधौ शुट् च ॥५४॥

अर्तेरसुन् । अर्यंते पाणिभिः अर्शांसि—रोगः ॥

उदके नुट् च ॥५५॥

अर्तेरसुन् । अर्यंते पिपासुभिः अर्णः—जलम् ॥

इण आगसि ॥५६॥

असुन् नुट् च । एति कर्मणा एनः—पापम् ॥

**रिचेर्धने घिच्च ॥५७॥**

असुन् घिच्च । रिच्यते रेकः – धनम् ॥

**चायतेरन्ने ह्रस्वश्च ॥५८॥**

असुन् । चायते चणः—अन्नम् । बहुलाद् णत्वम् ॥

**वृङ्शीङ्भ्यां रूपस्वाङ्गयोः फट् च ॥५९॥**

असुन् । व्रियते वर्फः—रूपम् । शेते शेफः —मेढ्रः ॥

**स्रुरीभ्यां तुट् च ॥६०॥**

असुन् । स्रवति स्रोतः—स्रवणम् । रीयते रेतः—शुक्रम् ॥

**पातेर्बले जुट् च ॥६१॥**

असुन् । पातीति पाजः—बलम् ॥

**उदके थुट् च ॥६२॥**

पातेरसुन् । पाति जीवितं पाथः—जलम् ॥

**अन्ने च ॥६३॥**

पाथः—अन्नम् ॥

**अदेर्नुम्धौ च ॥६४॥**

असुन् नुमागमो धोऽन्तादेशः । अद्यते अन्धः—अन्नम् ॥

**स्कन्देश्च स्वाङ्गे ॥६५॥**

असुन् धोऽन्तादेशः । स्कन्दति स्कन्धः—देहाङ्गम् ॥

**आपः कर्माख्यायां ह्रस्वश्च नुड् वा ॥६६॥**

असुन् ह्रस्वो नुड् वा स्यात् । आप्नुवन्ति तद् अप्नः, अपः—व्यवसितम् ॥

**रूपे जुट् च ॥६७॥**

आपोऽसुन् ह्रस्वो जुट् च । आप्यते अब्जः—रूपम् ॥

**उदके नुम्भौ च ॥६८॥**

आपोऽसुन् नुमागमो भान्तादेशो ह्रस्वश्च । आप्नोति सर्वम् अम्भः ॥

**नहेर्दिवि भश्च ॥६९॥**

असुन् । नह्यते तन्मेघैः नभः — आकाशम् ॥

**इण आग अपराधे ॥७०॥**

असुन् आगादेशः। एत्यनेन आगः—अपराधः ॥

**अमेर्हुक् च ॥७१॥**

असुन्। अमन्ति अंहः—पापम् ॥

**रमेर्देशे हश्च ॥७२॥**

असुन्। होऽन्तादेशः। रमन्तेऽस्मिन् रहः—विविक्तो देशः ॥

**अञ्ज्यजियुजिभृजिभ्यः कुश्च ॥७३॥**

असुन्। कवर्गोऽन्तादेशः। अज्यते अङ्गः—क्षेम। अजति अगः। युनक्ति योगः—मनः। भृज्यते भर्गः—हरिः, हरश्च ॥

**भूरञ्जिभ्यां कित् ॥७४॥**

असुन्। भुवः—अन्तरिक्षम्। रजः—अशुभम्, रेणुश्च ॥

**वसेर्णित् ॥७५॥**

असुन्। वस्ते शरीरं वासः—वस्त्रम् ॥

**चन्देरादेश्च छः ॥७६॥**

असुन्। चन्दयति छन्दः—वेदः ॥

**पचिवचिभ्यां सुट् च ॥७७॥**

असुन्। पचति तेन पक्षः। उच्यतेऽनेन वक्षः—उरः ॥

**वहिहाधाञ्भ्यश्छन्दसि ॥७८॥**

असुन् सुट् च। उह्यते वक्षः—उरः, दासो वा। प्रहाणं प्रहासः—हर्षः। दधाति स धासः—शरणम् ॥

**इण आसिः[1] ॥७९॥**

एतीति अयाः—उरः ॥

---

१. 'इणोऽसिः' इत्यपपाठो मुद्रिते।

## मिथुनेऽसिः पूर्ववच्च सर्वम् ॥८०॥

धातूपसर्गसम्बन्धो मिथुनम् । तत्र असिः । पूर्ववच्च सर्वं कार्यम् । सुष्ठु अश्नुते सुयशाः । सुष्ठु श्रवति सुश्रोताः । सुष्ठु वर्चते सुवर्चाः इत्यादि ॥

## ने हन एह च ॥८१॥

नञ्पूर्वात् हन्तेरसिः, एहादेशश्च । न आहते अनेहाः—कालः ॥

## विधाञो वेध च ॥८२॥

असिः वेधादेशः । विदधाति वेधाः ॥

## नुवो धुट् च ॥८३॥

नूयते नोधाः—ऋत्विक् ॥

## गतिकारकोपपदयोः पूर्वपदप्रकृतिस्वरत्वं च ॥८४॥

[1][गतिकारकोपपदयोर्धातोरसिः प्रत्ययो भवति, पूर्वपदप्रकृतिस्वरत्वं च । गतौ खल्वपि—शोभनमश्नुतेऽश्नाति वा सुयशाः, सुस्रोताः, सुतपाः । कारके खल्वपि—महांस्तपतीति महातपः, बृहद्यशाः, शुद्धयशाः । एवमन्येऽपि द्रष्टव्याः ॥]

## चन्द्रे मो डित् ॥८५॥

चन्द्र उपपदे मा असमादसिर्डिच्च । चन्द्रं मिमीते मीयते वा चन्द्रमाः—शशी ॥

## वयसि धाञः ॥८६॥

असिः । वयो दधातीति वयोधाः—प्राणः, चन्द्रश्च ॥

## पयसि च ॥८७॥

पयो दधातीति पयोधाः—समुद्रः ॥

## पुरसि च ॥८८॥

धाञोऽसिः । पुरो वधातीति पुरोधाः—उपाध्यायः ॥

## पुरूरवाः ॥८९॥

निपातः । पुरुरूयते स्वयशः सर्वत्रेति पुरूरवाः—राजा ॥

---

१. इयं वृत्तिर्मुद्रिते नोपलभ्यते । अस्माभिः पूरिता ।

चक्षेर्बहुलं शित् ॥९०॥

आचष्टे आचक्षाः—वाग्मी । आख्याः । प्रख्याः—बृहस्पतिः ॥

वसेः कित् ॥९१॥

वसति तस्याम् उषाः—रात्रिः ॥

दमेरूनसिः ॥९२॥

दाम्यति दमूनाः—शुक्रः ॥

अङ्गिराः ॥९३॥

साधुः । अङ्गारेभ्यः सृतः अङ्गिराः—मुनिः ॥

अप्सरसः ॥९४॥

असौ साधुः । अद्भ्यः सृता अप्सरसः—स्वर्गस्त्रियः ॥

विदिभुजिभ्यां विश्वे ॥९५॥

असिः । विश्वं वेत्ति विन्दति विद्यते वा विश्ववेदाः । विश्वं भुनक्ति विश्वभुजः—अग्निः ॥

वशेः कनसिः ॥९६॥

वष्टि उश्यते उशनाः—शुक्रः ॥

अमेरसः ॥९७॥

अमति अमसः—व्याधिः ॥

अपि सर्तेरसुन् ॥९८॥

अद्भ्यः सृताः अप्सरसः ॥

कृञः पासन् ॥९९॥

क्रियते कार्पासः—वस्त्रयोनिः ।

दंसेष्टदतौ नस्य आ च ॥१००॥

दंसेष्टत् अत् एतौ स्तः, नस्य चाकारः । दस्यते दासः । तित्वात् स्वरितः । दासा । दासी ॥

दाशतेश्च तटतौ ॥१०१॥

दाशन्ति तस्मै जना दाशः । दाशा । दाशी ॥

॥ सान्ताः ॥

गुहेः कन् ॥१०२॥

गूहति गुहः—सेनानीः । गुहा—अद्रिः ॥

सिचेर्नुम् हौ च कन् ॥१०३॥

सिञ्चति सिंहः ॥

वहेः क्विबनसो डश्च ॥१०४॥

अनो वहतीति अनड्वान् ॥

॥ हान्ताः ॥

[॥ इति नवमः पादः ॥]

# ॥ अथ दशमः पादः ॥

## स्थाचतिमृजेरालज्वालजालीयचः ॥१॥

एते क्रमात् स्युः । तिष्ठत्यत्रान्नं स्थालः । चत्यते चत्वालः । मार्ष्टि मार्जालीयः ॥

बहुलात् चषालः ॥

## सृयुवचिभ्योऽन्युजागूजक्नुचः ॥२॥

क्रमात् । धावति सरण्युः—मेघः, वायुः । यूयते यवागूः—पेया । वक्ति वचक्नुः—वाग्मी ॥

## शकेरुनोन्तोन्त्युनयः ॥३॥

एते । शक्नोति नभो गन्तुं शकुनः, शकुन्तः, शकुन्तिः, शकुनिः ॥

## इणस्तशस्तशसुनौ ॥४॥

एति एतशाः—वाय्वग्न्यर्काः । स्वरे भेदः ॥

## उल्मुकदर्विहोमिनः ॥५॥

साधवः । उषयति उल्मुकम्—अर्धदग्धं काष्ठम् । दर्विः—साधनम्, भाण्डम् । जुहोति होमी—ऋत्विक् ॥

## विसाविहा ॥६॥

क्विपि साधू । विस्यति विसा । विजहाति विहा—स्वर्गः ॥

## शीङो धुग्लग्वलन्वालनः ॥७॥

शीङ एते स्युः । शेरतेऽस्मिन् जनाः सीधु—मदिरा । बहुलात् सत्वम् । साधु कर्मणि शेते शीलम्—धर्मसमाधिः । शेवलम्, शेवालम्—जलमलम् ॥

## खर्जिविजादिभ्य ऊरजूलचौ ॥८॥

खर्ज्यादेरूरच् । विजादेरूलच् । खर्जति खर्जूरः । कर्जति कर्जूरः—वृक्षजातिः । कल्पते कर्पूरः—गन्धद्रव्यम् । विजते विजूलम् । हन्ति वधूलः—घातकः ॥

## मृडः कीकन्कङ्कणौ ॥९॥

मृड्यते मृडीकम् । मृडङ्कः ॥

**ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कत्निच्यतुजलिजिष्ठुजिष्ठजनिस्यन्निषन्नसन्नूषानुकः ॥१०॥**

एभ्यः क्रमादेते स्युः। ऋच्छत्यर्यते वा अरत्निः—बाहुमध्यभागः । तनोति तन्यतुः—वायुः, सूर्यश्च । अनक्ति अज्यते वानेन अञ्जलिः—करद्वयपुटः । वनति वनोति वा वनिष्ठुः—अपानोपरिस्थानम् । अनक्ति अञ्जिष्ठः—गतिः, अग्निश्च । अर्पयति अर्प्यते वा अर्पणिः—आर्द्र मांसम् । माद्यत्युदकं प्राप्येति मत्स्यः—मीनः । अङ्गत्यनेनेति अङ्गिषः । कौति कवते कूयते वा कवसः । यौति यूयते वा यवूषः । कृश्यत इति कृशानुः—अग्निः ॥

**स्पृशेः श्वण्शुनौ पृ च ॥११॥**

स्पृशति स्पृश्यते वा पार्श्वम्, पर्शु—गतमस्थि ॥

**कुसेरूलोम्भोण्वोमेदेताः कित् ॥१२॥**

कुसेरेते स्युः । कुस्यति तानि कुसूलः, कुसुम्भः, कुसुण्वः, कुसुमम्, कुसीदम्, कुसितम् ॥

**जनिदाच्युसृवृमदिशमिगमिभृञ्भ्य इत्वन्त्वन्त्नण्क्निन्शक्स्यखाकाटश्च ॥१३॥**

जायते जन्यते वा जनित्वम्—लोकः । ददाति दात्वः—यज्वा । च्यवते च्यौत्नः—अण्डजः । धावति सृणिः—रविः । वृणोति वृशः । माद्यति मत्स्यः । शाम्यति शङ्खः । गच्छति गमकः । भरति भरटः ॥

**अन्येभ्योऽपि दृश्यन्ते ॥१४॥**

इत्वादयः । पीयते पीत्वा । प्यायते प्यात्वम् । लवनं लूनिः[1] । एवमन्ये ॥

**सानसिधर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलपल्वलधिष्ण्यशल्याः ॥१५॥**

एते साधवः । सनोति सन्यते वा सानसिः—स्नेहः, हिरण्यम् । ध्रियते धारयति वा धर्णसिः—लोकपालः । पृणातीति पर्णसिः—आभरणक्रिया । ताड्यते तण्डुलः—व्रीहिसारः । अङ्क्यते अङ्कुशः—प्रतोदः । चषति चषालः—यज्ञभाण्डम् । एति इल्वलः । पिबन्ति तस्मिन् पल्वलः । धिषति धिष्ण्यम् । शलति शल्यम् ॥

**आः समिण्निकषिभ्याम् ॥१६॥**

समेति समया । निकषणं निकषा ॥

---

१. 'लूतिः' इति मुद्रिते ।

**लोष्टफलितौ ॥१७॥**

निपातौ । ऋति[1] लोष्टः । फलयत्यनेन **फलितम्** ॥

**अवद्यावमाधमार्वरेफाः कुत्सिते ॥१८॥**

साधवः । **अवद्यम्** । न वमन्ति[2] तत्पुरुषा **अवमम्** । **अधमम्** । अर्वतेऽसौ **अर्वा** । रिफति **रेफः** ॥

**लीङ्रीङोर्ह्रस्वश्च पुट् तरौ श्लेषकुत्सनयोः ॥१९॥**

एतयोः क्रमात् तरौ पुट् ह्रस्वश्च । लीयते **लिप्तम्** । रीयते **रिप्रम्** ॥

**स्थः स्थ चावजवकौ ॥२०॥**

अवजवकौ स्थ इत्यादेशश्च । तिष्ठति **स्थवः, स्थवकः** ।

इत्यादयोऽन्येऽपि कल्प्याः । येऽत्र साधिता अप्युक्तास्तेऽर्थभेदाद्धातुभेदात् स्वरभेदाद्वा यथायोगं ज्ञेयाः ॥

॥ मिश्राः ॥

[॥ इति दशमः पादः ॥]

एवमादिशब्दसूचिता उणादयो दशपाद्यनुसारेण व्याख्याताः ॥

---

१. 'ऋति' इत्यपपाठः । 'लोष्ट'शब्दस्तु 'रुष'धातोः सिद्ध्यति । लत्वं चात्र निपातनाद् भविष्यति ।

२. 'वदन्ति' इत्यपपाठो मुद्रिते ।

# दशपाद्युणादिवृत्तीनाम् उदाहरण-सूची

| शब्दः | पादः | सू(१) | सू(२) | सू(३) | शब्दः | पादः | सू(१) | सू(२) | सू(३) |
|---|---|---|---|---|---|---|---|---|---|
| अंस: | ९ | | | २८ | अङ्गुरि: | १ | ४४ | ४४ | ४४ |
| अंह: | ९ | | | ७१ | अङ्गुलि: | १ | ४४ | ४४ | ४४ |
| अंहति: | १ | ३० | ३१ | ३१ | अङ्गूष: | ९ | | | १९ |
| अक्तम् | ६ | ९ | ९ | ९ | अजि: | १ | (५।१७) | ६७ | ६७ |
| अक्रि: | १ | | | ३५ | अजिता | ५ | १७ | १५ | |
| अक्ष: | ९ | | | २४ | अजिनम् | ५ | १६ | १४ | १४ |
| अक्षरम् | ८ | ५५ | | ५० | अजिर: | ८ | २९ | | |
| अक्षा | ६ | ५४ | ५१ | ५१ | अजिरम् | ८ | २९ | २७ | २७ |
| अक्षि | १ | ११ | १२ | १२ | अजिरा: | ८ | | २७ | |
| अक्षु: | १ | १५४ | | १५३ | अञ्चति: | १ | २९ | ३० | ३० |
| अक्षु: | १ | १५४ | | १५३ | अञ्जलि: | १० | | | १० |
| अक्षण: | ५ | | | ४९ | अञ्जि: | १ | ६७ | | |
| अक्षणम् | ५ | ५२ | ४९ | | अञ्जिष्ठ: | १० | | | १० |
| अग: | ९ | | | ७३ | अटवि: | १ | २५ | २६ | |
| अग्नि: | १ | १९ | २० | २० | अणु | १ | | | ९२ |
| अग्रम् | ८ | ५१ | ४६ | ४६ | अणु: | १ | ९२ | | ९३ |
| अग्रेगू: | १ | १७७ | १७६ | | ,, | १ | ९३ | | |
| अघ्न्य: | ८ | १४ | १४ | १४ | अण्डम् | ५ | ९ | ८ | |
| अघ्न्या | ८ | | | १४ | अतस: | ९ | | | ४३ |
| अङ्कति: | १ | २९ | ३० | ३० | अतिथि: | १ | ४३ | | |
| अङ्कुर: | ८ | २१ | २१ | २१ | अत्क: | ३ | २१ | २० | २१ |
| अङ्कुश: | १० | | | १५ | अत्न: | ५ | | ३९ | ३९ |
| अङ्क्रि: | १ | ३४ | ३५ | | अत्नम् | ५ | ४२ | | |
| अङ्ग: | ९ | | | ७३ | अत्रि: | १ | ३६ | ३७ | ३७ |
| अङ्गार: | ८ | ६९ | | ६४ | ,, | ६ | ६८ | | ६४ |
| अङ्गिरा: | ९ | | | ९३ | अत्री | १ | ३६ | | |
| ङ्गिषअ: | १० | | | १० | ,, | ६ | | ६४ | |

| शब्दः | पादः | सू(१) | सू(२) | सू(३) | शब्दः | पादः | सू(१) | सू(२) | सू(३) |
|---|---|---|---|---|---|---|---|---|---|
| अर्भकः | ३ | ५१ | ४९ | ४९ | अशित्रम् | ८ | ९८ | | ९२ |
| अर्मः | ७ | ३० | २६ | २६ | अश्मयुः | १ | | १२१ | |
| अर्यमा | ६ | ५९ | ५५ | ५५ | अश्मा | ६ | ७९ | ७५ | ७५ |
| अर्वा | ६ | ७२ | ६८ | ६८ | अश्रिः | १ | ६५ | ६५ | ६५ |
| ,, | १० | | | १८ | अश्रु | १ | १६२ | १६२ | १६१ |
| अर्शयानः | ५ | | ३१ | | अश्वः | ८ | | | १२७ |
| अर्शमानः | ५ | ३४ | | ३१ | अष्टका | ३ | ३० | २९ | ३० |
| अर्शांसि | ९ | | | ५४ | अष्टौ | ६ | ५६ | ५३ | ५३ |
| अलम् | ८ | १२४ | | | असवः | १ | ९४ | | ९४ |
| अलाबूः | १ | १७० | १६९ | १६८ | असिः | १ | ६७ | ६७ | ६७ |
| अलीकम् | ३ | ४३ | ४२ | ४३ | असुराः | ८ | २५ | २४ | २४ |
| अवगथः | ६ | ३७ | ३४ | ३४ | अस्थि | १ | ९ | १० | १० |
| अवगथम् | ६ | ३७ | ३४ | | अस्मद् | ६ | ५३ | ५० | ५० |
| अवटः | ५ | | | २ | अस्मयुः | १ | १२० | | १२० |
| अवटम् | ५ | ३ | २ | | अस्रु | १ | १६२ | | १६१ |
| अवद्यम् | १० | | | १८ | अहः | ६ | ५५ | ५२ | ५२ |
| अवद्रुः | १ | १६२ | | | अहिः | १ | ६५ | ६५ | ६५ |
| अवनिः | १ | १ | १ | १ | आकषिकः | ३ | १३ | | |
| अवभृथः | ६ | ३१ | २८ | २८ | आखनिकः | ३ | १७ | १६ | १७ |
| अवमम् | १० | | | १८ | आखुः | १ | ११७ | ११८ | ११७ |
| अवलत्तिका | ३ | २९ | २८ | २९ | आख्याः | ९ | | | ९० |
| अवसः | ९ | | | ४३ | आगः | ९ | | | ७० |
| अविनः | ५ | १४ | १२ | १२ | आगामी | ६ | ६२ | ५८ | ५८ |
| अविषः | ९ | ५ | | ३ | आचक्षाः | ९ | | | ९० |
| अविषी | ९ | ५ | | ३ | आचिकीर्षणिः | १ | २ | ३ | |
| अवीः | १ | ८१ | ८२ | ८१ | आजिः | १ | ५८ | ५८ | ५८ |
| अव्यथिषः | ९ | ८ | | ६ | अजिहीर्षणिः | १ | २ | | |
| अव्लम् | ८ | | | १२१ | आडूः | १ | १६९ | १६८ | |
| अशनिः | १ | १ | १ | १ | आतिः | १ | ५८ | ५८ | ५८ |

| शब्दः | पादः | सू(१) | सू(२) | सू(३) |
|---|---|---|---|---|
| आत्मा | ६ | ८५ | ८१ | ८१ |
| आन्त्रम् | ८ | ९१ | | |
| आपः | ७ | | १ | १ |
| आपणिकः | ३ | १३ | १६ | १७ |
| ,, | ३ | १७ | | |
| आपतिकः | ३ | १७ | १६ | |
| आपनिकः | ३ | १७ | | १७ |
| आप्वा | ८ | १३३ | | १३० |
| आम्रः | ८ | ४० | ३६ | ३६ |
| आयुः | १ | ८६ | | ८६ |
| ,, | ९ | | | ३९ |
| आरूः | १ | १६८ | १६७ | १६६ |
| ,, | १ | | | १६७ |
| आलु | १ | ८९ | | |
| आलुः | १ | | | ८९ |
| आवसथः | ६ | ४२ | ३९ | ३९ |
| आशास्ता | २ | १ | | |
| आशु | १ | ८५ | | ८५ |
| आशुशुक्षणिः | १ | २ | ३ | ३ |
| आष्ट्रः | ८ | ८५ | | |
| आष्ट्रम् | ८ | | | ७९ |
| इक्षुः | १ | १५३ | १५४ | १५३ |
| इक्षुकुट्टकः | ३ | | ५ | |
| इक्षुघट्टकः | ३ | ५ | | |
| इक्ष्वाकुः | १ | १५२ | | |
| इदम् | ७ | ४७ | ४३ | ४३ |
| इध्मः | ७ | ३५ | ३१ | ३१ |
| इनः | ५ | ३८ | ३५ | ३५ |
| इन्दुः | १ | ९६ | | ९६ |
| इन्द्रः | ८ | ५१ | ४६ | ४६ |
| इभः | ७ | २९ | २५ | २५ |
| इमिलः | ८ | | | १०६ |
| इयम् | ७ | ४७ | | |
| इरा | ८ | ५१ | ४६ | ४६ |
| इरिणम् | ५ | १९ | १७ | १७ |
| इल्वलः | १० | | | १५ |
| इषिरः | ८ | २८ | २६ | २६ |
| इषीका | ३ | ३९ | ३८ | ३९ |
| इषुः | १ | ९७ | | ९७ |
| इष्टका | ३ | ३० | २९ | ३० |
| इष्मः | ७ | | ३१ | |
| इष्वः | ८ | | | १२९ |
| ईर्ष्या | ८ | १४ | १४ | १४ |
| ईशा | ६ | ५४ | ५१ | ५१ |
| ईश्मः | ७ | ३५ | | |
| ईश्वरः | ८ | १०६ | | १०० |
| ईष्मः | ७ | | | ३१ |
| उक्थम् | ६ | ३५ | ३२ | ३२ |
| उक्षा | ६ | ५९ | ५५ | ५५ |
| उखा | ३ | ५९ | ५६ | ५६ |
| उग्रः | ८ | ५१ | ४६ | ४६ |
| उग्रम् | ८ | ५१ | | ४६ |
| उचितम् | ६ | २४ | २१ | २१ |
| उत्सः | ९ | | | २८ |
| उदकम् | ३ | ११ | ११ | ११ |
| उदरथिः | १ | ४१ | ४२ | ४२ |
| उदरम् | ८ | १०२ | | ९९ |
| उद्गाता | २ | २ | २ | २ |
| उद्गीथः | ६ | ३८ | ३५ | ३५ |
| उन्नेता | २ | २ | २ | २ |

| शब्दः | पादः | सू(१) | सू(२) | सू(३) | शब्दः | पादः | सू(१) | सू(२) | सू(३) |
|---|---|---|---|---|---|---|---|---|---|
| उपद्रष्टा | २ | २ | २ | २ | ऊर्मिः | १ | | १४ | १४ |
| उपह्वरः | ८ | | | ४६ | ऋक्षः | ९ | | | २६ |
| उपह्वरम् | ८ | ५४ | | | ऋक्षम् | ९ | | | २५ |
| उमः | ७ | ३४ | ३० | | ऋक्षरा | ८ | ६० | | ५५ |
| उमा | ७ | | | ३० | ऋच्छरम् | ८ | | | ६१ |
| उरः | ९ | | | ५३ | ऋच्छरा | ८ | ६६ | | |
| उरणः | ५ | ६६ | ६२ | ६३ | ऋजसानः | ५ | ३३ | | ३० |
| उरु | १ | ११५ | | | ऋजीकम् | ३ | ४० | ३९ | ४० |
| उरुः | १ | | ११६ | ११५ | ,, | ३ | ५० | ४८ | ४८ |
| उलपम् | ७ | १२ | १२ | १२ | ऋजीषम् | ९ | १३ | | ११ |
| उलूकः | ३ | ४६ | ४५ | ४५ | ऋजुः | १ | १११ | ११२ | १११ |
| उल्कः | ३ | २० | | | ऋज्रः | ८ | ५१ | ४६ | ४६ |
| उल्का | ३ | | | २० | ऋञ्जयानः | ५ | | ३० | |
| उल्काः | ३ | | १९ | | ऋतुः | १ | १२३ | १२४ | १२३ |
| उल्मुकम् | १ | | | ५ | ऋधक् | ४ | १० | | |
| उल्वः | ८ | १३७ | | | ऋफिडः | ५ | १२ | | |
| उल्वम् | ८ | | | १३४ | ऋफिड्डः | ५ | १२ | | |
| उशनाः | ९ | | | ९६ | ऋभुक्षा | ६ | ८६ | | ८२ |
| उशिक् | ४ | ९ | ९ | ९ | ऋभुक्षाः | ६ | | ८२ | |
| उशीरम् | ८ | ७८ | | | ऋषभः | ७ | २३ | १९ | १९ |
| उषपः | ७ | ९ | ९ | ९ | ऋषिः | १ | ४७ | ४७ | ४७ |
| उषाः | ९ | | | ९१ | एकः | ३ | २१ | २० | २१ |
| उष्ट्रम् | ८ | ८७ | | ८१ | एतः | ६ | ७ | ७ | ७ |
| उष्णम् | ५ | ३८ | ३५ | ३५ | एतद् | ६ | ४७ | ४४ | ४४ |
| उस्रः | ८ | | ३१ | ३१ | एतशः | ९ | ४ | | |
| उस्रम् | ८ | ३३ | | | एतशाः | १० | | | ४ |
| उह्लः | ८ | ३३ | ३१ | ३१ | एधतुः | १ | १३० | १३१ | १३० |
| ऊनः | ५ | ३८ | ३५ | ३५ | एनः | ९ | | | ५६ |
| ऊरुः | १ | ११४ | ११५ | ११४ | एरण्डः | ५ | १० | ९ | ९ |
| ऊर्णा | ५ | ६७ | ६३ | ६४ | एवम् | ८ | | | १२८ |

| शब्दः | पादः | सू(१) | सू(२) | सू(३) |
|---|---|---|---|---|
| ओजः | ९ | | | ५० |
| ओतुः | १ | १२१ | १२२ | १२१ |
| ओदनः | ५ | २५ | २२ | २२ |
| ओ३म् | ७ | ३१ | २७ | २७ |
| ओष्ठः | ६ | ३२ | २९ | २९ |
| कंसः | ९ | | | २१ |
| कक्षम् | ९ | | | २१ |
| कचपम् | ७ | ९ | ९ | |
| कच्छः | ४ | ६ | ६ | ६ |
| कच्छूः | १ | १६७ | १६६ | १६५ |
| कञ्जपः | ७ | | | ९ |
| कञ्जारः | ८ | ७२ | | ६७ |
| कटम्बः | ७ | १५ | १५ | १५ |
| कटिः | १ | ४५ | ४५ | |
| कटीरम् | ८ | ७७ | | ७२ |
| ,, | ८ | | | ७६ |
| कटुः | १ | ९३ | | ९३ |
| कट्वः | ८ | | | १२७ |
| कट्वरम् | ८ | ५४ | | ४९ |
| कठिनम् | ५ | १७ | १५ | १५ |
| कठोरः | ८ | | २९ | २९ |
| कठोरम् | ८ | ३१ | | |
| कडत्रम् | ८ | ६२ | | ५७ |
| कडभः | ७ | २६ | २२ | २२ |
| कडमः | ७ | ४४ | ४० | ४० |
| कडम्बः | ७ | | | १५ |
| कडारः | ८ | ७० | | ६५ |
| कडीरम् | ८ | ८२ | | |
| कणीचिः | १ | ३७ | ३८ | ३८ |

| शब्दः | पादः | सू(१) | सू(२) | सू(३) |
|---|---|---|---|---|
| कण्ठः | ५ | ७ | ६ | ६ |
| कण्डम्बः | ७ | १५ | | |
| कण्वः | ८ | | | १२७ |
| कथकः | ३ | ९ | ९ | ९ |
| कदम्बः | ७ | १५ | | १५ |
| ,, | ७ | १८ | | |
| कदम्बम् | ७ | | १५ | |
| कन्तुः | १ | १११ | ११२ | १११ |
| ,, | १ | १२४ | १२५ | १२४ |
| कन्दः | ६ | | | ४९ |
| कन्दुः | १ | ९८ | | ९८ |
| कन्या | ८ | १४ | १४ | १४ |
| कपालम् | ८ | १२० | | ११७ |
| कपिः | १ | ७२ | ७२ | ७२ |
| कपिलः | ८ | | | १०५ |
| कपोलः | ८ | ११० | | १०७ |
| कफेलूः | १ | १७६ | १७५ | १७३ |
| कमठः | ५ | ६ | ५ | ५ |
| कमरः | ८ | ६७ | | ६२ |
| कमलम् | ८ | ११२ | | १०९ |
| कम्पीटः | ५ | | ३ | |
| कम्पीटम् | ५ | ४ | | |
| कम्बलः | ८ | ११९ | | ११६ |
| करकः | ३ | | ४७ | ४७ |
| करकम् | ३ | ४९ | | |
| करण्डः | ५ | १० | ९ | ९ |
| करभः | ७ | २२ | १८ | १८ |
| करम्बः | ७ | | | १७ |
| करम्बम् | ७ | १७ | १७ | |
| करिमा | ६ | | ७७ | |

| शब्दः | पादः | सू(१) | सू(२) | सू(३) | शब्दः | पादः | सू(१) | सू(२) | सू(३) |
|---|---|---|---|---|---|---|---|---|---|
| करीरः | ८ | ७७ | | ७२ | कषिः | १ | ६७ | ६७ | ६७ |
| करीषम् | ९ | ११ | | ९ | कषीका | ३ | ३५ | ३४ | ३५ |
| करुणः | ५ | ५५ | ५२ | | कसारः | ८ | ७४ | | |
| करुणा | ५ | | | ५२ | काकः | ३ | २१ | २० | २१ |
| करेणुः | १ | १३२ | १३३ | १३२ | काणुकः | ३ | | | ४४ |
| कर्कः | ३ | १८ | १७ | १८ | काणूकः | ३ | ४४ | ४३ | |
| कर्कन्धूः | १ | १७६ | १७५ | १७३ | काण्डः | ५ | ९ | ८ | |
| कर्जूरः | १० | | | ८ | काण्डम् | ५ | | | ८ |
| कर्णः | ५ | ४५ | ४२ | ४२ | कादम्बः | ७ | १६ | १६ | १६ |
| कर्दमः | ७ | ४४ | ४० | ४० | कामिः | १ | ५२ | ५२ | ५२ |
| कर्पूरः | १० | | | ८ | कारिः | १ | ५६ | ५६ | ५६ |
| कर्म | ६ | ७७ | ७३ | ७३ | कारुः | १ | ८५ | | ८५ |
| कर्वः | ८ | १३४ | | १३१ | कार्पासः | ९ | | | ९९ |
| कर्वरः | ८ | ५२ | | ४७ | कार्षकः | ३ | १० | १० | १० |
| कर्वरी | ८ | | | ४७ | कार्षिः | १ | ५४ | ५४ | ५४ |
| कर्षकः | ३ | | | १० | काषिः | १ | ५२ | ५२ | ५२ |
| कर्षूः | १ | १६४ | १६३ | १६२ | काष्ठम् | ६ | ३० | २७ | २७ |
| कलत्रम् | ८ | | | ५७ | कासारः | ८ | | | ६९ |
| कलभः | ७ | | | २२ | कासूः | १ | १६८ | १६७ | १६६ |
| कलमः | ७ | | | ४० | किकिः | १ | २५ | २६ | २६ |
| कलषः | ९ | ३ | | | किङ्किणीका | ३ | ३६ | ३५ | ३६ |
| कलापकः | ३ | ५ | ५ | ५ | किशारुः | १ | ८८ | | ८८ |
| कलिलम् | ८ | | | १०४ | किम् | ७ | ४८ | ४४ | ४४ |
| कलुषः | ९ | १७ | | १५ | किरणः | ५ | | २६ | २६ |
| कल्कः | ३ | १८ | १७ | १८ | किरणम् | ५ | २९ | | |
| कवसः | १० | | | १० | किरिः | १ | ७१ | ७१ | ७१ |
| कवाकः | ३ | ३४ | ३३ | ३४ | किरीटः | ५ | | ३ | |
| कविः | १ | ४५ | | ४५ | किरीटम् | ५ | ४ | | ३ |
| कशेरूः | १ | १७१ | १७० | १६९ | किशोरः | ८ | ३२ | ३० | ३० |
| कश्मीरः | ८ | ७९ | | ७३ | कीनाशः | ९ | १ | | १ |

| शब्दः | पादः | सू(१) | सू(२) | सू(३) | शब्दः | पादः | सू(१) | सू(२) | सू(३) |
|---|---|---|---|---|---|---|---|---|---|
| कीर्तिः | १ | ४६ | ४६ | ४६ | कुन्दम् | ६ | ५२ | | |
| कुक्कुरः | ८ | २३ | २३ | २३ | कुपिन्दः | ६ | | ४७ | |
| कुक्षः | ९ | | | २८ | कुप्रम् | ८ | ५१ | | ४६ |
| कुक्षिः | १ | | ११ | ११ | कुमारः | ८ | ७३ | | ६८ |
| कुटपः | ७ | ९ | ९ | ९ | कुरङ्गः | ३ | | | ६० |
| कुटरुः | १ | १५६ | १५६ | १५५ | कुररः | ८ | ६८ | | ६३ |
| कुटिः | १ | ७१ | ७१ | ७१ | कुरीरः | ८ | | | ७४ |
| कुटीरः | ८ | ७७ | | | कुरीरम् | ८ | ८० | | |
| कुटीरम् | ८ | ७८ | | ७२ | कुरुः | १ | १०८ | १०९ | १०८ |
| कुठिः | १ | ७२ | | | कुलालः | ८ | १२० | | ११७ |
| कुडः | ५ | ९ | ८ | ८ | कुल्फः | ७ | १३ | १३ | १३ |
| कुडाकुः | १ | १४९ | १५० | १४९ | कुविन्दः | ६ | ५० | ४७ | ४७ |
| कुड्रिः | १ | | ७२ | ७२ | कुशलम् | ८ | ११४ | | |
| कुड्मलम् | ८ | | | १२२ | कुषपः | ७ | ९ | | |
| कुडचम् | ८ | २० | २० | २० | कुषाकुः | १ | १४९ | १५० | १४९ |
| कुणपः | ७ | | १० | १० | कुषितम् | ६ | २४ | २१ | २१ |
| कुणपम् | ७ | १० | ११ | ११ | कुष्ठः | ६ | ३० | | |
| ,, | ७ | ११ | | | कुष्ठम् | ६ | | २७ | २७ |
| कुणालम् | ८ | १२० | | ११७ | कुष्मलम् | ८ | | | १२२ |
| ,, | ८ | १२२ | | | कुसितम् | १० | | | १२ |
| कुणिः | १ | २१ | २२ | | कुसीदम् | १० | | | १२ |
| कुणिन्दः | ६ | ४९ | ४६ | ४६ | कुसुण्त्रः | १० | | | १२ |
| कुण्ठः | ५ | ७ | ६ | ६ | कुसुमम् | १० | | | १२ |
| कुण्डम् | ५ | ९ | ८ | | कुसुम्भः | १० | | | १२ |
| कुण्डलम् | ८ | ११२ | | १०९ | कुसूलः | १० | | | १२ |
| कुण्डा | ५ | | | ८ | कूचः | ४ | | | ३ |
| कुत्सितम् | ६ | | २१ | २१ | कूचम् | ४ | ३ | | |
| कुद्रुः | १ | १६२ | | | कूर्चौ | ४ | | ३ | |
| कुध्रम् | ८ | | ४६ | | कूपः | ७ | ५ | ५ | ५ |
| कुन्दः | ६ | | ४९ | | कृकवाकुः | १ | ९० | | ९० |

| शब्दः | पादः | सू(१) | सू(२) | सू(३) | शब्दः | पादः | सू(१) | सू(२) | सू(३) |
|---|---|---|---|---|---|---|---|---|---|
| कृच्छ्रम् | ८ | ४२ | ३८ | ३८ | क्रथिकः | ३ | १६ | १५ | १६ |
| कृणिः | १ | | | २२ | क्रान्तुम् | ७ | ४९ | ४५ | ४५ |
| कृणुः | १ | १४० | १४१ | १४० | क्रिमिः | १ | ४९ | ४९ | ४९ |
| कृत्तिका | ३ | २९ | २८ | २९ | क्रुत्वा | ६ | ७३ | ६९ | ६९ |
| कृत्सः | ९ | | | २५ | क्रूरः | ८ | ४२ | ३८ | ३८ |
| कृत्स्नम् | ५ | ५२ | ४९ | ४९ | क्रोष्टा | १ | १२१ | १२२ | १२१ |
| कृदरः | ८ | १०५ | | ९९ | क्लेदा | ६ | ५९ | ५५ | ५५ |
| कृन्तत्रम् | ८ | ६५ | | ६० | क्लेदुः | १ | ९४ | | ९४ |
| कृपणः | ५ | | २४ | | क्वणालम् | ८ | | | ११९ |
| कृपाणः | ५ | | ३३ | | क्षत्ता | २ | १ | १ | १ |
| कृपीटम् | ५ | | | ३ | ,, | २ | ३ | ३ | ३ |
| कृविः | १ | २५ | २६ | २६ | क्षत्रम् | ८ | ९४ | | ८८ |
| कृशानुः | १० | | | १० | क्षपा | ७ | ७ | | |
| कृषकः | ३ | १० | १० | १० | क्षान्तुम् | ७ | ४९ | ४५ | ४५ |
| कृषिः | १ | ४७ | ४७ | ४७ | क्षित्वा | ६ | ७३ | ६९ | ६९ |
| कृषिकः | ३ | १२ | | १२ | क्षिपकः | ३ | ५ | ५ | |
| कृष्णः | ५ | ४० | ३७ | ३७ | क्षिपणिः | १ | ६ | ७ | ७ |
| कृसरः | ८ | | | ५३ | क्षिपणुः | १ | १३८ | १३९ | १३८ |
| कृसरम् | ८ | ५८ | | | क्षिपण्युः | १ | १३६ | १३७ | १३६ |
| केतुः | १ | १२५ | १२६ | १२५ | क्षिप्रम् | ८ | ३३ | ३१ | ३१ |
| केवलः | ८ | | | १११ | क्षीरम् | ८ | ८१ | | ७५ |
| केवलम् | ८ | ११४ | | | क्षुद्रः | ८ | ३३ | ३१ | ३१ |
| केशः | ९ | २ | | | क्षुरः | ८ | ५१ | ४६ | ४६ |
| केशाः | ९ | | | २ | क्षेमम् | ७ | ३० | २६ | २६ |
| कोकिलः | ८ | | | १०४ | क्षौमम् | ७ | ३० | २६ | २६ |
| कोमलः | ८ | ११९ | | ११६ | खजपम् | ७ | ९ | ९ | ९ |
| कोशलः | ८ | ११२ | | १०९ | खजाकः | ३ | ३१ | ३० | ३१ |
| कोष्ठः | ६ | | | २९ | खट्वा | ८ | | | १२७ |
| कोष्ठम् | ६ | ३२ | २९ | | खड्गः | ३ | ७१ | ६७ | ६७ |
| क्रतुः | १ | १२९ | १३० | १२९ | खण्डः | ५ | ९ | ८ | ८ |

| शब्दः | पादः | सू(१) | सू(२) | सू(३) |
|---|---|---|---|---|
| खदिरः | ८ | २९ | २७ | २७ |
| खनकः | ३ | ५ | ५ | |
| खनिः | १ | ६७ | ६७ | ६७ |
| खफः | ७ | | | ७ |
| खरुः | १ | ११९ | १२० | ११९ |
| खर्जूः | १ | १६४ | १६३ | १६२ |
| खर्जूरः | १० | | | ८ |
| खलतः | ६ | १९ | १६ | १६ |
| खलूषः | ९ | | | १९ |
| खष्पम् | ७ | | ७ | |
| खात्रम् | ८ | ८७ | | ८१ |
| खिदिरः | ८ | २८ | २६ | २६ |
| खिद्रः | ८ | | | ३१ |
| खिद्रम् | ८ | ३३ | ३१ | |
| खुरः | ८ | ५१ | ४६ | ४६ |
| गङ्गा | ३ | ६४ | ६१ | ६१ |
| गडन्तः | ६ | २२ | १९ | |
| गडम्बः | ७ | १५ | १५ | |
| गण्डः | ५ | ९ | ८ | ८ |
| गण्डयन्तः | ६ | | | १९ |
| गण्डयित्नुः | १ | १३९ | | |
| गण्डिलम् | ८ | | | १०४ |
| गण्डोलः | ८ | ११० | | १०७ |
| गदयित्नुः | १ | १३९ | १४० | १३९ |
| गन्तुः | १ | १२१ | १२२ | १२१ |
| गन्धयित्नुः | १ | | १४० | |
| गभीरः | ८ | ८२ | | |
| गभीरम् | ८ | | | ७६ |
| गमकः | १० | | | १३ |
| गमथः | ६ | ४१ | ३८ | ३८ |

| शब्दः | पादः | सू(१) | सू(२) | सू(३) |
|---|---|---|---|---|
| गमी | ६ | ६१ | ५७ | ५७ |
| गमेणुः | १ | १३२ | १३३ | १३२ |
| गम्भीरः | ८ | ८२ | | |
| गम्भीरम् | ८ | | | ७६ |
| गरभः | ७ | २३ | १८ | १८ |
| गरुत् | ६ | १ | १ | १ |
| गर्गः | ३ | ६८ | ६५ | ६५ |
| गर्तः | ६ | ७ | ७ | ७ |
| गर्दभः | ७ | २२ | १८ | १८ |
| गर्भः | ७ | २८ | २४ | २४ |
| गर्मुत् | ६ | २ | २ | २ |
| गर्वः | ८ | १३४ | | १३१ |
| गर्वरः | ८ | ५२ | ४७ | |
| गर्वरी | ८ | ५२ | | |
| गह्वरम् | ८ | ५४ | | ४९ |
| गातुः | १ | १२४ | १२५ | १२४ |
| गात्रम् | ८ | ९० | | ७९ |
| ,, | ८ | | | ८४ |
| गाथा | ६ | ३२ | २९ | २९ |
| गान्तुम् | ७ | ४९ | ४५ | ४५ |
| गान्त्रम् | ८ | ८५ | | |
| गारित्रम् | ८ | ९६ | | ९० |
| गिरिः | १ | ७१ | ७१ | ७१ |
| गुडः | ५ | ९ | ८ | ८ |
| गुण्ठः | ५ | ७ | | |
| गुत्सः | ९ | | | २८ |
| गुरुः | १ | १०८ | १०९ | १०८ |
| गुल्फः | ७ | १४ | | १४ |
| गुल्फम् | ७ | | १४ | |
| गुल्मः | ७ | ३६ | ३२ | ३२ |

| शब्दः | पादः | सू(१) | सू(२) | सू(३) | शब्दः | पादः | सू(१) | सू(२) | सू(३) |
|---|---|---|---|---|---|---|---|---|---|
| गुहः | ९ | | | १०२ | घृणिः | १ | २१ | २२ | २२ |
| गुहा | ९ | | | १०२ | घृतम् | ६ | ९ | ९ | ९ |
| गूथः | ६ | | | ३७ | घृष्विः | १ | २५ | २६ | २६ |
| गूथम् | ६ | ४० | ३७ | | घोषयित्नुः | १ | १३९ | १४० | |
| गृत्सः | ९ | | | २९ | चकोरः | ८ | ३१ | २९ | २९ |
| गृधुः | १ | १०७ | १०८ | १०७ | चक्रः | ८ | | | १०२ |
| गृध्रः | ८ | ४७ | ४२ | ४२ | चक्रम् | ८ | १०८ | | |
| गृहयाय्यः | ८ | | | १ | चक्रधरः | ८ | ४५ | ४० | ४० |
| गेष्णः | ५ | | ४८ | | चक्रुः | १ | १०६ | १०७ | १०६ |
| गेष्णम् | ५ | ५१ | | | चक्षुः | ९ | | | ४० |
| गेष्णुः | ५ | | | ४८ | चङ्कुरः | ८ | २१ | २१ | २१ |
| गोत्रम् | ८ | ९४ | | ८८ | चणः | ९ | | | ५८ |
| गोधूमः | ७ | ४६ | ४२ | ४२ | चण्डालः | ८ | १२१ | | ११८ |
| गोपीथः | ६ | ३७ | ३४ | ३४ | चण्डिलः | ८ | | | १०४ |
| गोमायुः | १ | ८५ | | | चण्पा | ७ | ७ | ७ | ७ |
| गौः | २ | ११ | ११ | ११ | चतुरः | ८ | २१ | २१ | २१ |
| ग्रन्थिः | १ | ६७ | ६७ | ६७ | ,, | ८ | ८३ | | ७७ |
| ग्रहणिः | १ | ८० | ८१ | ८० | चत्वरः | ८ | | | ४७ |
| ग्रामः | ७ | ३२ | २८ | २८ | चत्वरम् | ८ | ५२ | | |
| ग्रीवा | ८ | १३३ | | १३० | चत्वारः | ८ | | | ७७ |
| ग्रीष्मः | ७ | ४१ | ३७ | ३७ | चत्वालः | १० | | | १ |
| ग्लानिः | १ | २० | २१ | २१ | चन्द्रमाः | ९ | | | ८५ |
| ग्लौ | २ | १३ | १३ | | चन्दिरः | ८ | | २६ | २६ |
| ग्लौः | २ | १२ | १२ | १२ | चन्द्रः | ८ | ३३ | ३१ | ३१ |
| घतनः | ६ | ८८ | | | चपटः | ५ | ३ | | २ |
| घरः | ८ | १०९ | | १०३ | चपलः | ८ | | | ११३ |
| घर्मः | ७ | ४० | ३६ | ३६ | चपलम् | ८ | ११६ | | |
| घातनः | ६ | | ८४ | ८३ | चमटः | ५ | ३ | २ | २ |
| घासिः | १ | ५७ | ५७ | ५७ | चमरः | ८ | ६७ | | ६२ |
| घूर्णिः | १ | | | २२ | चमसः | ९ | | | ४३ |

| शब्दः | पादः | सू(१) | सू(२) | सू(३) | शब्दः | पादः | सू(१) | सू(२) | सू(३) |
|---|---|---|---|---|---|---|---|---|---|
| चमूः | १ | १६४ | १६३ | १६२ | छगलम् | ८ | | | ११६ |
| चरकः | ३ | ४९ | ४७ | ४७ | छत्रम् | ८ | ८४ | | ७८ |
| चरमः | ७ | ५१ | ४७ | ४७ | छत्वर | ८ | | | ४९ |
| चरण्युः | १ | | १२१ | | छत्वरम् | ८ | ५४ | | |
| चरिः | १ | ६७ | ६७ | | छन्दः | ९ | | | ७६ |
| चरित्रम् | ८ | ९७ | | ९१ | छविः | १ | २५ | २६ | २६ |
| चरुः | १ | ९१ | | ९१ | छागः | ३ | ७१ | ६७ | ६७ |
| चरुत्रम् | ८ | | | ९२ | छाया | ८ | १२ | | १२ |
| चर्म | ६ | ७७ | ७३ | | छित्वरः | ८ | ५४ | | ४९ |
| चर्षणिः | १ | ३ | ४ | ४ | छिदिः | १ | ४७ | ४७ | ४७ |
| चषालः | १० | | | १ | ,, | १ | ७१ | ७१ | ७१ |
| ,, | १० | | | १५ | छिदिरः | ८ | | २६ | २६ |
| चाटु | १ | ८७ | | | छिदिरिम् | ८ | २८ | | |
| चाटुः | १ | | | ८७ | छिद्रम् | ८ | ३३ | ३१ | ३१ |
| चारित्रम् | ८ | ९७ | | ९१ | जगत् | ६ | ५ | ५ | ५ |
| चारु | १ | ८७ | | | जगती | ६ | ५ | ५ | |
| चारुः | १ | | | ८७ | जवनम् | ५ | ३१ | २८ | २८ |
| चित्रम् | ८ | ९१ | | —८५ | जघ्नुः | १ | १०६ | १०७ | १०६ |
| चित्रभानुः | १ | १४२ | १४३ | १४२ | जङ्घा | ३ | ७२ | ६८ | ६८ |
| चीरः | ८ | ४८ | ४३ | | जजान | ८ | ४५ | ४० | |
| चीरम् | ८ | | | ४३ | जटा | ५ | ५ | ४ | ४ |
| चीवरम् | ८ | ५४ | | ४९ | जटायुः | १ | ८६ | | |
| चुक्रः | ८ | ३५ | ३२ | ३२ | जठरम् | ८ | १०३ | | ९७ |
| चुध्रम् | ८ | | ४६ | | जतु | १ | | १०३ | १०२ |
| चुप्पम् | ७ | ३ | ३ | | जतुः | १ | १०२ | | |
| चुप्रम | ८ | ५१ | | | जत्रु | १ | | | १५७ |
| चूर्णिः | १ | | | २२ | जत्रुः | १ | | १५८ | १५८ |
| चेटिः | १ | ४५ | ४५ | | जनकः | ३ | ५ | ५ | ५ |
| च्यौत्नः | १० | | | १३ | जनयन्तः | ६ | | | १९ |
| छगलः | ८ | ११९ | | | जनयित्नुः | १ | १३९ | १४० | |

| शब्दः | पादः | सू(१) | सू(२) | सू(३) | शब्दः | पादः | सू(१) | सू(२) | सू(३) |
|---|---|---|---|---|---|---|---|---|---|
| जनिः | १ | | ५७ | ५७ | जिह्वा | ८ | १३३ | | १३० |
| जनित्वम् | १० | | | १३ | जीमूतः | ६ | १२ | ११ | ११ |
| जनिमा | ६ | ८१ | ७७ | ७७ | जीरः | ८ | ४६ | ४१ | ४१ |
| जनुः | ९ | | | ३६ | जीरदानुः | १ | १६३ | | |
| जन्तुः | १ | १२४ | १२५ | १२४ | जीर्णः | ५ | ४५ | ४२ | ४२ |
| जन्म | ६ | ७७ | ७३ | ७३ | जीर्विः | १ | २३ | २४ | २४ |
| जन्युः | १ | १३३ | १३४ | १३३ | जीवथः | ६ | ४१ | ३८ | ३८ |
| जम्बूः | १ | १७६ | १७५ | १७३ | जीवन्तः | ६ | २१ | १८ | १८ |
| जयन्तः | ६ | २२ | १९ | | जीवन्ती | ६ | २१ | १८ | |
| जयन्ती | ६ | २२ | १९ | | जीवातुः | १ | १३१ | १३२ | १३१ |
| जयाय्यः | ८ | | | १ | जीविः | १ | ७९ | | |
| जरयाणः | ५ | | २९ | | जुहुराणः | ५ | ३७ | ३४ | ३४ |
| जरसानः | ५ | ३२ | | २९ | जूर्णिः | १ | १७ | १८ | १८ |
| जरन्तः | ६ | २० | १७ | १७ | जैवात्रिकः | ३ | १ | १ | १ |
| जरायुः | १ | | | ८६ | ज्यानिः | १ | १७ | १८ | १८ |
| ,, | १ | | | ८८ | ज्योतिः | ९ | | | ३१ |
| जरूथम् | ६ | ३४ | ३१ | ३१ | झर्झरीकम् | ३ | ३८ | | |
| जर्जरीकम् | ३ | | ३७ | ३८ | तक्रम् | ८ | ३३ | ३१ | ३१ |
| जर्तः | ६ | २८ | २५ | २५ | तक्षकः | ३ | ५ | ५ | ५ |
| जसुरिः | १ | | ८ | ८ | तक्षा | ६ | ५४ | ५१ | ५१ |
| जहकः | ३ | ६ | ६ | ६ | तडाकम् | २ | ३४ | ३३ | ३४ |
| जागृविः | १ | २३ | २४ | २४ | तडित् | ६ | ४ | ४ | ४ |
| जानिः | १ | ५७ | | | तण्डुलः | १० | | | १५ |
| जानुः | १ | ८७ | | ८७ | तण्डुलाः | ८ | | | १२३ |
| जामाता | २ | ३ | ३ | ३ | ततम् | ६ | ८ | ८ | ८ |
| जाया | ८ | १३ | | १३ | ततरुः | १ | १०६ | | |
| जायुः | १ | ८५ | | ८५ | तत्रुः | १ | | १०७ | |
| जिगत्नुः | १ | १४१ | १४२ | १४१ | तद् | ६ | ४६ | ४३ | ४३ |
| जित्वा | ६ | ७३ | ६९ | ६९ | तनयः | ८ | १० | | १० |
| जिव्रिः | १ | | ८० | ७९ | तनुः | १ | ९१ | | ९१ |

